# चम्पूरामायणम् ।

विदर्भाधिपतिना

श्रीभोजनृपतिना विरचितम्

बि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

विरचितया व्याख्यया समलङ्कृतं तेनैव

संस्कृत्य प्रकाशितम् ।

द्वितीयसंस्करणम्

कलिकातानगरे

सरस्वतीयन्त्रे

मुद्रितम् ।

खृं १८८६ ।

# चम्पूरामायणम् ।



लक्ष्मीं तनोतु सुतरामितरानपेक्ष-
मङ्घ्रिद्वयं निगमशाखिशिखाप्रवालम् ।
हैरम्बमम्बुरुहडम्बरचौर्य्यनिघ्नं
विघ्नाद्रिभेदशतधारधुरन्धरं नः ॥ १ ॥

उच्चैर्गतिर्जगति सिध्यति धर्मतश्चेत्
तस्य प्रमा च वचनैः कृतकेतरैश्चेत् ।
तेषां प्रकाशनदशा च महीसुरैश्चेत्
तानन्तरेण निपतेत् क्व नु मत्प्रणामः ॥ २ ॥

---

लक्ष्मीमिति । इतरान् विघ्नहरान् देवान् न अपेक्षते इति तथोक्तम्, अन्याननपेक्ष्य स्वय विघ्नहरं, निगमः वेद एव शाखी वृक्षः तस्य शिखा शिरोभागः वेदान्त इत्यर्थः. तस्य प्रवालं भूषणभूतकिशलयम्, अम्बुरुहाणां पद्मानां डम्बरस्य सम्पद इति यावत् चौर्य्यनिघ्नं चौर्य्यपरं कमलादपि समधिकशोभमित्यर्थः, विघ्ना एव अद्रयः पर्वताः तेषां भेदे नाशे शतं धारा तैक्ष्ण्यं यस्य तादृशानां विघ्ननाशकानामिति यावत् धुरन्धरम् अग्रग हैरम्बं गाणपत्यम् अङ्घ्रिद्वयं चरणयुगलं नः अस्माकं लक्ष्मीं श्रियं सुतरां भृशं तनोतु विस्तारयतु । वसन्ततिलकं वृत्तं, ज्ञेयं वसन्ततिलकं तभजा जगौ ग इति तल्लक्षणात् ॥ १ ॥

उच्चैरिति । चेत् यदि जगति धर्मतः धर्मेण उच्चैः उन्नता गतिः परित्राणमिति भावः. सिध्यति सम्पद्यते, चेत् यदि कृत-

वाल्मीकिगीतरघुपुङ्गवकीर्त्तिलेशै-
स्तृप्तिं करोमि कथमप्यधुना बुधानाम्।
गङ्गाजलैर्भुवि भगीरथयत्नलब्धैः
किं तर्पणं न विदधाति जनः पितॄणाम्॥ ३॥
गद्यानुबद्धरसमिश्रितपद्यसूक्ति-
र्हृद्या हि वाद्यकलया कलितेव गीतिः।

---

कीतरै अकल्पितैः अपौरुषेयैरिति यावत् वचनैः श्रुतिभिरिति भावः तस्य धर्मस्य प्रमा तत्त्वतो ज्ञानमिति यावत् भवेदिति शेषः, तथा चेत् यदि तेषां वचनानां महीसुरैः भूदेवैः ब्राह्मणैरित्यर्थः प्रकाशनदशा प्रकटनावस्था स्यादिति शेषः, तदा तान् ब्राह्मणान् अन्तरेण विना परित्यज्येति भावः, क्व नु कुत्र स्थाने एव मम प्रणामः निपतेत्? नैव कुत्रापि स्थाने इत्यर्थः। यज्ञादिसकलधर्मप्रतिपादनश्रुतिप्रकटनपरान् ब्राह्मणान् प्रणमामीत्यर्थः। वसन्ततिलकं वृत्तम् ॥२॥

वाल्मीकीति। अधुना वाल्मीकिना गीता रघुपुङ्गवानां रघुवंशीयश्रेष्ठभूपतीनां या कीर्त्तयः तासां लेशैः बिन्दुभिः कथमपि बुधानां तृप्तिं करोमि सम्पादयामि। तथाहि, भुवि पृथिव्यां जनः भगीरथस्य यत्नेन प्रयासेन लब्धैः सुलभैरिति भावः गङ्गाजलैः पितॄणां तर्पणं किं न विदधाति न करोति? अपितु करोत्येवेत्यर्थः। भगीरथानीतगङ्गाजलेन लोकस्य पितृतर्पणमिव वाल्मीकिविरचितरामायणस्य यत्किञ्चित्तात्पर्यवर्णनेन ममापि सुधीवर्गसन्तोषणमिति भावः। वसन्ततिलकं वृत्तम्। प्रतिवस्तूपमालङ्कारः। तदुक्तं दर्पणे। प्रतिवस्तूपमा सा स्याद् वाक्ययोर्गम्यसाम्ययोः। एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथगिति ॥३॥

गद्येति। हि यतः गद्येनानुबद्धा संयुता रसमिश्रिता रसवती

तस्मादृधातु कविमार्गविदां सुखाय
चम्पूप्रबन्धरचनां रसना मदीया ॥ ४ ॥
वाचं निशम्य भगवानथ नारदस्य
प्राचेतसः प्रवयसां प्रथमः कवीनाम्।
माध्यन्दिनाय सवनाय महर्षिसेव्यां
पुण्यामवाप तमसान्तमसां निहन्त्रीम् ॥ ५ ॥

तत्र कश्चन क्रौञ्चमिथुनादेकं पञ्चशरशरानुविद्धमपि व्याधेनानुविद्धं निध्यायतः बद्धानुकम्पस्य भगवतो वाल्मीकेर्वदनारविन्दाच्छन्दोमयी काचिदेवं निःससार सरस्वती (क)।

---

पद्यसूक्तिः पद्यरूपं सुवचनं वाद्यकलया वादित्वांशेन कलिता सङ्गता गीतिरिव हृद्या मनोहारिणी सहृदयानामिति शेषः तस्मात् मदीया रसना जिह्वा कविमार्गविदां कविरीतिविदुषां सुखाय चम्पूप्रबन्धरचनां गद्यपद्यमयं वाक्यं चम्पूरित्यभिधीयते इत्युक्तलक्षणसन्दर्भरचनां विदधातु करोतु। वसन्ततिलकं वृत्तम् ॥४॥

वाचमिति। अथानन्तरं को न्वस्मिन् साम्प्रतं लोके इत्यादिप्रश्नवाक्यात् परमित्यर्थः प्रवयसां वृद्धानां कवीनां प्रथमः आद्यः भगवान् प्राचेतसः वाल्मीकिः नारदस्य वाचं रामगुणकीर्तनरूपमिति भावः निशम्य श्रुत्वा माध्यन्दिनाय सवनाय मध्याह्नस्नानाय महर्षिसेव्यां तमसाम् अज्ञानानां निहन्त्रीं नाशयित्रीं पुण्यां पवित्रां तमसां नदीं अवाप प्राप। वसन्ततिलकं वृत्तम् ॥५॥

(क) तत्रेति तत्र तमसायां तत्तीरे इत्यर्थः क्रौञ्चमिथुनात् बकयुगलात् एकं बकं पञ्चशरस्य कामस्य शरेण अनुविद्धं प्रहृतं, व्याधेन केनचित् मृगयुना अनुविद्धं निहतमित्यर्थं

मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥ ६ ॥

तदनु समयोचितकृत्यं निर्वर्त्य (ख) स्वाश्रममुपगतवति सति भगवति वाल्मीकौ ।

---

निध्यायतः पश्यतः अतएव बद्धानुकम्पस्य सञ्जातकृपस्य । छन्दोमयी अनुष्टुभा छन्दसा विरचितेति यावत् निःससार उच्चचार । सरस्वती वाणी ।

मा निषादेति । रे निषाद ! व्याध ! त्वं शाश्वतीः समाः वत्सरान् चिरकालमिति यावत् कदापीति भाव प्रतिष्ठां सुखस्थितिं मा अगमः न प्राप्नुहि, यत् यतः क्रौञ्चमिथुनात् वकद्वन्द्वात् एकं काममोहितं कामासक्तं वकमिति शेष अवधीः हतवानसि । अनेन च शापवचनेनाद्यापि व्याधजाते सुखस्थितिर्न दृश्यते इति द्रष्टव्यम् । अस्य च प्राचीना अपरार्थद्वयमाचक्षते । तथाच, हे निषाद ! मा लक्ष्मीः तस्याः निषीदत्यस्मिन्निति व्युत्पत्त्या निषादः अन्यत्र दृश्यते तदृक्षस्थो, हे लक्ष्मीपते राम इति यावत् त्वं शाश्वतीः समाः चिरकालमित्यर्थः प्रतिष्ठां सुख्यातिम् अगमः प्राप्तवानसि, यत् यतः क्रौञ्चमिथुनात् मन्दोदरीरावणरूपादिति भावः एकं काममोहितं रावणमिति भावः अवधीः हतवानसि । इत्येकोऽर्थः । अपरञ्च, हे निषाद ! चण्डालरूप ! रावण इति भावः त्वं शाश्वतीः समाः चिरकालं प्रतिष्ठां मा अगमः न प्राप्नुहि, यत् यतः क्रौञ्चमिथुनात् सीतारामरूपादिति भावः एकं काममोहितं राममिति भावः अवधीः वधसमं क्लेशं प्रापितवानसीति भाव इति । प्रथमतृतीययोः माङ्योगे अमागमनिषेधेऽपि अगम इति आर्षत्वात् समाधेयम् । अनुष्टुब्वृत्तम् ॥६॥

(ख) तदन्विति तदनु तदनन्तरम् । समयोचितकृत्यं मध्याह्नविहितसन्ध्यावन्दनादिकमित्यर्थः । निर्वर्त्य सम्पाद्य ।

वाणी विलासमपरत्र कृतोपलम्भ-
मम्भोजभूरसहमान इवाविरासीत्।
आभाति यत्कृतिरनेकविधप्रपञ्च-
व्याजेन्द्रजालविधिसाधकपिच्छिकेव ॥ ७ ॥

तत. परमहर्षेण महर्षिणा विधिवदभ्यर्चित: परमेष्ठी मध्यमलोकेऽपि स्ववृत्तं प्रकाशयितुं किल भवन्तमेवोपदिश्यमानया भारत्या रामचरितं यथाश्रुतं व्याक्रियतामिति व्याहृत्यान्तरधात् (ग)।

---

वाणीति। यत्कृति· यस्य कृतिः सृष्टिरित्यर्थ· अनेकविधः बहुविधः प्रपञ्च चराचरविस्तारः व्याजश्छलं यस्य तथाभूतः य इन्द्रजालविधि· तस्य साधिका सम्पादयित्री पिच्छिकेव लोकमोहनः वाग्विशेष इव आभाति राजते स अम्भोजभू· पद्मयोनिर्ब्रह्मेत्यर्थः अपरत्र अन्यस्मिन् स्वतोभिन्ने जने इति भावः कृतः उपलम्भः आश्रयो येन तादृश वाण्याः सरस्वत्याः स्वपत्न्या इति भावः विलासं विभ्रमम् असहमान इव आविरासीत् प्रादुर्बभूव, महर्षे. समीपमाजगामेति यावत्। अत्र वाक्पतेरन्यस्य तत्पतित्वदर्शने असहनत्वं युक्तमेवेति प्रतीतेरुत्प्रेक्षालङ्कारोऽयम्। तदुक्तं दर्पणे, भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मनेति। द्वितीयार्द्धे चोपमालङ्कार·। तदुक्त दर्पणे। साम्य वाच्यमवैधर्म्य वाक्यैक्ये उपमाद्वयोरिति। तदनयोः संसृष्टिः। तदुक्तं दर्पणे। मिथोऽनपेक्षयैतेषां स्थिति संसृष्टिरुच्यते इति। वसन्ततिलक वृत्त ॥७॥

(ग) तत इति ततः ब्रह्मण आविर्भावानन्तर परमहर्षेण अतिप्रीतेन। मध्यमलोके पृथिव्याम्। स्ववृत्त स्वचरितं रामायणमिति भाव·। भारत्या वाण्या। व्याक्रियता वर्ण्यताम्। व्याहृत्य उक्त्वा। अन्तरधात् अन्तर्हितः।

अथ सरसिजयोनेराज्ञया रामवृत्तं
करबदरसमानं प्रेक्ष्य दृष्ट्या प्रतीच्या ।
शुभमतनुत काव्यं स्वादु रामायणाख्यं
मधुमयभणितीनां मार्गदर्शी महर्षिः ॥८॥

एनं प्रबन्धं प्रणेतुं (घ) लोके कः समर्थ इति चिन्तामुपगतवति सति भगवति वाल्मीकौ ।

उपागतौ मिलितपरस्परोपमौ
बहुश्रुतौ श्रुतिमधुरस्वरान्वितौ ।
विचक्षणौ विविधनरेन्द्रलक्षणौ
कुशीलवौ कुशलवनामधारिणौ ॥ ९ ॥

---

अथेति । अथ ब्रह्मणोऽन्तर्धानानन्तरं मधुमयभणितीनां मधुमयीनां वाचां मार्गदर्शी द्रष्टेति महर्षिः सरसिजयोनेः ब्रह्मणः आज्ञया आदेशेन प्रतीच्या दृष्ट्या प्रत्यगदर्शनेन दिव्यदृष्ट्येति भावः रामवृत्तं करबदरसमानं हस्तास्थितबदरीफलतुल्यं प्रेक्ष्य दृष्ट्वा विचार्येति यावत् शुभं मङ्गलकरं स्वादु मधुरं रामायणाख्यं रामस्य अयनं चरितं यस्मिन् तत् रामायणम् आख्या यस्य तथोक्तं काव्यं रसपूर्णसन्दर्भविशेषं, काव्यं रसात्मकं वाक्यमिति दर्पणः । अतनुत विस्तारयामास । मालिनीवृत्तं, ननमयययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात् ॥८॥

(घ) प्रणेतुमभिनेतुम् ।

उपागताविति । मिलिता सङ्गता परस्परस्य उपमा सादृश्यं ययोः तथाभूतौ, बहुश्रुतौ विविधज्ञानसम्पन्नौ, श्रुतिमधुरेण स्वरेण अन्वितौ, विचक्षणौ सुदक्षौ, विविधानि नरेन्द्रस्य राज्ञः लक्षणानि चिह्नानि ययोः तथोक्तौ, कुशलवनामधारिणौ कुशः लव इत्याख्या-

एतौ मुनिः परिगृह्य स्वकृतिम् अपाठयत्। तौ पुनः इतस्ततो गायमानौ दृष्ट्वा रामः प्रहृष्टमनाः स्वभवनमानीय भ्रातृभिः सह निजचरितं गातुमन्वयुङ्क्त। ततश्च,

छन्दोमयीनां निलयस्य वाचा-
मन्तेवसन्तौ मुनिसत्तमस्य।
एतौ कुमारौ रघुवीरवृत्तं
यथाक्रमङ्गातुमुपक्रमेताम्॥ १० ॥

अस्ति प्रशस्ता जनलोचनाना-
मानन्दसन्दायिषु कोसलेषु।
आज्ञासमुत्सारितदानवानां
राज्ञामयोध्येति पुरी रघूणाम्॥ ११ ॥

---

वन्तौ, कुशीलवौ नटौ, उपागतौ उपस्थितौ। रुचिरावृत्तं, जभौ जसौ गीतिरुचिरा चतुर्ग्रहैरिति तल्लक्षणात्॥९॥

छन्दोमयीनामिति। छन्दोमयीनां छन्दसा विरचितानां वैदिकीनां वा वाचां निलयस्य आश्रयस्य मुनिसत्तमस्य महर्षेः वाल्मीकेरिति भावः अन्तेवसन्तौ शिष्यौ, शिष्यान्तेवासिनौ छात्रे इत्यमरः। एतौ कुमारौ रघुवीराणां वृत्तं चरितं यथाक्रमं गातुम् उपक्रमेताम् आरब्धवन्तावित्यर्थः। अतीते लोट्प्रयोगश्चिन्त्यः। इन्द्रवज्रोपेन्द्रवृत्तयोरुपजातिवृत्तं, स्यादिन्द्रवज्रा यदि तौ जगौ ग इति, उपेन्द्रवज्रा प्रथमे लघौ सेति, अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता इति तल्लक्षणात्॥१०॥

अस्तीति। जनलोचनानाम् आनन्दं सन्ददतीति तथोक्तेषु कोसलेषु जनपदविशेषेषु आज्ञया समुत्सारिता ताड़िता दानवा यैः

तामावसद्दशरथः सुरवन्दितेन
सङ्क्रन्दनेन विहितासनसंविभागः ।
वृन्दारकारिविजये सुरलोकलब्ध-
मन्दारमाल्यमधुवासितवासभूमिः ॥ १२ ॥

अथास्मिन्ननपत्यतया दूयमानमानसे (ङ) पुत्रार्थं क्रतु-मश्वमेधं विधातुं मन्त्रिभिः सह मन्त्रयमाणे दशरथे सुमन्त्रः प्रहृष्टमना महर्षेरङ्गदेशसङ्गतावग्रहनिग्रहशौ-ण्डस्य (च) विभाण्डकसूनोरवश्यमृष्यशृङ्गस्य प्रभावात् प्रभवो (छ) भविता कुमाराणामिति सनत्कुमारोक्तं पुरावृत्तमस्मै

---

तथाभूतानां रघूणां रघुवंशीयानां राज्ञाम् अयोध्येति प्रशस्ता पुरी राजधानी अस्ति । इन्द्रवज्रावृत्तम् ॥११॥

तामिति । सुरवन्दितेन देवैराराधितेन संक्रन्दनेन इन्द्रेण, संक्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहन इत्यमरः । विहितः कृतः दत्त इति यावत् आसनस्य संविभागः सम्यग्भागः यस्मै तथोक्तः इन्द्रस्यासनार्द्धभागित्यर्थः, वृन्दारकाणां देवानाम् अरयः शत्रवः असुरा इति यावत् तेषां विजये सुरलोकात् प्रीतादिति भावः लब्धस्य मन्दारमाल्यस्य मधुना मकरन्देन वासिता सुरभीकृता वासभूमिः शयनमन्दिरं यस्य तथाभूतः, दशरथः ताम् अयोध्याम् आवसत् अधितष्ठौ । वसन्ततिलकं वृत्तम् ॥१२॥

(ङ) अथेति । अनपत्यतया पुत्ररहितत्वेन । दूयमानमानसे सन्तप्यमानमनसि ।

(च) अङ्गदेशेति अङ्गदेशेषु सङ्गत उपस्थितः यः अवग्रहः वृष्टिप्रतिबन्धः अनावृष्टिरित्यर्थः तस्य निग्रहे निवारणे शौण्डः दक्षः तस्य ।

(छ) प्रभवः उत्पत्तिः ।

दशरथाय कथयामास । सोऽपि सुमन्त्रवचनाच्छान्ताधिः शान्ताकुटुम्बिनं सम्बन्धिन (ज) मुनिमानीय वशिष्ठादिष्टमश्वमेधाध्वरं सरयूरोधसि विधाय तत्र पुत्रीयामिष्टिं (झ) विधिवत्कर्तुमारभत । तदनु हविराहरणाय धरण्यां कृतावतरणाः सर्वे गीर्वाणाः शक्रप्रमुखाश्चतुर्मुखाय दशमुखप्रतानलशोषोष्मसंशोषणमावेद्य तेन सह शरणमिति (ञ) शार्ङ्गधन्वानं मन्वानाः कृतनानाविधप्रस्तुतस्तुतयः क्षीराम्बुराशिमासेदुः (ट) ।

सन्तापघ्नं सकलजगतां शार्ङ्गचापाभिरामं
लक्ष्मीविद्युल्लसितमतसीगुच्छसच्छायकायम् ।

---

(ज) शान्ताधिः निवृत्तमनोव्यथः, पुंस्याधिर्मानसी व्यथेत्यमरः । शान्ताकुटुम्बिनं शान्तायाः अङ्गराजाय दत्तायाः स्वसुतायाः कुटुम्बिनं पतिं सम्बन्धिनं जामातृसम्बन्धवन्तमिति यावत् ।

(झ) अश्वमेधाध्वरम् अश्वमेधाख्यं यज्ञम् । सरयूरोधसि सरय्वाः नद्यास्तीरे । पुत्रीयां पुत्रोत्पादनफलाम् । इष्टिं यज्ञम् ।

(ञ) हविराहरणाय हव्यग्रहणाय । गीर्वाणाः देवाः, गीर्वाणा दानवारय इत्यमरः । शक्रप्रमुखा इन्द्रादयः । चतुर्मुखाय ब्रह्मणे । दशमुखस्य रावणस्य प्रतापानल एव शोषोष्मा तेन संशोषणं सन्तापम् । आवेद्य निवेद्य । शरणं परित्राता, शरणं गृहरक्षित्रोरित्यमरः ।

(ट) कृतेति कृता नानाविधं यथा तथा प्रस्तुता प्रक्रान्ता स्तुतिः यैः तथाभूताः । आसेदुः प्रापुः ।

सन्तापघ्नमिति । त्रिदशानां देवानां परिषत् सभा सकलानां

वैकुण्ठाख्यं मुनिजनमनश्चातकानां शरण्यं
कारुण्याप त्रिदशपरिषत्कालमेघं ददर्श ॥१३॥
क्षीराम्बोधेर्जठरमभितो देहभासा प्ररोहैः
कालोन्मीलत्कुवलयदलाद्वैतमापादयन्तम् ।
आतन्वानं भुजगशयने कामपि क्षौमगौरे
निद्रामुद्रां निखिलजगतीरक्षणे जागरूकाम् ॥१४॥

---

जगतां सन्तापघ्नं दुःखनिवारकं, शार्ङ्गचापाभिरामं शार्ङ्गेण धनुषा मनोहरं, लक्ष्मीरेव विद्युत् तया ललितं राजितं लक्ष्मीमन्तमित्यर्थः, अतसीगुच्छस्य अतसीपुष्पस्तवकस्य सच्छायं समानकान्तिः कायो यस्य तथाभूतं नवीननीरदोपममिति भावः, मुनिजनानां मनांस्येव चातकाः तेषां शरण्यं तृप्तिकरमिति भावः, वैकुण्ठ आख्या यस्य तथोक्तं, कारुण्यानि दया एव आपः सलिलानि यत्र तथाविधं दयानिधिमिति यावत्, कालमेघं कृष्णमेघं ददर्श । मन्दाक्रान्तावृत्तं, मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्ममिति तल्लक्षणात् । अत्रोपमारूपकयोः संसृष्टिः ॥१३॥

क्षीराम्बोधेरिति । क्षीराम्बोधेः क्षीरसागरस्य जठरं कुक्षिम् अभितः समन्तात् देहस्य भासा प्रभाया प्ररोहैः अङ्कुरैः विस्तारैरित्यर्थः कालं कृष्णम् उन्मीलत् विकसत् यत् कुवलयं नीलोत्पलं तस्य दलं पत्रं तस्य अद्वैतम् अभिन्नताम् आपादयन्तं जनयन्तमित्यर्थः, क्षौमगौरे भुजगशयने शेषशय्यायां निखिलजगतीरक्षणे जागरूकां कामपि अनिर्वचनीयां निद्रामुद्रां निद्रया निमीलनम् आतन्वानं सम्पादयन्तमित्यर्थः, कालमेघं ददर्शेति पूर्वेणान्वयः । मन्दाक्रान्तावृत्तम् ॥१४॥

प्रह्लादस्य व्यसनममितं दैत्यवर्गस्य दम्भं
स्तम्भं वक्षःस्थलमपि रिपोर्यौगपद्येन भेत्तुम् ।
बद्धश्रद्ध पुरुषवपुषा मिश्रिते विश्वदृष्टे
दंष्ट्रारोचिर्विशदभुवने रंहसा सिंहवेषे ॥१५॥

नारायणाय नलिनायतलोचनाय
नामावशेषितमहाबलिवैभवाय ।
नानाचराचरविधायकजन्मदेश-
नाभीपुटाय पुरुषाय नमः परस्मै ॥१६॥

इति प्रणम्योत्थितानेतान् स्तुतिरवमुखरितहरिन्मुखान्

---

प्रह्लादस्येति । अमितम् अत्यन्तमित्यर्थः प्रह्लादस्य व्यसनं विपदं दैत्यवर्गस्य दम्भम् अहङ्कारं स्तम्भं स्फाटिकमिति शेषः रिपोः हिरण्यकशिपोः वक्षःस्थलम् अपि यौगपद्येन समकालमित्यर्थः रंहसा बलेन भेत्तुं खण्डयितुं पुरुषवपुषा नरदेहेन मिश्रिते युक्ते विश्वदृष्टे जगताम् अपूर्वत्वेन दर्शनीये इति यावत्, दंष्ट्राणां रोचिर्भिः दीप्तिभिः विशदं शुभ्रं भुवनं यस्य तादृशे सिंहवेषे, बद्धा श्रद्धा अनुरागविशेषः येन तथाभूत न्दसिंहाकृतिं विभ्रतमिति यावत्, इदंशेति पूर्वेणान्वयः । मन्दाक्रान्तावृत्तम् ॥१५॥

नारायणायेति । नलिनमिव पद्ममिव आयते विशाले लोचने यस्य तादृशाय, नाम्ना अवशेषितं महत् बलेः दैत्यपतेर्वैभवं येन तथोक्ताय, नानाचराचराणां जङ्गमानां गोमनुष्यादीनाम् अचराणां वृक्षपर्वतादीनां विधायकस्य स्रष्टुर्ब्रह्मणः इति यावत् जन्मदेशः उत्पत्तिस्थानं नाभीपुटं यस्य तथाभूताय ब्रह्मयोनये इत्यर्थः, परस्मै पुरुषाय नारायणाय नमः । वसन्ततिलकं वृत्तम् ॥१६॥

हरिहयप्रमुखानखिलानमरगणानरुणतामरसविलासचौरैर्लोचनमरीचिवीचिसञ्चारैरानन्दयन्नरविन्दलोचनः (ठ) स्फुटमभाषत ।

अपि कुशलममर्त्याः ! स्वागतं साम्प्रतं वः
प्रमितदनुजदम्भा किं नु दम्भोलिकेलिः ।
अपि धिषणमनीषानिर्मिता नीतिमार्गा-
स्त्रिदशनगरयोगक्षेमकृत्यै क्षमन्ते ॥१७॥

एवं भगवतः कुशलानुयोगपुरःसरीममृतासारसरसां (ड)

---

(ठ) इतीत्यादि । स्तुतीति स्तुतिरवेण स्तोत्रकोलाहलेन मुखरितानि शब्दितानि हरिता दिशा मुखानि यैः तथोक्तान्, हरिहयप्रमुखान् इन्द्रादीन् । अरुणेति अरुणस्य रक्तस्य तामरसस्य उत्पलस्य यः विलासः स्फुरणं तस्य चौराः अपहारकाः तैः रक्तोत्पलविलासवद्भिरित्यर्थः, निदर्शनालङ्कारः । लोचनयोः मरीचीनां मयूखानां वीचिसञ्चारैः तरङ्गप्रसारैः । अरविन्दलोचनः पुण्डरीकाक्षः ।

अपीति । हे अमर्त्याः ! देवाः ! साम्प्रतम् इदानीं वः युष्माकम् अपि कुशलं क्षेमं, स्वागतं शुभागमनम् ? नु भोः दम्भोलेः कुलिशस्य केलिः क्रीडा, प्रमितः दनुजानां दैत्यानां दम्भः यया तथाभूता किम् ? वज्रेण दैत्यान् नाशयितुं शक्नुथ किमित्यर्थः । धिषणस्य बृहस्पतेः मनीषया प्रज्ञया निर्मिताः कल्पिताः नीतिमार्गाः नीतिप्रयुक्तोपायाः इति यावत् त्रिदशनगरस्य स्वर्गस्य योगक्षेमकृत्यै योगः अलब्धस्य लाभः क्षेमं लब्धस्य परिपालनं तयोः कृत्यै व्यापाराय क्षमन्ते अपि शक्नुवन्ति किम् ? मालिनीवृत्तं, ननमयययुतेयं मालिनी भोगिलोकैरिति लक्षणात् ॥१७॥

(ड) एवमित्यादि । कुशलानुयोगपुरःसरीं मङ्गलप्रश्नपूर्विकाम् । अमृतासारसरसां पीयूषधारामिव रसवतीम् ।

सरस्वतीमाकर्ण्य सम्पूर्णमनोरथा सुमनसां (ढ) संसत् पुंसे परस्मै विज्ञापयामास। देव! कथमकुशलमाविर्भवेद्भवता कृतावलम्बानामस्माकम्। किन्तु,

अस्ति प्रशस्तविभवैर्विबुधैरलङ्घ्या
लङ्केति नाम रजनीचरराजधानी।
माणिक्यमन्दिरभुवां महसां प्ररोहै-
स्तेजस्त्रयाय दिनदीपदशां दिशन्ती ॥१८॥

एनां पुराणनगरीं नगरीतिशाला
सालाभिरामभुजनिर्जितयक्षराजः।
हेलाभिभूतजगतां रजनीचराणां
राजा चिराद्भवति रावणनामधेयः ॥१९॥

---

(ढ) सुमनसां देवानाम्।

अस्तीति। प्रशस्तः विभवः समृद्धिर्येषां तैः विबुधैर्देवैरलङ्घ्या अतिक्रमितुमशक्या, माणिक्यमन्दिरभुवां माणिक्यनिर्मितगृहोत्थितानां महसां तेजसां प्ररोहैः अङ्कुरैः उदयैरिति यावत् तेजसां त्रयाय सूर्याग्निचन्द्रेभ्य इत्यर्थः दिनेषु दीपदशां प्रदीपावस्थां दिशन्ती ददतीत्यर्थः, लङ्केति नाम रजनीचराणां राक्षसानां राजधानी नगरी अस्ति। वसन्ततिलकं वृत्तम् ॥१८॥

एनामिति। सालवत् सर्जतरुरिव अभिरामैः सुन्दरैः सुदी-र्घैरिति भावः भुजैः विंशत्येति यावत् निर्जितः पराभूतः यक्षाणां राजा येन तथाभूतः, रावणनामधेयः, हेलया अवज्ञया अभिभूतं जगत् यैः तेषां रजनीचराणां राजा, नगस्य पर्वतस्य रीत्या शालते शोभते इति तथोक्ताम् एनां पुराणनगरीं चिरात् अवति पालयति। वसन्ततिलकं वृत्तम् ॥१९॥

यद्बाहुराहुरसनायितशस्त्रधारा
दिक्कालकीर्त्तिमयचन्द्रमस ग्रसन्ते ।
तद्वैरिणां रणमुखे शरणप्रदायी
नैवास्ति कश्चिदमुमन्तकमन्तरेण ॥२०॥

अम्भोजसम्भवममु बहुभिस्तपोभि-
राराधयन् वरमवाप परैर्दुरापम् ।
तस्मात्समस्तभुवन निजशासनस्थ
लक्षीकरोति रजनीचरचक्रवर्त्ती ॥२१॥

---

यद्दिति। यस्य रावणस्य बाहव· राहव इव तेषा रसना॰यितानि रसनावत् आचरितानि शस्त्राणि तेषा धाराः दिक्षु कालेषु च यः कीर्तिमयचन्द्रमा· तमात्मानमिति शेषः त ग्रसन्ते कवलयन्ति। रणमुखे सङ्ग्रामशिरसि तस्य वैरिणा शत्रूणाम् अस्याक-मिति शेषः अमुम् अन्तक यमम अन्तरेण विना अन्य· कश्चित् नैव शरणप्रदायी आश्रयदाता अस्तीति शेष·, केवल यमोऽय त यदि स्वनिकेतन नयति तदास्माक परित्राण नान्यथेति भावः। वसन्त॰तिलकं वृत्तम् ॥२०॥

अम्भोजसम्भवमिति। रजनीचराणा राक्षसानां चक्रवर्त्ती सार्व॰भौमः रावण अमुम् अम्भोजसम्भवं पद्मयोनिं बहुभिस्तपोभि· आराधयन् परैरन्यै· दुराप दुर्लभं दैवात् सर्गादवध्य-त्वमिति भाव· वरम् अभीष्टम् अवाप प्राप तस्मात् ब्रह्मवर॰प्रभावात् समस्तभुवन निजशासनस्थ स्वाधिकारस्थ लक्षीकरोति त्रिभुवनं निजशासनाधीनं करोतीत्यर्थ·। तस्मादन्तकस्यापि तदुपार॰तन्त्र्यात् तं प्रति स्वसामर्थ्यप्रकटने शक्तिर्नास्तीति भावः। वसन्त॰तिलकं वृत्तम् ॥२१॥

सैन वय पराधीना इव भवामः। तथाहि, सोऽयं कदाचन क्रीडाधराधरमधिरुह्य सावरोधवधूजनस्वरणाभ्यां तत इतः सञ्चरेच्चेदागमिष्यत्याग इत्यनाविष्कृततातपो-भयेन भगवान् सहस्रभानुरपि सङ्कुचितभानुरेव तत्सानूनि नूनं समाश्रयते। एष मृगाङ्कोऽपि मृगयायासपरिश्रान्तिनि-वृत्त्यै ससंभ्रमं नमज्जनपरिवृते मज्जनगृहाभिमुखे नि-र्जितशतमुखे दशमुखे तत्रत्यविचित्रतरशातकुम्भस्तम्भाग्र-प्रत्यग्रप्रत्युप्तस्फटिकशिलाशालभञ्जिकापुञ्जकरतलकलितनि-जोपलमयकलशमुखादच्छाच्छामविच्छिन्नपाताम्बुधारां नि-जकराभिमर्शादापादयन् तस्य प्रसादपिशुनानां सुनासीर-चिरकाङ्क्षितानां विशतिवीक्षणानां (ख) क्षणमात्रं पात्र

---

(ख) सोऽयमिति सोऽयं रावणः। क्रीडाधराधरं केलिपर्वतम्। सावरोधवधूजनः अन्तःपुरस्त्रीजनसहितः। आगमिष्यति जनिष्यते इत्यर्थः। आगः अपराधः। अनाविष्कृतातपः अप्रकटिततीक्ष्णकिरणः। सहस्रभानुः सहस्रकिरणः। सङ्कुचितभानुः कुण्ठितरश्मिः। तस्य सानुनि प्रस्थदेशे। समाश्रयते उदेति। मृगाङ्कः चन्द्रः। मृगयायाः य आयासः शारीरव्यायामः तेन या परिश्रान्तिः परिश्रमः तस्याः निवृत्त्यै निवारणाय। ससम्भ्रमं सत्वरमयमिति यावत्। नमज्जनैः परिवृते समन्तात् वेष्टिते। मज्जनगृहाभिमुखे स्नानमण्डपाभियाते इति यावत्। निर्जितशतमखे पराभूतदेवराजे दशमुखे रावणे। तत्रत्या मज्जनगृहवर्त्तिन इत्यर्थः। विचित्रतराः ये शातकुम्भस्तम्भाः काञ्चनस्तम्भाः तेषाम् अग्रेषु शिखरेषु प्रत्यग्रम् अभिनवं प्रत्युप्ताना निहिताना स्फटिकशिला-

भवति। तेन पुलस्त्यनन्दनेन संक्रन्दननन्दनवनात् स्वमन्दिरोद्यानमानीतस्य मन्दारप्रमुखस्य वृन्दारकतरुवृन्दस्य (त) वन्दीकृतसुरसुन्दरीनयनेन्दीवरद्वन्द्वात् (थ) तत्करारविन्दकनककलशाच्च (द) मन्दोष्णं स्यन्दमानै(ध)रम्बुभिर्जम्बालितालवालस्य पचेलिमानामपि (न) कुसुमानां पतनभयमाशङ्कमानाः पवमानाः सन्ततं परिस्पन्दितुमपि (प)

---

शालभञ्जिकानां स्फटिकोपलपुत्तलिकानां पुञ्जस्य समूहस्य करतलैः कलितस्य गृहीतस्य निजोपलमयस्य चन्द्रकान्तमणिमयस्येत्यर्थः कलशस्य मुखात्। अच्छाच्छाम् अतिनिर्मलाम्। अविच्छिन्नः पात यस्याः तादृशी अम्बुधारा जलधारा ताम्। निजकराभिमर्षात् स्वमयूखसम्पर्कात्। आपादयन् स्रावयन्नित्यर्थः। तस्य रावणस्य। प्रभाद्विगुणानाम् अनुपदस्तवकानां सुनासीरस्य इन्द्रस्य चिरं काङ्क्षितानां चिराभिलषितानां विंशतिवीक्षणानां विंशतिसंख्यकनयनानाम्।

(त) पुलस्त्यनन्दनेन पुलस्त्यवंशभवेनेति भावः। संक्रन्दनस्य इन्द्रस्य नन्दनवनात्। वृन्दारकतरुवृन्दस्य देवतरुसमूहस्य।

(थ) वन्दीकृतेति वन्दीकृतानां हठहृतानां सुरसुन्दरीणां नयनमेव इन्दीवरद्वन्द्वं नीलोत्पलयुगलं तस्मात्।

(द) तदिति तासां करारविन्देषु करकमलेषु स्थितादिति भावः। कनककलशात् स्वर्णकुम्भात्।

(ध) स्यन्दमानैः स्रवद्भिः।

(न) जम्बालितं कर्दमितम् आलवालं मूलवेष्टनं यस्य तथाभूतस्य। पचेलिमानां पक्वानाम्।

(प) पवमानाः वायवः। परिस्पन्दितुं परितः स्वैरं गन्तुमपि।

प्रभवो न भवन्ति। एतेऽपि पावका रूढ़िशङ्कां हुतवहाख्यां वहन्तस्तद्गृहे गार्हपत्यपुरःसरा. पौरोगवीं धुरं दधति (फ)। किं बहुना, स एष मानवादवमान आगमिष्यतीत्यमन्वानस्तदितरैरबध्यत्वं (ब) चतुराननवराल्लब्ध्वा समुद्धतः (भ) सम्प्रति सम्प्रहारसमाक्रान्तदिगन्तदन्तावलदन्तकुन्तव्रणकिणस्थपुटितवक्षःस्थलः (म) स्थलकमलिनीं वनवारण इव

---

(फ) पावका अग्नय। रूढि प्रसिद्धि तत्र शङ्का सन्देह इति यावत् यज्ञास्तथाभूता हुतवहा वहन्त। यज्ञविरहेण हुतवहत्वाभावात् हुतवहाख्याम् अयुक्तत्वा धारयन्त इति भावः। तद्गृहे तस्य रावणस्य गृहे। गार्हपत्य· गार्हस्थ्य· गृहकार्य्यनिर्वाहक इति यावत् अग्निविशेष· पुरःसरो अग्रणीर्येषां तथोक्ताः। पौरोगवीं पुरोगव· पाकाध्यक्ष· तस्य इय पौरोगवी तां धुरं भारम्। दक्षिणाग्निर्गार्हपत्यो हवनीयस्त्रयोऽग्नय इति यज्ञीयाग्नेस्त्रैविध्येऽपि रावणगृहे यज्ञकार्य्यविरहात् केवलं पाकादिगृहकार्य्येषु अग्नेरुपयोगेन केवलं गार्हपत्याग्नेरेव प्राधान्यमिति भाव.।

(ब) स एष रावण इत्यर्थः। अवमान इति मानवात् अबध्यत्वप्रार्थनमवमानकरमिति भाव·। अमन्वान· अगणयन् मानवमिति शेष तदितरैः तस्मात् मानवात् इतरै अन्यै. प्राणिभिरिति शेष।

(भ) समुद्धतः सम्यक् प्रचण्ड·।

(म) सम्प्रहारेति सम्प्रहारे संग्रामे समाक्रान्तानां समभिभूतानां दिगन्तदन्तावलानां दिग्गजानां तेषां दन्ता एव कुन्ता अस्त्रविशेषा· तै व्रणानि क्षतानि तेषां किणाः तै. स्थपुटितम् उन्नतानत वक्षःस्थलं यस्य तथाभूतः।

रावणस्त्रिलोकीमभिभवन् भवदीयानित्यस्मान् न जातु (य) किञ्चिदपि जानातीति। अथ भगवानाकर्ण्य गीर्वाणगणवाणीम्,

इन्द्रनीलाचलोदञ्चच्चन्द्रिकाधवलस्मितः।
वाचमूचे सुधाधारामधुरां मधुसूदनः ॥२२॥

भवतामपराधविधायिनस्तस्य यातुधानस्य (र) निधनमधुनैव विधातु शक्यम्। किन्तु सरसिजासनशासनमप्यमोघीकुर्वन्नुर्वीतले पुलोमतः सुत्रामभित्रस्य (ल) दशरथस्य मनोरथमपि पूरयितुमादृतमानुषवेषः (व) सन् अहमेव तं बाधिष्यामीत्युक्त्वान्तरधात्। ततः सा परिषदनिमिषनयनाना(श)मुन्मिषितहर्षाणां हृषीकेशादेशात् प्रशमितदुर्द-

---

(य) भवदीयान् भवत्पदाश्रितानित्यर्थः। जातु कदाचित्।

इन्द्रेति। इन्द्रनीलाचलात् नीलगिरेरुदञ्चन्ती उद्गच्छन्ती चन्द्रिका इव धवलं स्मितम् ईषत् हसितं यस्य तथोक्तः मधुसूदनः सुधाधारेव मधुरां तां वाचम् ऊचे उक्तवान्। अनुष्टुब्वृत्तम् ॥२२॥

(र) अपराधविधायिनः कृतापराधस्य। यातुधानस्य राक्षसस्य, यातुधानः पुण्यजनो नैरृतो यातुरक्षसी इत्यमरः।

(ल) सरसिजासनशासनं ब्रह्मणः वरादेशमित्यर्थः। अमोघीकुर्वन् अव्यर्थीकुर्वन्। पुलोमतः पुलोमास्यतः। सुत्रामभित्रस्य इन्द्रसखस्य।

(व) आदृतमानुषवेषः स्वीकृतमनुष्यदेह इत्यर्थः।

(श) परिषत् सभा समूह इत्यर्थः। अनिमिषनयनानां देवानाम्।

शानि निर्दंशाननानि (ष) चतुर्दशभुवनानि बुद्धा दुग्ध-सागरान्निरगात्। ततस्तानमरान् प्राह स्म पितामहः। भवन्तस्तावदवतरिष्यतो लक्ष्मीसहायस्य साहाय्यार्थमप्सरः-प्रभृतिषु युवतिषु वानरभल्लगोपुच्छवेशभृतः प्रथितप्रभावाः (स) प्रजाः प्रजनयेयुरिति। पुरा खलु मम जृम्भारम्भे सम्भूतो जाम्बवानिति। ततस्ते गीर्वाणास्तथाकुर्वन्। अथ वैतानाद्वैश्वानरात् (ह) नरः प्राजापत्यः (च) सहेम-पात्रः कश्चिदुत्थाय दशरथाय पुत्त्रीयते पायसममृतशायं प्रायच्छत्। ततः,

कौशल्यायै प्रथममदिशद् भूपतिः पायसार्द्धं
प्रादादर्द्धं प्रणयमधुर केकयेन्द्रस्य पुत्त्र्यै।
एते देव्यौ तरलमनसः पत्युरालोच्य भावं
स्वार्द्धांशाभ्यां स्वयमकुरुतां पूर्णकामां सुमित्राम्॥२३॥

---

(ष) निर्दशाननानि अरावणानि।

(स) वानरेति वानराः कपयः भल्लाः ऋक्षाः गोपुच्छाः गोलाङ्गूलवन्तः वानरविशेषाः तेषां वेशभृतः वेशधारिणः। प्रथित-प्रभावाः विख्यातमाहात्म्याः।

(ह) वैतानात् यज्ञीयात् वैश्वानरात् अग्नेः।

(च) प्राजापत्यः प्रजापतिसम्बन्धी।

कौशल्यायै इति। भूपतिः दशरथः प्रथमं कौशल्यायै पाय-सार्द्धम् अदिशत् दत्तवान् तथा केकयेन्द्रस्य पुत्र्यै केकय्यै अर्द्धम् अन्यदिति शेषः प्रणयमधुरं यथा तथा प्रादात्। एते देव्यौ

अवभृथेऽवसिते सरयूतटा-
दथ यथायथमुच्चलिते जने ।
दशरथः परिपूर्णमनोरथः
पुरमगात् पुरुहूतपुरोपमाम् ॥ २४॥

अपाटवात् केवलमङ्गकानां
मनोज्ञकान्तेर्महिषीजनस्य ।
शनैः शनैः प्रोषितभूषणानि
चकाशिरे दौहृदलक्षणानि ॥२५॥

---

महिष्यौ कौशल्याकैकय्यौ तरलमनसः चञ्चलचित्तस्य सुमित्रार्थमिति भाव एत्य भावम् आशयम् आलोच्य अनुभूय स्वयम् आत्मनैव स्वाङ्गांशाभ्यां निजनिजपायसयोरर्द्धांशाभ्यां सुमित्रां पूर्णकामाम् अकुरुताम् कृतवत्यौ, कौशल्या स्वांशात् अर्द्धं कैकयी च स्वांशात् अर्द्धं सुमित्रायै दत्तवतीत्यर्थः । मन्दाक्रान्तावृत्तम् ॥२३॥

अवभृथे इति । अथ अवभृथे दीक्षान्तस्नानविधौ अवसिते समाप्ते जने च सरयूतटात् यथायथम् उच्चलिते प्रस्थिते सति दशरथः परिपूर्णमनोरथः सफलकामः सन् पुरुहूतपुरोपमाम् अमरावतीनिभां पुरम् अयोध्याम् अगात् । द्रुतविलम्बितं वृत्तं, द्रुतविलम्बितमाह नभौ भराविति तल्लक्षणात् ॥२४॥

अपाटवादिति । मनोज्ञा मनोहारिणी कान्तिर्लावण्यं यस्य तथाभूतस्य गर्भोदयादिति भावः महिषीजनस्य अङ्गकानां देहानाम् अपाटवात् असामर्थ्यात् शनैः शनैः क्रमेण प्रोषितानि गतानि भूषणानि येषु तथाविधानि त्यक्तालङ्करणानीत्यर्थः दौहृदलक्षणानि गर्भलक्षणानि केवलं चकाशिरे शुशुभिरे । उपेन्द्रवज्रावृत्तं, स्यादिन्द्रवज्रा यदि तौ जगौ गः इति, उपेन्द्रवज्रा प्रथमे लघौ सेति तल्लक्षणात् ॥२५॥

मन्दमन्दमपयाद्वलित्रयी
गाधताविषयनाभिगह्वरा ।
कोशलेन्द्रदुहितुः शनैरभू-
न्मध्ययष्टिरपि दृष्टिगोचरा ॥२६॥

न्यग्रोधपत्रसमतां क्रमशः प्रयाता-
मङ्गीचकार पुनरप्युदरं कृशाङ्ग्याः ।
जीवातवे दशमुखोरगपीड़ितानां
गर्भच्छलेन वसता परमेण पुंसा ॥२७॥

---

मन्दमन्दमिति । कोशलेन्द्रदुहितुः कौशल्यायाः मध्ययष्टिरपि मन्दमन्दं क्रमेणेत्यर्थः अपयान्ती विलयं गच्छन्ती वलित्रयी तिस्रः रेखा इति भावः यस्याः तथाभूता, शनैः क्रमेण गाधताविषय गभीरतारहितमिति भावः नाभिगह्वरं यस्याः तथाभूता सती दृष्टिगोचरा बभूव, पूर्वमतिक्षीणमध्यतया मध्यदेशस्य अस्ति नास्तीति सन्देहास्पदत्वमासीत् इदानीन्तु क्रमेण गर्भभारस्योदयात् मध्यदेशस्य दृष्टिगोचरत्वमिति भावः । रथोद्धतावृत्तं, रात् परैर्नरलगैरथोद्धतेति तल्लक्षणात् ॥२६॥

न्यग्रोधेति । कृशाङ्ग्याः कौशल्यायाः उदरमपि कुक्षिरपि दशमुखः रावण एव उरगः सर्पः तेन पीड़ितानां दष्टानां जीवातवे जीवनौषधाय, जीवातुर्जीवनौषधमित्यमरः । गर्भच्छलेन गर्भः कुक्षिस्थो जन्तुः तच्छलेन वसता अधितिष्ठता परमेण पुंसा नारायणेन क्रमशः प्रयातां प्राप्तां न्यग्रोधपत्रसमतां वटपत्रतुल्यताम् अङ्गीचकार प्राप । यथा प्राक् भगवान् नारायणः वटपत्रमधिशयितवान् तथा कौशल्याया उदरमधिष्ठितवानिति भावः । वसन्ततिलकं वृत्तम् ॥२७॥

अपि च,

> मध्यं तनुत्वादविभाव्यमान-
> माकाशमासीदसितायताक्ष्याः ।
> गर्भोदये विष्णुपदापदेशात्
> कार्श्यं विहायापि विहाय एव ॥२८॥

उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ
लग्ने कर्कटके पुनर्वसुयुते मेषं गते पूषणि ।
निर्दग्धुं निखिलाः पलाशसमिधो मेध्यादयोध्यारणे-
राविर्भूतमभूतपूर्वमभवद् यत्किञ्चिदेकं महः ॥२९॥

---

मध्यमिति । असितायताक्ष्या नीलायतनेत्रायाः मध्यं तनुत्वात् सूक्ष्मत्वात् अविभाव्यमानम् अलक्ष्यमाणम् अतएव आकाशम् आसीत् । इदानीमपि गर्भोदये गर्भोपस्थितौ विष्णुपदापदेशात् विष्णुपदच्छलात् कार्श्यं सूक्ष्मतां विहायापि परित्यज्यापि विहाय एव आकाशमेव । आकाशं यथा पूर्वं वामनरूपिणा विष्णुनाक्रान्तत्वात् विष्णुपदाख्यां लेभे तथा कौशल्याया उदरमपि गर्भोदयात् किञ्चित् स्थूलतां प्राप्तमपि विष्णोरधिष्ठानात् विष्णुपदमिति आकाशमेवेति भावः । इन्द्रवज्रावृत्तम् ॥२८॥

उच्चस्थे इति । ग्रहाणां रव्यादीनां पञ्चके उच्चस्थे तुङ्गिनि सुरगुरौ जीवे सेन्दौ चन्द्रसमन्विते नवम्यां तिथौ कर्कटके लग्ने कर्कटराशावुदिते इति भावः, राशीनामुदयो लग्नमित्यमरः । पुनर्वसुयुते पूषणि सूर्ये मेषं गते सति अभूतपूर्वं यत्किञ्चित् अनिर्वचनीयम् एकम् अद्वितीयं महः तेजः निखिलाः समस्ताः पलं मांसं अश्नन्तीति पलाशाः मांसादाः राक्षसा इत्यर्थः, एव समिधः काष्ठानि ताः निर्दग्धुं भस्मीकर्तुं मेध्यात् पवित्रात् अयोध्यारणेः अयोध्या एव

अपि च,

अथ रामाभिधानेन कवेः सुरभयन् गिरः ।
अलञ्चकार कारुण्याद्रघूणामन्वयं हरिः ॥३०॥
तमेवमन्वजायन्त त्रयस्त्रेताग्नितेजसः ।
अग्रजं तेऽनुकुर्वन्तस्तैस्तैर्लोकोत्तरैर्गुणैः ॥३१॥
भरतस्तेषु कैकेय्यास्तनयो विनयोज्ज्वलः ।
अन्यौ लक्ष्मणशत्रुघ्नौ सुमित्राया कृतोदयौ ॥३२॥

---

अरणिः अग्निमन्थनदारुविशेषः तस्मात् आविर्भूतं प्रादुर्बभूव । शार्दूलविक्रीडितं वृत्तम् । सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितमिति तल्लक्षणात् । रूपकमलङ्कारः । रूपकं रूपितारोपाद्विषये निरपह्नवे इति दर्पणः ॥ २९॥

अथेति । अथ स्वजननानन्तरं हरिः रामाभिधानेन रामेति नाम्ना कवेर्वाल्मीकेः गिरः वाचः सुरभयन् सुरभीकुर्वन् सौरभशालिनीः कुर्वन्नित्यर्थः कारुण्यात् कृपया रघूणाम् अन्वयं वंशं अलञ्चकार । अनुष्टुब्वृत्तम् ॥३०॥

तमिति । त्रेताग्निः दक्षिणाग्निगार्हपत्याहवनीयाख्यमग्नित्रयमित्यर्थः. दक्षिणाग्निर्गार्हपत्याहवनीयस्त्रयोऽग्नयः । अग्नित्रयमिदं त्रेतेत्यमरः । तद्वत् तेजो येषां तथाभूताः ते त्रयः भरतलक्ष्मणशत्रुघ्ना इत्यर्थः तैः तैः लोकोत्तरैः अलौकिकैः गुणैर्दयादाक्षिण्यादिभिः तम् अग्रजं रामम् अनुकुर्वन्तः सन्तः एवं रामवदित्यर्थः तं रामम् अनु पश्चात् अजायन्त जाताः । अनुष्टुब्वृत्तम् ॥३१॥

भरत इति । तेषु त्रिषु मध्ये कैकेय्यास्तनयः भरतः विनयेन उज्ज्वलः अतिविनयवान् सुमित्रायाः कृतः उदयः याभ्यां तौ लक्ष्मणशत्रुघ्नौ अन्यौ तृतीयचतुर्थावित्यर्थः । अनुष्टुब्वृत्तम् ॥३२॥

एते बवृधिरे वीराः प्रजाक्षेमाय दीक्षिताः ।
लोकानन्दा मुकुन्दस्य चत्वार इव बाहवः ॥२२॥

अथ कदाचिदपरिमेयमायाभयानकयुद्धसमुद्धतदैत्य-बलावस्कन्दकान्दिशीकवृन्दारकानीकप्रतिपाल्यमानमहारथः (क) पङ्क्तिरथ(ख)स्तपश्चर्याजातानामाश्चर्याणामायतनं (ग) त्रिशङ्कुयाजिनं (घ) भगवन्तं पद्यप्रबन्ध-

एते इति । मुकुन्दस्य नारायणस्य चत्वारः बाहव इव लोकानन्दाः जगतामानन्दनाः प्रजानां क्षेमाय कुशलाय दीक्षिताः एते वीराः बवृधिरे वृद्धिं प्रापुः । अनुष्टुब्वृत्तम् ॥२२॥

(क) अथेति । अपरिमेयाभिर्बह्वीभिरित्यर्थः मायाभिः इन्द्रजालैर्भयानकं यत् युद्धं तत्र समुद्धतानां दैत्यानां बलावस्कन्देन बलाक्रमणेन कान्दिशीकानां भयविद्रुताना, कान्दिशीको भयद्रुत इत्यमरः । वृन्दारकाणाम् अनीकेन सैन्येन प्रतिपाल्यमानः प्रतीक्ष्यमाणः महान् रथो यस्य तथाभूतः ।

(ख) पङ्क्तिरथः दशरथः ।

(ग) तपश्चर्येति तपसां चर्यया अनुष्ठानेन जातानाम् आविर्भूतानाम् । आयतनं स्थानम् आधार इत्यर्थः ।

(घ) त्रिशङ्कुयाजिनम् । पुरा त्रिशङ्कुर्नाम इक्ष्वाकुवंशीयः राजा सशरीरः स्वर्गं जिगमिषुः गुरुं वशिष्ठमुपगम्य अब्रवीत् ! यथाहं सशरीरः स्वर्गं गच्छे तथा मदर्थं यज्ञः क्रियतामिति अभ्यर्थयामास । गुरुस्तं तादृशे यज्ञे न त्वमधिकारीति मत्वा प्रत्याख्यातवान् । अथ तेनावमतो राजा गुरुपुत्रानुपगम्य तथैवाभ्यर्थितवान् । ते च गुरुणा प्रत्याख्यातं तं गुरुत्यागिनं त्वं चण्डालो भवेति सपत्नः मत्वाशपन् । ततश्च भृशमवमानितः स राजा वशिष्ठद्वेषिणं विश्वामित्रमासाद्य

मिव(ङ) दर्शितसर्गभेदं(च) प्राकृतव्याकरणमिव प्रकटितवर्णव्यत्यासं (छ) बुधमिव सोमसुतं कुशिकसुत(ज)मद्राक्षीत्। तदनु यथाविधि परिगृहीतसपर्य्येण मर्य्यादातीतमहिम्ना गाधेतरहृदयेन(झ) गाधिनन्दनेन सत्रपरित्राणार्थ(ञ)मित्यमभ्यर्थितः पार्थिवोऽभूत्। राजन्! तव कुमारेण विनया-

तेन च यत्नेन स्वर्गं नीतः सुरराजेन तस्मात् भ्रंशितः अन्तरीक्ष एव स्थितः। त्रिशङ्कुस्वर्ग एष इति प्रसिद्धिश्चेति रामायणवार्त्तानुसन्धेया।

(ङ) पद्यप्रबन्धमिव पद्यरचितकाव्यसन्दर्भमिव।

(च) दर्शितेति दर्शितः सर्गस्य सृष्टेः पक्षे रचनाविशेषस्य भेदः विशेषः येन तथोक्तम्। यदा महर्षिर्विश्वामित्रः घोरेणापि तपसा ब्रह्मणः सकाशात् ब्रह्मत्वं न प्राप तदा क्रोधात् सृष्टिकर्मणि प्रवृत्तः। तच्च दृष्ट्वा भगवान् विरिञ्चिर्भीतः समुपेत्य तस्मै तदभीष्टं वरं प्रादादिति रामायणकथात्रानुसन्धेया।

(छ) प्रकटितेति प्रकटितः प्रकाशितः वर्णस्य क्षत्रियस्य व्यत्यासः वैपरीत्यं ब्रह्मण्यलाभेनेति भावः येन तथोक्तं क्षत्रियत्वात् ब्रह्मब्राह्मण्यमिति भावः, पक्षे प्रकटितः वर्णानाम् अक्षराणां व्यत्यासः विपर्य्ययः येन तथाभूतम्।

(ज) सोमसुतं पीतसोमरसं पक्षे चन्द्रपुत्रम्। कुशिकसुतं विश्वामित्रम्।

(झ) तदनु तदनन्तरं तद्दर्शनानन्तरमित्यर्थः। परिगृहीतसपर्य्येण पूजितेनेत्यर्थः। मर्य्यादा सीमाम् अतीतः अतिक्रान्तः महिमा यस्य तथोक्तेन। गाधेतरहृदयेन गाधेतरम् अगाधमित्यर्थः दुरधिगममित्यर्थः हृदयं यस्य तादृशेन।

(ञ) सत्रपरित्राणार्थं यज्ञरक्षार्थम्।

भिरामेण रामेण शरासनमित्रेण (ट) सौमित्रिमात्रपरिजनेन क्रियमाणक्रतुरक्षो रक्षोदुरित(ठ)मुत्तीर्य्य कृतावभृथो (ड) भक्तुमभिलषामीति। एवंविधमाकर्ण्य कर्णपरुषं (ढ) महर्षिभाषितमतिमात्रपुत्रवात्सल्यात् कौशल्याजानिः (ण) समशल्यान्तःकरणोऽभूत्। ततस्तस्मिन् बहुप्रकारैरपरिहार्य्यनिश्चये भगवति विश्वामित्रे दशरथस्तपनकुलहितेन पुरोहितेनैव(त)मभिहितोऽभूत्।

पर्य्याप्तकामाय भवानमुष्मै
कुर्य्यात् सपर्य्यां कुशिकात्मजाय।
निर्यातुधाना वसुधां विधातुं
निर्यातु रामः सह लक्ष्मणेन॥ २४॥

---

(ट) शरासनमित्रेण धनुःसहायेन धनुर्द्धरेत्यर्थः।

(ठ) रक्षोदुरितं राक्षसविघ्नम्।

(ड) कृतावभृथः सम्पादितदीक्षान्तस्नानः।

(ढ) कर्णपरुषं श्रुतिकटु।

(ण) कौशल्याजानिः कौशल्या जाया यस्य तथोक्तः दशरथ इत्यर्थः।

(त) तपनकुलहितेन सूर्य्यवंशहितकारिणा। पुरोहितेन वशिष्ठेन।

पर्य्याप्तेति। भवान् पर्य्याप्तकामाय लब्धमनोरथाय अमुष्मै कुशिकात्मजाय विश्वामित्राय सपर्य्यां पूजां कुर्य्यात्। रामः लक्ष्मणेन सह वसुधां पृथ्वीं निर्यातुधानाम् अराक्षसां विधातुं कर्त्तुं निर्यातु निर्गच्छतु। इन्द्रवज्रावृत्तम्॥२४॥

एवं वशिष्ठेन प्रतिष्ठापितधृति(ध)र्दशरथः सुतप्रदानेन कुशिकसुतमनोरथमेव पूरयामास ।

योगेन लभ्यो यः पुंसां संसारापेतचेतसाम् ।
नियोगेन पितुः सोऽयं रामः कौशिकमन्वगात् ॥२५॥
तत्र सत्रं परित्रातुं विश्वामित्रो महामुनिः ।
सौमित्रिसहितं रामं नयन्नयमवोचत ॥२६॥
बलेन तपसां लब्धे बलेत्यतिबलेति च ।
विद्ये ते मयि काकुत्स्थ ! विद्ये ते वितरामि ते ॥२७॥

---

(ध) प्रतिष्ठापितधृतिः प्रतिष्ठापिता प्रतिष्ठां नीता धृतिः धैर्यं यस्य तथाभूतः, पूर्वं धैर्यच्युत आसीत् ततो वशिष्ठवाक्येन लब्धधैर्य इति भावः ।

योगेनेति । यः संसारात् अपेतं भ्रष्टं चेतः येषां तथोक्तानां वीतरागाणामिति भावः पुंसां योगेन समाधिना लभ्यः साक्षात्करणीय इति यावत् सोऽयं रामः पितुर्नियोगेन कौशिकं विश्वामित्रम् अन्वगात् । अनुष्टुव्वृत्तम् ॥२५॥

तत्रेति । अयं महामुनिर्विश्वामित्रः तत्र सिद्धाश्रमे इति शेषः सत्रं यज्ञं परित्रातुं परिरक्षितुं सौमित्रिसहितं लक्ष्मणं रामं नयन् अवोचत उक्तवान् । अनुष्टुव्वृत्तम् ॥२६॥

बलेनेति । हे काकुत्स्थ ! पुरा परञ्जयो नाम कश्चिदैक्ष्वाको राजा देवैरसुरविजयायाभ्यर्थितः देवराजस्य वृषभरूपिणः ककुदि स्थित्वा असुरान् विजित्य देवलोकं निरापदमकरोत् । ततश्च ककुत्स्थ इति तं देवाः सादरमाख्यातवन्तः । ततश्च प्रभृति तद्वंश्याः काकुत्स्थसंज्ञा लेभिरे इति पुराणम् । तपसां बलेन प्रभावेण बला इति अतिबला इति च लब्धे प्राप्ते मयेति शेषः ते विद्ये मयि विद्येते,

ततः परिगृहीतविद्यस्य दाशरथेः प्रदेशमेकं प्रदृश्य भगवानित्थमकथयत्।

अस्मिन् पुरा पुरभिदः परमेश्वरस्य
भालान्तरालनयनज्वलने मनोभूः।
सद्यः प्रपद्य शलभत्वममुञ्चदङ्गं
तस्मादमुं जनपदं विदुरङ्गसञ्ज्ञम् ॥३८॥

तदनु मानससरःप्रसूतां (द) सरयूमतिक्रम्य वृत्रवधप्रवृद्धवृद्धश्रवःपङ्कक्षालनलब्धमलदकरूशकनाम्नोर्जनपदयो.(ध) सीम्नि कृतपदयोर्दाशरथ्योः पुनरप्येवमब्रवीत्।

---

साम्प्रतं ते तुभ्यं वितरामि ददामि। विद्ययोश्चैतयोः प्रभावात् क्षुत्पिपासाक्लेशनिवृत्तिः स्यादिति रामायणवार्त्तानुसन्धेया। अनुष्टुब्वृत्तम् ॥३७॥

अस्मिन्निति। पुरा पूर्वम् अस्मिन् प्रदेशे मनोभूः कामः पुरभिदः त्रिपुरारेः परमेश्वरस्य हरस्य भालस्य ललाटस्य अन्तराले नयनमेव ज्वलनः अग्निः यद्वा नयनात् निर्गतो ज्वलनः तस्मिन् शलभत्वं पतङ्गत्वं प्रपद्य प्राप्य सद्यः तत्क्षणात् अङ्गम् अमुञ्चत् तत्याज भस्मतामगादिति यावत् तस्मात् हेतोः अमुं जनपदं देशम् अङ्गसञ्ज्ञम् अङ्गनामानं विदुः। वसन्ततिलकं वृत्तम् ॥३८॥

(द) तदन्विति। तदनु तदनन्तरं मानसं नाम सरः तस्मात् प्रसूतां निःसृताम्।

(ध) वृत्रेति वृत्रस्य असुरस्य वधेन प्रवृद्धः जातः वृद्धश्रवस इन्द्रस्य यः पङ्कः ब्रह्महत्याजनितं पापमिति यावत् तस्य क्षालनेन शोधनेनेति यावत् लब्धे मलदकरूशकनामनी याभ्यां तयोस्तयोः जनपदयोः देशयोः।

यक्षः सुकेतुर्द्रुहिणप्रसादा-
ल्लेभे सुतां कामपि ताड़काख्याम्।
सुन्दः किलैनां परिणीय तस्यां
मारीचनीचं जनयाम्बभूव ॥२९॥

एकदा तु सुन्दे निहते मारीचः कुम्भसम्भवमुनिमभि-भूय (न) तस्य शापादवाप कौणपतां (प) ताड़काप्यासीत् पुरुषादिनी (फ)। सेयमाजन्मसिद्धसिन्धुरसहस्रप्राणा (ब) जनपदविपदं विदधाना (भ) व्यापादनीया त्वयेति। किञ्च, वैरोचनीं मन्थरां वसुन्धरापराधधुरन्धरां (म) पुर-

यक्ष इति। सुकेतुर्नाम कश्चित् यक्षः द्रुहिणस्य ब्रह्मणः प्रसादात् ताडकाख्या ताडकानाम्नीं कामपि सुतां लेभे। सुन्दः तदाख्यः कश्चिदसुर इति शेषः एना ताडकां परिणीय तस्यां ताड-कायां मारीच एव नीचः तं मारीचाख्यम् अधमं तनयमित्यर्थः जनयाम्बभूव किलेति प्रसिद्धौ। इन्द्रवज्रावृत्तम् ॥२९॥

(न) कुम्भसम्भवमुनिम् अगस्त्यमित्यर्थः, अगस्त्यः कुम्भसम्भव इत्य-मरः।

(प) कौणपतां राक्षसताम्।

(फ) पुरुषादिनी नरमांसभोजिनी राक्षसीति यावत्।

(ब) आजन्मेति आजन्मनः सिद्धं सिन्धुराणां गजानां सहस्रं प्राणः बलं यस्याः तथाभूता सहस्रहस्तिबलधारिणीत्यर्थः।

(भ) विदधाना कुर्वती।

(म) वैरोचनीं विरोचनः प्रह्लादसुतः तस्यापत्यं स्त्री वैरोचनी तां विरोचनस्यासुरपतेर्दुहितरमित्यर्थः। मन्थरा तदाख्याम्। वसुन्धरायाः पृथिव्याः अपराधधुरन्धरा दुःखस्य विशेषानिष्टकारि-णीमित्यर्थः।

न्तरेण निहतां जनार्दनकृतार्दनाञ्च भार्गवजननीं (य) अदृश्य दाशरथेरमन्दां (र) सुन्दवधूवधविचिकित्सामुत्सा-दयामास (ल)।

आश्रुतः श्रुतवृत्तेन तेन सुन्दप्रियावधः।
तमेवान्वदत्तस्य चापः शिञ्जारवच्छलात् ॥४०॥

तत्काले पिशिताशनाशपिशुना सन्ध्येव काचिन्मुने-
रध्वानं तरसा रुरोध रुधिरक्षोदारुणा दारुणा।
स्वाधीने हनने पुरीं विदधती मृत्योः स्वकृत्यात्ययात्
उद्यत्किङ्करसङ्घसङ्कटमहाशृङ्गाटकां ताड़का ॥४१॥

---

(य) जनार्दनेति जनार्दनेन विष्णोरवतारविशेषेण परशुरामे-णेति यावत् कृतम् अर्दनं हिंसनं वध इत्यर्थः यस्याः तथाभूता भार्गवजननीं परशुराममातरम्। पुरा पितुराज्ञया भार्गवः स्वजननीं रेणुकां जघानेति पुराणम्।

(र) अमन्दां महतीम्।

(ल) सुन्देति सुन्दस्य वधूस्ताड़का तस्याः वधे विचिकित्सा स्त्रियमिमां कथं हन्मि कथं वा गुरोराज्ञां परिहरामीत्येवं संशय-मित्यर्थः, विचिकित्सा तु संशय इत्यमरः। उत्सादयामास चिच्छेद।

आश्रुत इति। श्रुतवृत्तेन ज्ञातवृत्तान्तेनेति यावत् तेन रामेण सुन्दप्रियायास्ताड़कायाः वधः आश्रुतः प्रतिज्ञातः। तस्य रामस्य चापः धनुः शिञ्जारवच्छलात् मौर्वीध्वानव्याजात् तमेव प्रतिज्ञात-ताड़कावधमित्यर्थः अन्ववदत् पुनरुक्तमकरोदिवेति प्रतीयमानोत्-प्रेक्षा। अनुष्टुब्वृत्तम् ॥४०॥

तत्काले इति। तत्काले तस्मिन् काले काचित् सन्ध्येव

यथा दाशरथेः कर्णमविशत्ताड़कागुणः ।
तथा धनुर्गुणस्तूर्णमविशत्तज्जिघांसया ॥४२॥
ततो भाविनि संग्रामे बद्धश्रद्धस्य ताड़का ।
स्वप्राणै रामबाणस्य वीरपानमकल्पयत् ॥४३॥

---

रुधिरच्छोटैः रक्तबिन्दुभिः मांसस्थितैरिति भावः अरुणा रक्तेत्यर्थः पिशिताशानां राक्षसानां नाशपिशुना विनाशसूचिका दारुणा भयङ्करी स्वाधीने हनने हिंसायां स्वायत्तायामित्यर्थः कृत्योर्यमस्य पुरीं स्वकृत्यानां लोकसंहाराणामिति भावः अत्ययात् अपगमात् ताड़कायास्तत्कार्य्यकारित्वेनेति भावः उद्यद्भिः उदयं गच्छद्भिः कार्य्यभारविगमात् उल्लसद्भिरिति भावः किङ्कराणां स्वभृत्यानामिति भावः सङ्घैः समूहैः सङ्कटं सङ्कुलं सकृत् शृङ्गाटकं चतुष्पथं यस्याः तथोक्तां विदधती कुर्वती ताड़का तरसा बलेन मुनेः विश्वामित्रस्य अध्वानं पन्थानं रुरोध । शार्दूलविक्रीड़ितं वृत्तम् ॥४१॥

यथेति । ताडकाया गुणः चरित्रमिति यावत् यथा दाशरथेः रामस्य कर्णम् अविशत् तथा धनुर्गुणः कार्मुकज्या तस्येति शेषः तस्याः जिघांसया वधेच्छया तूर्णं शीघ्रम् अविशत् कर्णमिति शेषः । ताडकाचरितश्रवणमात्रेणैव रामस्तद्वधार्थं धनुराकर्णमाचकर्षेति भावः । अनुष्टुब्वृत्तम् ॥४२॥

तत इति । ततः अनन्तरं ज्याकर्षणात् परमित्यर्थः ताडका स्वप्राणैः निजप्राणवायुभिरित्यर्थः भाविनि आगामिनि संग्रामे राक्षससमरे इत्यर्थः बद्धश्रद्धस्य बद्धानुरागस्य रामबाणस्य वीरपानं वीरोचितपानं मधुपानमिति यावत् अकल्पयत् कल्पयामास । यथा वीरा मधूनि पीत्वा समराय प्रवर्त्तन्ते तथा रामबाणः ताड़काप्राणरूपं मधु पीत्वा आगामिनि राक्षससमरे प्रावर्त्ततेति भावः । अनुष्टुब्वृत्तम् ॥४२॥

मुनिः कृशाश्वोपज्ञानि ताडकामाथिने ददौ।
अस्त्राणि जृम्भकादीनि जम्भशासनशासनात् ॥४४॥

तत्र कञ्चन विरिञ्चिलोकप्रत्यादेशं (व) प्रदेशमेकं प्रदर्शयन्नुपचीयमानपरमहर्षो (श) महर्षिः।

प्रतिदिनमवदातैर्ब्रह्मभिर्ब्रह्मनिष्ठैः
प्रशमितभवखेदैः सादरं सेव्यमानः।
बलिनियमनहेतोर्वामनः काननेऽस्मिन्
बलिनियमपरः सन् ब्रह्मचारी चचार ॥४५॥

---

मुनिरिति। मुनिर्विश्वामित्रः जम्भशासनस्य इन्द्रस्य शासनात् आदेशात् ताडकामाथिने हतताडकाय रामायेत्यर्थः कृशाश्वः तदाख्यो महामुनिः तेन उपज्ञा आद्य ज्ञान येषां तानि कृशाश्वेन प्रागुद्भावितानीति यावत् जृम्भकादीनि अस्त्राणि ददौ अर्पयामास। अनुष्टुप् वृत्तम् ॥४४॥

(व) तत्रेति। विरिञ्चिलोकप्रत्यादेशं ब्रह्मलोकनिराकृतिम्। ब्रह्मलोकनिभमिति यावत्।

(श) उपचीयमानेति उपचीयमानः वर्द्धमानः परमो महान् हर्षः यस्य तादृशः।

प्रतिदिनेति। अस्मिन् कानने प्रतिदिनम् अवदातैः विशुद्ध-चरितैरिति यावत् ब्रह्मनिष्ठैः वेदपरायणैः तत्त्वविद्भिरिति वा, वेदस्तत्त्वं तपो ब्रह्मेत्यमरः। प्रशमितः शान्तिं नीतः भवखेदः संसार-दुःखं यैः तथोक्तैः वीतरागैरित्यर्थः ब्रह्मभिः सादरं यथा तथा सेव्यमानः परिचर्य्यमाणः बलेरसुरराजस्य नियमनं शासनमेव हेतुः तस्मात् वामनः वामनरूपी भगवान्, बलिः वैश्वदेवीयो यज्ञविधिः तस्य नियमपरः तत्साधनतत्परः ब्रह्मचारी विहितब्रह्मचर्य्यः सन्

अपिच,

अपहृतविबुधार्त्तेर्वामनव्याजमूर्त्ते-
रखिलभुवनभित्तेराश्रमानोकहानाम्।
ततिरियमतिनीला व्याप्तदिग्व्योमसीमा
स्वयमपि परिमातुं लोकमभ्युद्यतेव ॥४६॥

इति विविधरसाभिः कौशिकव्याहृताभिः
श्रुतिपथमधुराभिः पावनीभिः कथाभिः।
गलितगहनकृच्छ्रं गच्छतोर्दाशरथ्योः
समकुचदिव सद्यस्तादृशं मार्गदैर्घ्यम् ॥४७॥

---

चचार तस्याविव्यर्थः। मालिनीवृत्तं, ननमयययुतेयं मालिनी भोगि-लोकैरिति तल्लक्षणात् ॥४५॥

अपहृतेति। अपहृता नाशिता विबुधानां देवानाम् आर्त्तिर्व्यथा असुरराजस्य बलेः शासनादिति भावः येन तथाभूतस्य, अखिलभुवन-भित्तेः अखिलभुवनानि त्रिभुवनानि भित्ते त्रिपादभूमिव्याजेनेति भावः इति तयोक्तस्य, वामनव्याजा मूर्त्तिर्यस्य तथाभूतस्य विष्णो-रिति यावत्, इयं व्याप्ता दिशा व्योम्नः आकाशस्य च सीमा यया तादृशी अतिनीला आश्रमानोकहानाम् आश्रमतरूणां ततिः समूहः स्वयमपि लोकं जगत् परिमातुं परिच्छेत्तुम् अभ्युद्यतेव उद्यतेव। मालिनीवृत्तम् ॥४६॥

इतीति। इतीत्थं विविधः रसो यासु तादृशीभिः श्रुतिपथ-मधुराभिः श्रोत्रेन्द्रियतर्पणीभिरित्यर्थः पावनीभिः विशुद्धिजननीभिः कौशिकव्याहृताभिः विश्वामित्रोदिताभिः कथाभिः गलितं विगतं गहनकृच्छ्रं वनगमनकष्टं यस्मिन् तत् यथा तथा गच्छतोः दाशरथ्योः रामलक्ष्मणयोः तादृशं मार्गस्य पथः दैर्घ्यं विशालत्वं सद्यः तत्-

ततः सिद्धाश्रमं प्रविश्य विश्वामित्रः सत्रमारभत। तदनन्तरमन्तरीक्षान्तरालादापतन्त(ष)मन्तकानीकभयानकं पलाशगण(स)मवलोक्य पलायमानाः करतलगलित-फलाशसमित्कुशाः कुशिकनन्दनान्तेवासिनः ससंभ्रममभिलषिताहवाय (ह) राघवाय न्यवेदयन्।

हृत्वाद्रेः शिखराणि तानि परितः क्षिप्त्वा हसित्वा क्रुधा
कृत्वा हस्तविघट्टन तत इतः स्थित्वा नटित्वा मुहुः।
सिक्त्वा क्ष्मामसृजास्रजान्त्रकृतया बद्ध्वा कचान् खेचरान्
दग्ध्वाग्नेः सदृशा दृशा निशिचरा रुन्धन्ति रन्ध्रं दिवः ॥४८

---

ध्वयं समकुचदिव सङ्कोच प्रापेव। सुमधुराख्यानश्रवणौत्सुक्येन अविदितगत एव पन्थास्तयोरभवदिति भावः। मालिनीवृत्तम् ॥४७॥

(ष) अन्तरीक्षान्तरालात् आकाशाभ्यन्तरात् आपतन्तम् आगच्छन्तम्।

(स) पलाशगणं राक्षसगणम्।

(ह) करतलेति करतलेभ्यः गलिताः भ्रष्टाः फलाशानि फलानि समिधः यज्ञकाष्ठानि कुशाश्च येषां तथाभूताः। कुशिकनन्दनस्य विश्वामित्रस्य अन्तेवासिनः छात्राः। ससंभ्रमं सभयम्। अभिलषितेति अभिलषितः आहवः युद्धं येन तथाभूताय।

हृत्वेति। निशिचराः राक्षसाः अद्रेः पर्वतस्य शिखराणि शृङ्गाणि हृत्वा उत्पाट्येत्यर्थः तानि शिखराणि परितः समन्तात् क्षिप्त्वा निक्षिप्य हसित्वा क्रुधा क्रोधेन हस्तविघट्टनं करास्फालनं कृत्वा तत इतः स्थित्वा मुहुः पुनः पुनः नटित्वा नृत्यं कृत्वा असृजा रक्तेन क्ष्मां पृथिवीं सिक्त्वा अभिषिच्य अन्त्रकृतया शवशिरारचितया स्रजा मालया कचान् केशान् बद्ध्वा वयस्य अग्नेः सदृशा

तत्र,

सङ्क्रान्तवर्णान्तरगाधिसूनोः
सम्पर्कपुण्यादिव रामभद्रः।
चात्त्रक्रमात् पिप्पलदण्डयोग्यः
पलाशदण्डादृतपाणिरासीत् ॥ ४९ ॥

मारीचनीचमतिराहवमारचय्य
चिप्तः क्षणेन रघुनायकसायकेन।
मध्ये पयोनिधि भयेन निमग्नमूर्त्ति-
र्वेश पुपोष जलमानुषनिर्विशेषम् ॥५०॥

---

तुल्यया त्वरा खेचरान् अन्तरीचचारिणः जीवान् दग्ध्वा प्रताप्येति यावत् दिवः आकाशस्य रन्ध्रं विवरं रुन्धन्ति व्याप्नुवन्ति। शार्दूलविक्रीडितं वृत्तम् ॥४८॥

सङ्क्रान्तेति। रामभद्रः संक्रान्तं लब्धं वर्णान्तरं वर्णविशेषः ब्राह्मण्यमिति भावः येन तथाभूत. गाधिसूनुः विश्वामित्रः तस्य सम्पर्कपुण्यादिव संसर्गजनितात् सुकृतादिव चात्त्रक्रमात् चत्त्रियधर्मानुसारात् पिप्पलदण्डयोग्यः वटदण्डग्रहणाधिकारी अपि-रत्राध्याहार्य्यः। ब्राह्मणो विल्वपालाशौ चत्त्रियो वाटखादिरा-विति मनुः। पलाशानां राचसानां दण्डे शासने आदृतः आदरवान् पाणि अथच पलाशदण्डे ब्राह्मणब्रह्मचारिणा धार्य्ये इति भावः आदृत पाणिर्यस्य तथाभूतः आसीत्। राचसान् हन्तुं करेण कार्मुकं जग्राहेति भाव। इन्द्रवज्रावृत्तम् ॥४९॥

मारीचेति। मारीच एव नीचमतिः निकृष्टबुद्धिर्निशाचर इति शेषः आहवं युद्धम् आरचय्य कृत्वा रघुनायकस्य रामस्य सायकेन शरेण मध्येपयोनिधि मध्येसमुद्रं समुद्रस्य मध्ये इत्यर्थः चिप्त

सुबाहुराहवोन्मत्तः कृत्तः काकुत्स्थपत्रिणा ।
मुनीनामनभिप्रेतः प्रेतनाथातिथीकृतः ॥५१॥

वंशस्पृशा हृदयहारिफलान्वितेन
स्नेहान्वितेन निरगादनुरागिणीव
प्राणावली हृदयतः पिशिताशनानाम् ॥५२॥
अथ निशिचरघाताच्छान्तवैतानविघ्नो
मुनिरवभृथकृत्यं विश्वहृद्यं समाप्य ।

---

अतएव भयेन रामादिति शेषः निमग्ना जलमध्यं प्रविष्टा मूर्ति-र्यस्य तथाभूतः सन् जलमानुषात् निर्विशेष विशेषरहित वेश जलमानुषसदृशदेहमिति यावत् पुपोष दधार । वसन्ततिलकं वृत्तम् ॥५०॥

सुबाहुरिति । आहवे सङ्ग्रामे उन्मत्तः समुद्धत इति यावत् मुनीनाम् अनभिप्रेतः अप्रीतिकर इत्यर्थः सुबाहुः काकुत्स्थस्य रामस्य पत्रिणा शरेण कृत्तः छिन्नः सन् प्रेतनाथस्य यमस्य अतिथीकृतः यमालयं प्रेषित इति यावत् । अनुष्टुब्वृत्तम् ॥५१॥

वंशस्पृशेति । पिशिताशनानां राक्षसानां प्राणावली हृदयतः हृदयात् पक्षे स्त्रेहात् अनुरागिणी प्रेमवती रामेव कामिनीव वंशस्पृशा वंशनिर्मितधनुःस्पृशेत्यर्थः पक्षे कुलीनेनेति यावत् हृदयहारि मर्मभेदि यत् फलं फलक शिखरमिति यावत् पक्षे मनोहारि यत् फल सुरवसुखमिति यावत् तदन्वितेन तद्युक्तेन पक्षे तदभिलाषिणेति यावत् स्नेहान्वितेन तैलचिक्कणेनेति यावत् पक्षे प्रणयवता ईरितेन निक्षिप्तेन पक्षे दूतीप्रेरितेनेति यावत् रघुनायकसायकेन सहेत्यर्थः निरगात् निर्जगाम । राक्षसराज्ञी राक्षसाः प्राणान् जहुरिति भावः । उपमालङ्कारः । वसन्ततिलकं वृत्तम् ॥५२॥

अथेति । अथ निशाचराणां राक्षसानां घातात् बधात्

अस्नुत जयलक्ष्म्या राममाजौ समेतं
यजनजनितमूर्च्छा योक्तुमव्याजलक्ष्म्या ॥५२॥

अथ मिथिलां प्रति प्रस्थितो विश्वामित्रः काकुत्स्थयो-रित्थमकथयत्। पुरा खलु कुशेशयासनजन्मा कुशिकाभिधानो (च) राजर्षिः कुशनाभकुशाम्बप्रमुखैश्चतुर्भिः कौशाम्बीमहोदयधर्मारण्यगिरिव्रजाख्यानां पुरीणां कर्तृभिः पुत्री (क) बभूव। कुशनाभस्तु कन्याशतं घृताच्यामजनयत्। कन्यास्ताः सन्नद्धयौवनाः कामयमानः पवमानः प्रत्याख्यानात् प्रत्यापन्नमन्यु(ख)रासामवयवेष्वनार्जवमतनुत (ग)। अथ विदितवृत्तान्तेन कुशनाभेन तेन क्षमामेव

---

शान्तः निवृत्तः वैतानविघ्नः यज्ञव्याघातः यस्य तथाभूतो मुनिः विश्वेषां जगतां हृद्यं मनोहरं सुखदमित्यर्थः अवभृथकृत्यं दीक्षान्तस्नानविधिं समाप्य आजौ युद्धे जयलक्ष्म्या विजयश्रिया समेतं युक्तं रामं यजनात् यज्ञभूमेः जनिता उत्पादिता मूर्च्छा यस्याः तथाभूतया अव्याजलक्ष्म्या अकपटश्रिया सीतयेति यावत् योक्तुम् अस्नुत। रामे सीतां संयोजयितुमभिलषितवानित्यर्थः। मालिनीवृत्तम् ॥५२॥

(च) कुशेशयासनजन्मेति कुशेशयं कमलं, शतपत्रं कुशेशयमित्यमरः। आसनं यस्य सः कुशेशयासनो ब्रह्मा तस्मात् जन्म यस्य सः। कुशिकाभिधानः कुशिकनामा।

(क) कर्तृभिः अधिपतिभिः। पुत्री पुत्रवान्।

(ख) कामयमानः अभिलषन्। पवमानः वायुः। प्रत्याख्यानात् निराकरणात्। प्रत्यापन्नमन्युः जातक्रोधः।

(ग) अनार्जवं कौटिल्यम्। अतनुत कृतवान् कुब्जाः कृतवानित्यर्थः।

प्रतिक्रियां मन्वानेन चूलिसूनवे सोमदेवाय राज्ञे ब्रह्मदत्ताय प्रदत्तास्ताः प्रकृतिस्थाः (घ) बभूवुः। पुनरपि कुशनाभस्तु पुत्रीयन् पितृप्रसादादगाधसत्त्वान् (ङ) गाधिसन्तानसन्तातपादानुदपादयत्। इत्थं दाशरथिः कौशिकोत्पत्तिकथानिशमनेन निरायामायामिनी(च)मनुभूय बन्धूकस्तवकबन्धुरेण सन्ध्यारागेण प्राचीमुखे शोणीकृते (छ) शोणाभिधानं दधाने नदे प्रवर्त्तितप्रत्यूषकृत्यः (ज) कृतनिशमेन मुनिना सह गङ्गामुपतिष्ठमानेन पथा प्रातिष्ठत।

आजानपावनक्षीरां वृषानन्दविधायिनीम्।
श्रुतिप्रणयिनीं सोऽयमापगामाप गामिव ॥५४॥

---

(घ) प्रकृतिस्थाः सुस्थदेहा इत्यर्थः।

(ङ) पुत्रीयन् आत्मनः पुत्रमिच्छन्। पितृप्रसादात् पितृणामनुग्रहात्। अगाधसत्त्वान् दुर्बोधस्वभावान् महासत्त्वानित्यर्थः।

(च) कौशिकोत्पत्तिकथानिशमनेन विश्वामित्रोत्पत्तिकथाश्रवणेन। निरायामाम् आयामरहिता अल्पस्थायिनीमिति भावः यामिनीं रात्रिम्।

(छ) बन्धूकानां बन्धूकाख्यकुसुमानां स्तवकवत् बन्धुरः उन्नतानतः तेन, सन्ध्यारागेण सन्ध्यासञ्जातलौहित्येन प्राचीमुखे पूर्वदिङ्मुखे शोणीकृते रक्तीकृते।

(ज) प्रवर्त्तितप्रत्यूषकृत्यः कृतप्रातःकृत्यः।

आजानेति। सोऽयं रामः आजानम् आजन्मेत्यर्थः पावनं क्षीरं जलं पक्षे दुग्धं यस्याः तां, वृषस्य धर्मस्य पक्षे वृषभस्य आनन्दविधायिनीं, श्रुतिप्रणयिनीं शास्त्रप्रणयवतीम् उभयत्र समानमेतत्, आपगां नदीं गङ्गां गामिव आप प्राप्तवान्। उपमालङ्कारः। अनुष्टुब्वृत्तम् ॥५४॥

अथ भागीरथीकथां श्रोतुकामाय रामाय भगवानित्यमभाषत ।

पुरा तु मेनका नाम सुमेरोरभवत् सुता ।
गृहमेधी तयैवासीच्चक्रवर्त्ती धराभृताम् ॥५५॥
कन्याद्वयममुष्यासीदेका मन्दाकिनी तयोः ।
अन्या भगवती साक्षाच्चन्द्रचूड़कुटुम्बिनी ॥५६॥
तां नदीं विबुधा लब्ध्वा नाकलोकमनीनयन् ।
तपस्यन्तीं गिरिर्गौरीं देवाय महते ददौ ॥५७॥
शिवयोर्भुजतोर्वीर्य्यं हृत्वा धात्रा समर्पितम् ।
पावकः प्रतिजग्राह दैवतैरनुमोदितः ॥५८॥

---

पुरेति । पुरा पूर्वं सुमेरोः मेनका नाम सुता अभवत् । धराभृतां पर्वतानां चक्रवर्त्ती तयैव मेनकयैव गृहमेधी गृहस्थः श्रीमानित्यर्थः आसीत् । ता हिमालयः परिणीतवानिति भावः । अनुष्टुब्वृत्तम् ॥५५॥

कन्याद्वयमिति । अमुष्य हिमाद्रेः कन्याद्वयम् आसीत् । तयोः कन्ययोः एका प्रथमेत्यर्थः मन्दाकिनी गङ्गा, अन्या द्वितीयेत्यर्थः साक्षात् स्वयं भगवती चन्द्रचूड़स्य हरस्य कुटुम्बिनी गृहिणी ॥५६॥

तामिति । विबुधा देवाः तां नदीं मन्दाकिनीं लब्ध्वा नाकलोकं स्वर्गम् अनीनयन् प्रापयामासुः । गिरिर्हिमालयः तपस्यन्तीं तपश्चरन्तीं गौरीं द्वितीयां कन्यामिति यावत् महते देवाय हरायेत्यर्थः ददौ । अनुष्टुब्वृत्तम् ।५७॥

शिवयोरिति । पावकः अग्निः दैवतैः देवगणैः अनुमोदितः आज्ञप्तः सन् भुजतोः सम्भुञ्जतोः शिवयोः पार्वतीशङ्करयोः वीर्य्यं

अनपत्यानथामर्त्यान् बहुभार्य्याञ्च मेदिनीम् ।
अकरोदम्बिकाकोपः पुत्रालाभसमुद्भवः ॥५९॥
अथ सेनान्यमिच्छद्भिरुक्तः सब्रह्मभिः सुरैः ।
वह्निरङ्गाय जाह्नव्यां न्यषिञ्चद्वीर्य्यमैश्वरम् ॥६०॥
सापि समार्चिषा क्षिप्तं तेजस्तत् सोढुमक्षमा ।
हिमवत्प्रान्तकान्तारे श्रान्ता शरवणे जहौ ॥६१॥
तत्राभूत् कृत्तिकाप्रीत्यै षोढ़ारूढ़मुखाम्बुजम् ।
तारकध्वान्तविध्वंसि सद्यः षाण्मातुरं महः ॥६२॥

---

धृत्वा गृहीत्वा धात्र्या पृथिव्या समर्पितं प्रतिजग्राह भगवतोभुवि स्खलितं वीर्य्यं गृहीतवानित्यर्थः ॥५८॥

अनपत्यानिति । अथ वीर्य्यग्रहणानन्तरं पुत्रस्य अलाभेन समुद्भवतीति तथोक्तः, अम्बिकाया गौर्य्याः कोपः अमर्त्यान् देवान् अनपत्यान् अपुत्रान्, मेदिनीं पृथिवीञ्च बहुभार्य्यां बहुपतिकाम् अकरोत् । तेन च कर्मणा जातक्रोधा देवी देवान् अपुत्रा भवतेति, पृथिवीञ्च बहुभार्य्या भवेति शशापेति भावः ॥५९॥

अथेति । अथ स वह्निः सेनान्यं सेनापतिम् इच्छद्भिः स-ब्रह्मभिः सुरैः देवैः उक्तः त्वं वीर्य्यमिदं जाह्नव्यां निधेहीति कथित इत्यर्थः अङ्गाय झटिति सद्य एवेत्यर्थः ऐश्वरं वीर्य्यं जाह्नव्यां न्यषिञ्चत् निहितवान् ॥६०॥

सापीति । सापि जाह्नवी समार्चिषा अग्निना क्षिप्तं तत् तेजः सोढुं वोढुमिति यावत् अक्षमा अशक्ता अतएव श्रान्ता सती हिमवतः हिमाद्रेः प्रान्ते कान्तारे दुर्गमभूमौ यावत् तस्मिन् शरवणे जहौ तत्याज ॥६१॥

तत्रेति । तत्र शरवणे षोढ़ा षट्प्रकारेण आरूढ़ानि जातानि

त्रैविध्यं श्रूयतां वत्स ! सरितस्त्रिदिवौकसाम् ।
यथोक्तं हव्यमश्नन्त्या देवताया इवाध्वरे ॥६३॥
पुरीमयोध्यामध्यास्त सावित्रः सगरो नृपः ।
केशिनीसुमतिभ्याञ्च लङ्घितप्रथमाश्रमः ॥६४॥
स पुत्रीयन् सपत्नीकस्तपस्तेपे हिमालये ।
भृगुः प्रीतमनास्तस्मै ददौ दायादसम्पदम् ॥६५॥
असमञ्जसुतं लेभे वैदर्भी केशिनी तयोः ।
षष्टिं पुत्रसहस्राणां सुमतिश्च यवीयसी ॥६६॥

---

मुखाम्बुजानि यस्य तादृशं षडाननमित्यर्थः, तारक एव ध्वान्तं तमः तस्य विध्वंसि संहारकं, षसां मातॄणामपत्यं षाण्मातुरं महः तेजः सद्यः तत्क्षणात् कृत्तिकानां तदाख्यनक्षत्राधिदेवीनां प्रीत्यैः आनन्दाय अभूत् जज्ञे ॥६२॥

त्रैविध्यमिति। हे वत्स ! त्रिदिवौकसां देवानां सरितः नद्याः गङ्गाया इत्यर्थः, अध्वरे यज्ञे यथोक्तं यथाविहितं हव्यं हुतं वस्तु अश्नन्त्या भुञ्जानाया देवताया इव, त्रैविध्यं श्रूयताम् ॥६३॥

पुरीमिति । सावित्रः सवितृवंश्यः सगरो नाम नृपः केशिनी-सुमतिभ्यां महिषीभ्यामिति शेषः लङ्घितः अतिवाहितः प्रथमाश्रमः ब्रह्मचर्यं यस्य तथाभूतः सन् अयोध्यां पुरीम् अध्यास्त अधिवसति स्म । ब्रह्मचर्य्यानन्तरं केशिनीं सुमतिञ्च परिणीय गार्हस्थ्यधर्ममकरोदिति भावः ॥६४॥

स इति । स सगरः पुत्रीयन् आत्मनः पुत्रमिच्छन् सपत्नीकः सस्त्रीकः सन् हिमालये तपः तेपे चचार । भृगुः तदाख्यो महर्षिः प्रीतमनाः सन् तस्मै सगराय दायादसम्पदं पुत्रलाभरूपं वरमिति यावत् ददौ ॥६५॥

असमञ्जेति । तयोर्महिष्योः मध्ये वैदर्भी विदर्भराजदुहिता

असमञ्जसचारित्रमसमञ्जमपास्य सः ।
आरब्धहयमेधः सन्नमुञ्चत तुरङ्गमम् ॥६७॥

क्रव्यादवपुषा सोऽयमहारि हरिणा हयः ।
ततस्तं नष्टमन्वेष्टुं सौमतेयाः प्रतस्थिरे ॥६८॥

सर्वे सपर्वतामुर्वीं खनन्तः सगरात्मजाः ।
चक्रुर्जर्जरितध्वान्तं नागलोकं नखांशुभिः ॥६९॥

त एते तपसा दीप्ते तमस्तोयप्रमाथिनि ।
कापिले ज्वलने वीरा लेभिरे शलभोपमाम् ॥७०॥

---

केशिनी असमञ्जसुतम् असमञ्जं नाम पुत्रं, तथा यवीयसी कनिष्ठा देवी सुमतिः पुत्रसहस्राणां षष्टिं षष्टिसहस्रपुत्रानित्यर्थः लेभे प्राप ॥६६॥

असमञ्जसेति । स राजा असमञ्जसं सामञ्जस्यरहितं चारित्रं चरितं यस्य तादृशं दुर्वृत्तमित्यर्थः असमञ्जम् अपास्य त्यक्त्वा आरब्धहयमेधः प्रस्तुताश्वमेधयज्ञः सन् तुरङ्गमं मेध्यं अश्वम् अमुञ्चत तत्याज ॥६७॥

क्रव्यादेति । क्रव्यादवपुषा राक्षसमूर्त्तिना हरिणा इन्द्रेण सोऽयं हयः अश्वः अहारि हृतः । ततः तद्धरणानन्तरं सौमतेयाः सुमतिनन्दनाः षष्टिसहस्राणीति शेषः तम् अश्वम् अन्वेष्टुं प्रतस्थिरे प्रस्थिताः ॥६८॥

सर्वे इति । सर्वे सगरस्य आत्मजाः पुत्राः सपर्वताम् उर्वीं पृथिवीं खनन्तः सन्तः नागलोकं पातालं नखांशुभिः नखप्रभाभिः जर्जरितं खण्डितं नाशितमित्यर्थः ध्वान्तं तिमिरं यत्र तादृशं चक्रुः कृतवन्तः ॥६९॥

ते इति । ते एते वीराः सगरात्मजाः तपसा दीप्ते प्रज्वलिते, तम एव तोयं जलं प्रमथ्नातीति तथोक्ते मोहान्धकारनाशिनीत्यर्थः,

असमञ्जसुतं पौत्रमंशुमन्तमथाब्रवीत् ।
सप्तिं हृत्वा समाधत्तां सप्ततन्तुं भवानिति ॥७१॥
सोऽपि गत्वा बिलं तत्र दृष्ट्वा भस्मीकृतान् पितॄन् ।
साश्रुस्तेभ्यो जलं दित्सुश्चिराल्लेभे तुरङ्गमम् ॥७२॥
मातुलो गरुड़स्तेषामेन तत्रैवमब्रवीत् ।
गङ्गामिहानयायुष्मन्नेषामेषा गतिः परा ॥७३॥
ततस्तनयवृत्तान्तं श्रुत्वा लब्धतुरङ्गमः ।
समाप्य सगरः सत्रं पुत्रशोकाद्दिवं गतः ॥७४॥

---

कापिले कपिलसम्बन्धिनि ज्वलने अग्नौ शलभोपमा पतङ्गसादृश्यं लेभिरे प्रापुः । अश्वमन्विष्यन्तः पाताले कपिलसन्निधौ अश्वं दृष्ट्वा तं कापिलं नितरां दण्डयन्तः तत्कोपाग्निना भस्मतां गता इति भावः ॥७०॥

असमञ्जेति । अथ पुत्रगणनिधनश्रवणानन्तरमित्यर्थः राजा असमञ्जस्य सुतं पौत्रं अंशुमन्तं भवान् सप्तिं अश्वं हृत्वा आनीयेत्यर्थः सप्ततन्तुं यज्ञं समाधत्तां सम्पादयतु इति अब्रवीत् ॥७१॥

स इति । सोऽपि अंशुमान् बिलं पातालमित्यर्थः गत्वा तत्र पितॄन् पितृभ्रातॄनिति यावत् भस्मीकृतान् दृष्ट्वा साश्रुः सजलनयनः सन् तेभ्यः जलं तर्पणाञ्जलिमिति भावः दित्सुः सन् चिरात् तुरङ्गमं लेभे आससाद ॥७२॥

मातुल इति । तत्र पाताले तेषां सगरात्मजानां मातुलः मातृभ्राता गरुड़ः एनम् अंशुमन्तम् एवम् अब्रवीत्, हे आयुष्मन् ! इह अस्मिन् प्रदेशे गङ्गाम् आनय, एषा गङ्गा एषां सगरात्मजानां परा श्रेष्ठा गतिः उद्धारकारिणीति भावः ॥७३॥

तत इति । ततः अनन्तरं सगरः तनयानां पुत्राणां वृत्तान्तं

अथांशुमानयं राज्य चिराय परिपालयन् ।
दिलीपे न्यस्तभूभारस्तपस्तेपे हिमालये ॥७५॥
दिलीपेऽपि दिवं याते श्रुत्वा वृत्त भगीरथः ।
पितॄन् विधातुं सुगतीन् विदधे मतिमान्मतिम् ॥७६॥
अमर्त्यसरित कर्त्तुं मेने मर्त्यतरङ्गिणीम् ।
ततो गोकर्णमासाद्य तपस्यति भगीरथे ।
देवो देवापगा वोढुमन्वमस्त दयानिधिः ॥७७॥
अथ वीचीचयच्छन्नदिगन्तगगनान्तरा ।
ग्रग्राहग्रङ्गसम्भिन्नतारामौक्तिकदन्तुरा ॥७८॥

---

कपिलशापभस्मीभवनवार्त्तां श्रुत्वा अंशुमत्तुरङ्गमं सत्वं यज्ञ समाप्य सम्पाद्य पुत्रशोकात् दिवं स्वर्गं गतः पञ्चत्व प्रापेति यावत् ॥ ७४ ॥

अथेति । अथ सगरनिधनानन्तर अयं अंशुमान् चिराय दीर्घकालं राज्य परिपालयन् दिलीपे निजसुते इति शेषः न्यस्तः अर्पितः भूभारः राज्यभारः येन तथाभूतः पुत्रे राज्यं समर्प्येति भावः हिमालये तपः तेपे चचार गङ्गानयनार्थमिति भावः ॥ ७५ ॥

दिलीपेऽपीति । दिलीपेऽपि दिवं स्वर्गं याते मतिमान् भगीरथः दिलीपतनय इति शेषः वृत्त पूर्वपुरुषवृत्तान्तं श्रुत्वा पितॄन् सुगतीन् विधातुं कर्त्तुं मतिं विदधे कृतवान् ॥७६॥

अमर्त्यसरितमिति । अमर्त्यसरित सुरनदीं मर्त्यतरङ्गिणीं मनुष्यनदीं कर्त्तुं मेने अभिलषितवानित्यर्थः भगीरथ इति शेषः । ततः गोकर्णं गोकर्णाख्य निकेतनं आसाद्य भगीरथे तपस्यति तपश्चरति सति दयानिधिः देवः हर इति शेषः. देवापगा देवनदीं वोढुं शिरसा धर्त्तुमित्यर्थः अन्वमस्त अनुजज्ञे ॥ ७७ ॥

अथेति । अथ देवदेवानुमत्यनन्तरं वीचीनां तरङ्गाणां चयेन

तरङ्गाकृष्टमार्त्तण्डतुरङ्गायासितारुणा ।
फेनच्छन्नभ्रमातङ्गमार्गणव्यग्रवासवा ॥७९॥
आविःशाखिशिखोन्नेयनन्दनद्रुमकर्षणा ।
एकोदकनभोमार्गदिङ्मूढदिवसेश्वरा ॥८०॥
आवर्त्तगर्त्तसम्भ्रान्तविमानप्लवविप्लवा ।
नीलजीमूतशैवालकृतलेखाहरित्तटा ॥८१॥
अवलेपभराक्रान्ता सुरलोकतरङ्गिणी ।
पपात पार्वतीकान्तजटामण्डलगह्वरे ॥८२॥

---

समूहेन छन्नं व्याप्तं दिशां अन्तं गगनान्तरञ्च यया तथाभूता, शशाङ्कः चन्द्र एव शङ्कुः तेन सम्भिन्नानि युक्तानि तारा एव नक्षत्राण्येव मौक्तिकानि तैः दन्तुरा उन्नता, तरङ्गैराकृष्टैः मार्त्तण्डतुरङ्गैः सूर्याश्वैः आयासितः श्रान्तिं नीतः अरुणः सौरसूतः यया तादृशी, फेनैश्छन्नस्य आवृतस्य अलक्षितस्येति भावः अभ्रमातङ्गस्य ऐरावतस्येत्यर्थः मार्गणे अन्वेषणे व्यग्रः वासवः इन्द्रः यस्याः तथोक्ता, आविःशाखिशिखाभिः आविष्कृताभिः शाखिशिखाभिः उन्नेयं नन्दनद्रुमाणां कर्षणं यस्याः तथाविधा, एकेन उदकेन जलस्रोतसेत्यर्थः नभोमार्गेषु आकाशपथेषु दिक्षु च मूढः विस्मितः दिवसेश्वरः सूर्य्यः यस्याः तादृशी, आवर्त्तानां भ्रमीणां गर्त्तेषु अभ्यन्तरेषु संभ्रान्तानां घूर्णितानां विमानानां देवयानानां प्लवे सन्तरणे विप्लवः विगतिः यस्याः तथाविधा, नीला जीमूता एव शैवालाः तैः कृता विरचिता लेखा रेखा येषु तादृशानि हरिन्ति हरिद्वर्णानि तटानि यस्याः तथोक्ता, अवलेपभरेण गर्वातिशयेन आक्रान्ता समृद्धेत्यर्थः, सुरलोकतरङ्गिणी मन्दाकिनी पार्वतीकान्तस्य हरस्य जटामण्डलं जटाजूटं तस्य गह्वरे विवरे पपात ॥ ७८—८२ ॥

अलब्धनिर्गमा शम्भोः कपर्दादमरापगा ।
दधौ दूर्वाशिखालग्नतुषारकणिकोपमाम् ॥८३॥

अदृष्ट्वा तां नदीं तत्र तुष्टाव परमेश्वरम् ।
भगीरथो विधेः क्रौर्यात् परिक्षीणमनोरथः ॥८४॥

गङ्गा सप्ताकृतिर्जाता न्यपतद्धरमूर्धतः ।
तेन स्तुत्या प्रसन्नेन क्षिप्ता बिन्दुसरस्यपि ॥८५॥

तासु प्राचीं गतास्तिस्रस्तिस्रः प्राचेतसीं दिशम् ।
अन्या पितृक्रियोद्युक्ता भगीरथरथानुगा ॥८६॥

सैषा भागीरथी जह्नोः सत्रक्षेत्रं समाहृणोत् ।
तां स पीत्वा ततः शान्तो जह्नौ श्रोत्रेण वर्त्मना ॥८७॥

---

अलब्धेति । शम्भोः कपर्दात् जटाजूटात् अलब्धनिर्गमा निर्गममप्राप्नुवती अमरापगा गङ्गा दूर्वायाः शिखासु लग्नानां तुषारकणिकानाम् उपमां सादृश्यं दधौ प्राप ॥८३॥

अदृष्ट्वेति । विधेः भाग्यस्य क्रौर्यात् निष्ठुरत्वात् परिक्षीणमनोरथः अलब्धकाम इत्यर्थः भगीरथः तत्र जटामण्डले तां नदीम् अदृष्ट्वा परमेश्वरं हरं तुष्टाव ॥८४॥

गङ्गेति । तेन हरेण स्तुत्या भगीरथकृतयेति शेषः प्रसन्नेन प्रीतेन सता मूर्धतः शिरसः क्षिप्ता गङ्गा सप्ताकृतिः सप्तधारा जाता सती बिन्दुसरस्यपि न्यपतत् ॥८५॥

तास्विति । तासु सप्तसु आकृतिषु मध्ये तिस्रः आकृतयः प्राचीं पूर्वां दिशं, अपरास्तिस्रः प्राचेतसीं पश्चिमामिति यावत् दिशं गताः । अन्या सप्तमी आकृतिरित्यर्थः पितृक्रियासु उद्युक्ता तत्-परा, भगीरथम् अनुगच्छतीति तथोक्ता आसीदिति शेषः ॥८६॥

सैषेति । सा एषा भागीरथी जह्नोः मुनिविशेषस्य सत्रक्षेत्रं

तयातटिन्या जाह्नव्या प्राप्य त्रिदिवं पितॄन् ।
भगीरथः पुरं प्राप परिपूर्णमनोरथः ॥८८॥

अथ दाशरथिराकर्णितभागीरथीकथस्तां सरितं विलङ्घ्य विशालां पुरीं विलोकयन्, कस्येयमिति गाधिनन्दनमपृच्छत् । सोऽप्येवमवोचत् । पुरा खलु सुरासुराणां सुधानिमित्तं मिथोविरोधे प्रवृत्ते मायां विश्वमोहिनीं विश्वरूपः प्रदर्श्य दैतेयनिधनं शतधारपाणिना (झ) कारयामास । तेषां तु जननीदितिरतिवेलमभ्युपगतमन्युः शतमन्युशासनं (ञ) कमपि पुत्रं लब्धुकामा पत्युर्मरीचे(ट)र्वचनात् कुशप्लवने (ठ) सुचिरं तपश्चचार । तां कैतवेन शुश्रूषमाणः (ड) शक्रः शतधारपाणिः पादकलितकेशक-

---

यज्ञस्थान समाप्लाव्य आप्लावयामास । स जह्नुः तां भागीरथीं पीत्वा ततः पानानन्तरं शान्तः भगीरथस्तवेन प्रीत इति यावत् श्रोत्रेण कर्णेन वर्त्मना पथा श्रुतिविवरेणेत्यर्थः जहौ तत्याज ॥८७॥

तयेति । भगीरथः तया तटिन्या जाह्नव्या पितॄन् सगरात्मजान् त्रिदिवं स्वर्गं प्रापय्य उद्धृत्येति यावत् परिपूर्णमनोरथः कृतार्थः सन् पुरम् अयोध्यां प्राप आजगाम ॥८८॥

(झ) अथेति । शतधारपाणिना शतधारं वज्रं पाणौ यस्य तेन इन्द्रेणेत्यर्थः ।

(ञ) अतिवेलं अत्यर्थम् अभ्युपगतमन्युः जातक्रोधः । शतमन्युशासनम् इन्द्रदमनम् ।

(ट) मरीचेः मरीचिसुतस्य कश्यपस्येति यावत् ।

(ठ) कुशप्लवने कुशास्तरणे देशे स्थित्वेति शेषः ।

(ड) कैतवेन छलेन शुश्रूषमाणः सेवमानः ।

स्वापामापन्ननिद्रामपवित्रेति निर्वर्ण्यावगाहिततदीयजठरः (ढ) सप्तधा गर्भं निर्भिद्य निर्जगाम। दितिरपि विदिततनयकदना तान्यपि खण्डान्याखण्डलेन सप्त मरुतः (ण) कारयित्वा त्रिविष्टपं प्रविष्टा (त)। ततः,

अलम्बुषायामिक्ष्वाकोर्जातः कश्चिन्महीपतिः।
विशालः स्वेन नाम्नात्र विशालां विदधे पुरीम् ॥८९॥

तदनु तद्वास्तव्येन (थ) सुमतिनाम्ना नृपतिना कृतातिथ्यः सराजपुत्रो विश्वामित्रस्तत्र निशीथिनीं (द) नीत्वा मिथिलां प्रति प्रस्थितः प्रतपसामुत्तमस्य (ध) गौतमस्याश्रमं प्रदृश्य तद्दारानुषक्तां (न) कथामित्थमकथयत्।

---

(ढ) पादयोः कुत्सितः पतितः केशकलापः यस्याः तथाभूताम्, आपन्ननिद्रां निद्रां गताम्। निर्वर्ण्य दृष्ट्वा। अवगाहितं प्रविष्टं तदीयं जठरम् उदरं येन तथोक्तः।

(ण) विदिततनयकदना ज्ञातपुत्रकर्त्तना तानि खण्डानि गर्भस्येति शेषः सप्त मरुतः वायून्।

(त) त्रिविष्टपं स्वर्गं प्रविष्टा गता।

अलम्बुषायामिति। अलम्बुषाया नाम सुरसुन्दर्याम् इक्ष्वाकोः जातः उत्पन्नः विशालो नाम कश्चित् महीपतिः अत्र जगति स्वेन नाम्ना विशालां पुरीं विदधे स्थापयामास ॥८९॥

(थ) तद्वास्तव्येनेति तत्र विशालायां वास्तव्यं वसतिर्यस्य तेन विशालाधिपतिनेत्यर्थः।

(द) तत्र विशालायां निशीथिनीं रजनीम्।

(ध) प्रतपसाम् उग्रतपसाम् उत्तमस्य श्रेष्ठस्य।

(न) तद्दारानुषक्तां तस्य दाराः पत्नी अहल्येति यावत् तदनुषक्तां तत्सम्बद्धाम्।

अत्रागमद्गौतमधर्मदारा-
ननार्य्यजुष्टेन पथा महेन्द्रः।
क्रुद्धस्ततो निर्वृषणं वृषाणं
भार्य्यामदृश्याञ्च मुनिश्चकार॥९०॥

वनमेतद्गते रामे शापान्मुक्ता भविष्यसि।
इत्युक्त्वा गौतमः पत्नीं हिमाद्रिं तपसे ययौ॥९१॥
ततो विदितवृत्तान्ते देवतानां गणे तदा।
पितॄणां प्रभावाल्लेभे मेषस्य वृषणं वृषा॥९२॥
तदेनामेनसो मुक्ता प्रतिग्टह्लातु गौतमः।
इति तस्याश्रमं भेजे साकं रामेण कौशिकः॥९३॥

---

अत्रेति। महेन्द्रः सुरपतिः अत्र प्रदेशे गौतमस्य धर्मदारान् धर्मपत्नीम् अहल्यामित्यर्थः अनार्य्यजुष्टेन साधुविगर्हितेन पथा अगमत्। ततः तेन आचरणेनेत्यर्थः क्रुद्धो मुनिर्गौतमः वृषाणम् इन्द्रं निर्वृषणं पुंस्त्वरहितं भार्य्याञ्च अहल्याम् अदृश्यां पाषाणमयीमिति भावः चकार। उपजातिर्वृत्तम्॥९०॥

वनमिति। गौतमः रामे एतत् वनं गते सति त्वं शापात् मुक्ता भविष्यसि इति पत्नीं प्रत्युक्तामिति भावः उक्त्वा तपसे हिमाद्रिं ययौ॥९१॥

तत इति। ततः अनन्तरं गौतमशापात् परमिति यावत् देवतानां गणे विदितवृत्तान्ते विज्ञातदेवेन्द्रव्यापारे सति तदा पितॄणाम् अग्निष्वात्तादीनां प्रभावात् वृषा इन्द्रः मेषस्य वृषणं लिङ्गं लेभे॥९२॥

तदिति। तत् तस्मात् गौतमः एनसः पापात् मुक्ताम् एनां स्वपत्नीमिति शेषः प्रतिग्टह्लातु त्वत्प्रभावादिति शेषः। इति उक्त्वेति

ततः,

दुःखे सुखे च रज एव बभूव हेतु-
स्तादृग्विधे महति गौतमधर्मपत्न्याः ।
यस्माद् गुणेन रजसा विकृतिं गता सा
रामस्य पादरजसा प्रकृतिं प्रपेदे ॥६४॥

तस्मिन्नहल्यया कृतमातिथ्यं विश्वामित्रः सराजपुत्रः प्रतिगृह्य मिथिलोपकण्ठभुवि(प) जातं जनकयजनभवनमभजत (फ)। तदनु जनकेन विधिवदभ्यर्थिते तस्मिन् कुशिकसुते निमिकुलपुरोधाः शतानन्दो रघुनन्दनमेवमभाषत ।

तिष्ठन् क्षत्राहंवृत्तौ मुनिरगमदसावाश्रमं ब्रह्मसूनो-
रातिथ्यं तत्र लब्ध्वा निरवधिसुरभिप्राभवादित्यवेत्य ।

---

शेषः कौशिकः विश्वामित्रः रामेण सार्कं सह तस्य गौतमस्य आश्रमं मेने अगमेत्यर्थः ॥६३॥

दुःखे इति । रजः रजोगुणः पादरजश्च एव गौतमधर्मपत्न्याः अहल्यायाः तादृग्विधे तथाविधे महति दुःखे सुखे हेतुः बभूव । यस्मात् सा रजसा गुणेन कामरागेणेति भावः विकृतिं प्रकृतेरन्यथाभावं पाषाणत्वमिति भावः गता, किन्तु रामस्य पादरजसा चरणरेणुना प्रकृतिं स्वाम् अवस्थां प्रपेदे प्राप । वसन्ततिलकं वृत्तम् ॥६४॥

(प) मिथिलोपकण्ठभुवि मिथिलायाः पर्यन्तदेशे ।

(फ) जनकयजनभवनं जनकस्य यज्ञगृहम् अभजत प्राप ।

तिष्ठन्निति । असौ मुनिर्विश्वामित्रः क्षत्राहंवृत्तौ क्षत्रियोचिते आचारे तिष्ठन् ब्रह्मसूनोर्ब्रह्मपुत्रस्य वशिष्ठस्य आश्रमम् अगमत् । तत्र

सोऽनेन प्रार्थितोऽभूत्तदनु मुनिवरे नाभ्युपेते च कर्षन्
क्रोशन्तीं तां तयैव प्रचुरबलजुषा कान्दिशीको बभूव ॥८५॥

बहुश(ब)स्तद्बलचकितस्य तपोबलाधिगतविविधायुध-निगमस्य (भ) सुरभिनिमित्तं भूयोऽपि समारब्धसमरस्य दिव्यास्त्रपरम्परां (म) ब्रह्मदण्डेन निरुन्धन्नरुन्धतीजानि(य)-रवतस्थे। ततोऽयं जातव्यलीकः (र) चात्त्रतेजसः परं

---

वशिष्ठाश्रमे आतिथ्यम् अतिसत्कारं लब्ध्वा प्राप्य इति आतिथ्य॰मिति यावत् निरवधिः निरतिशय इत्यर्थः सुरभेः तदीयहोमधेनोः प्राभवात् प्रभावसामर्थ्यादित्यर्थः अवेत्य ज्ञात्वा वशिष्ठसुखादिति शेषः अनेन विश्वामित्रेण स वशिष्ठः प्रार्थितः सुरभिं मे देहीति याचितः अभूत् । तदनु तत्प्रार्थनानन्तरं मुनिवरे वशिष्ठे नाभ्युपेते नैव दास्यामीति अवस्थिते सति तां सुरभिं क्रोशन्तीं बलात् कर्षन् आकर्षयन्नित्यर्थः च स विश्वामित्रः प्रचुरबलजुषा प्रभूतसैन्यप्रसविन्या वशिष्ठादेशादिति भावः तया सुरभ्या कान्दिशीकः भय॰द्रुतः बभूव । कान्दिशीको भयद्रुत इत्यमरः । स्रग्धराछन्दः, स्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति तल्लक्षणात् ॥८५॥

(ब) बहुशः पुनः पुनः ।

(भ) तपोबलेति तपोबलेन अधिगतः प्राप्तः विविधः आयुध-निगमः अस्त्रविद्या येन तथाभूतस्य ।

(म) दिव्यास्त्रपरम्परां दिव्यास्त्रसमूहम् ।

(य) निरुन्धन् निवारयन् । अरुन्धतीजानिः वशिष्ठः ।

(र) जातव्यलीकः सञ्जातदुःखः ।

ब्राह्ममेव महो महीय. (ल) इति निश्चित्य तत्सिद्धये (व) दक्षिणस्यां दिशि तीव्रतरं तपश्चचार। अथ सावित्र: (श) क्षत्रियस्त्रिशङ्कुः सशरीरः स्वर्गसिद्धिं प्रार्थयमानो वशिष्ठेन प्रत्याख्यात(ष)स्तस्य पुत्रैर्महोदयादिभिर्निर्बन्धकुपितै(स)-र्दत्तचण्डालभावस्तमेनं (ह) शरणमभजत। असावपि तन्मनोरथपूर्त्तये (क्ष) क्रतुमेकं कर्त्तुं प्राक्रमत। तत्र समागतेषु ब्राह्मणेषु जुगुप्सया (क) त्रिशङ्कुयजनेनागतान् वशिष्ठपुत्रानयं (ख) शापेन श्वभक्षका(ग)नकरोत्। तत्र क्रतुभुजां (घ) वर्गेऽपि स्वर्गादनवतीर्णे (ङ)।

अथ महात्मा तपसः प्रभावा-

दारोपयामास दिवं त्रिशङ्कुम्।

---

(ल) महः तेजः। महीयः अतिमहत्।

(व) तत्सिद्धये तस्य ब्राह्ममहसः सिद्धये लाभाय।

(श) सावित्र सूर्य्यवंशीयः।

(ष) प्रत्याख्यातः निराकृतः त्वमत्र नाधिकारीति परित्यक्तः।

(स) निर्बन्धकुपितैः पुनः पुनराग्रहे यक्रुद्धैः।

(ह) एनं विश्वामित्रम्।

(क्ष) तन्मनोरथपूर्त्तये तस्य त्रिशङ्कोः इष्टसिद्धये।

(क) जुगुप्सया घृणया अवज्ञयेत्यर्थः।

(ख) अयं विश्वामित्रः।

(ग) श्वभक्षकान् कुक्कुरमांसादान् चाण्डालानित्यर्थः।

(घ) क्रतुभुजां देवानाम्।

(ङ) अनवतीर्णे अनागते।

अथमिति। अयं महात्मा विश्वामित्रः तपसः प्रभावात् त्रिशङ्कुतः

नीलाम्बरं निह्नुतराजवेषं
वर्षानिशीथादविशेषवेषम् ॥८६॥

ततः,

अपातयत् स्वर्गमुपाश्रयन्तं
सञ्जातमन्युः शतमन्युरेनम् ।
ततोऽवलम्ब्यास्य नियोगशङ्कुं
लेभे त्रिशङ्कुर्गगने प्रतिष्ठाम् ॥८७॥

ततः सर्वगीर्वाणगणप्रार्थनया परित्यक्तभुवनान्तरनिर्माणकर्माणं तत्र तपःप्रत्यूहः प्रत्युद्भूत इति (च) पश्चिमायां

---

अपनीतः राजवेशो यस्य तादृशं चाण्डालभावेनेति भावः नीलाम्बरं मलिनवसनं मेघाच्छन्नतया नीलवर्णगगनम् अतएव वर्षानिशीथात् वर्षाकालीनार्द्धरात्रात् अविशेषः अभिन्नः वेषः यस्य तादृशं त्रिशङ्कुं दिवं स्वर्गम् आरोपयामास निनाय । उपजातिवृत्तम् ॥८६॥

अपातयदिति । शतमन्युरिन्द्रः सञ्जातमन्युः जातक्रोधः सन् स्वर्गमुपाश्रयन्तम् एनं त्रिशङ्कुं अपातयत् प्राभ्रंशयत् । ततः अनन्तरं त्रिशङ्कुः अस्य विश्वामित्रस्य नियोगशङ्कुम् आज्ञायष्टिम् अवलम्ब्य आश्रित्य गगने प्रतिष्ठां स्थितिं लेभे प्राप । उपेन्द्रवज्रावृत्तम् ॥८७॥

(च) सर्वेति सर्वेषां गीर्वाणानां देवानां गणस्य प्रार्थनया परित्यक्तं भुवनान्तरस्य निर्माणकर्म येन तथाभूतम् । इत्थं त्रिशङ्कोरधःपातनात् आत्मानं देवैरवमन्यमानं बुद्धा तपोबलेन द्वितीयं सृष्टिकर्म कर्त्तुमुपक्रममाणमेनं देवाः समागत्य सन्तोष्य च प्रत्याख्यापयामासुः । ततश्च तस्मिन् कर्मणि स्वयं विरतोऽभू-

दिशि पुष्करे पुष्कल (छ) तपश्चरन्तममुमम्बरीषं यज्ञपशुवि-नाशप्रायश्चित्यार्थं बह्वीभिर्गोभिः क्रीत्वा नरपशुतां नीय-मानस्तावदृचीकस्य मध्यमपुत्रः शुनःशेफः शरणमयाचत। अथ भगवान् निजतनयविनिमयेन रक्षितुमेनमुन्मुखः पराङ्मुखेभ्य(ज)स्तेभ्यो हविष्यन्दादिभ्यः शापेन वशिष्ठपुत्र-दृशा (झ) दत्त्वा गाथाद्वयप्रीताभ्यामिन्द्रोपेन्द्राभ्याम म्बरीषं शुनःशेपञ्च परिपूर्णमानोरथौ कारयामास (ञ)।

ततः तपस्यन्तमेनं मेनकासङ्गतस्तपोभङ्गश्चिरमङ्गी-चकार (ट)। ततः पश्चात्तापाभिभूतो(ठ)ऽयमुत्तरे भूभृति(ड)

---

रिति भावः। तत्र तप क्षोभे इति भावः तपसा प्रत्यूहः विघ्नः। प्रत्युद्भूतः प्रत्युपस्थित।

(छ) पुष्कल प्रभूतम्।

(ज) पराङ्मुखेभ्य पितुरादेशात् विमुखेभ्यः।

(झ) वशिष्ठपुत्रदशा चाण्डालभावम्।

(ञ) गाथाद्वयेति गाथे स्तोत्रविशेषे तयोर्द्वयेन प्रीताभ्यां प्रसन्नाभ्याम् इन्द्रोपेन्द्राभ्याम् इन्द्रविष्णुभ्याम्। एकया गाथया इन्द्रं द्वितीयया गाथया उपेन्द्र स्तुत्वा तयोरनुग्रहेण राजानं सिद्धयज्ञ शुनःशेफञ्च अविनष्टदेहमकरोदिति भावः।

(ट) मेनकासङ्गतः मेनका नाम काचिदप्सराः सुरैस्तपो-विघ्नभङ्गार्थं प्रेषिता तस्याः सङ्गेनेत्यर्थः। तपोभङ्गः तपसः व्याघातः। चिरं दीर्घकालम्। अङ्गीचकार आचक्राम।

(ठ) पश्चात्तापाभिभूतः कथं मया एतावन्तं कालम् अनया सह विहारोत्सुकेन तपस्त्यक्तमिति सञ्जातमनस्तापः।

(ड) भूभृति पर्वते।

कौशिकीतीरे घोरं तपश्चचार। तत्र जम्भारिप्रहितां (ढ) रम्भां शैली (ण) भवेति शप्त्वा पूर्वस्यां दिशि निरस्तनि:-श्वासं तपश्चरन्नमुष्मिन्नुष्मणा (त) तपोऽग्ने रुह्यमानमनस्ता-मरसासन. सन्निधाय (थ) जितेन्द्रियत्वात् ब्रह्मर्षिरसि वसिष्ठोऽप्येव व्याहरतु (द) भवन्तमित्यभाषत।

असौ वशिष्ठनिर्देशाद् ब्रह्मर्षित्वमविन्दत।
यथोपनयसंस्काराद् द्विजन्मा ब्रह्मवर्चसम् ॥९८॥

इति जनकपुरोध:स्तावितो गाधिसूनु:
सह नृपतनयाभ्यां शर्वरीं तत्र नीत्वा।
विधिवददिशदर्घ्यं पुष्पदर्भोपगर्भं
सरसिजदयिताय ज्योतिषे छान्दसाय ॥९९॥

---

(ढ) जम्भारिप्रहिताम् इन्द्रप्रेषिताम्।

(ण) शैली शिलामयी।

(त) उष्मणा उत्तापेन।

(थ) तामरसासनः पद्मासनः ब्रह्मेत्यर्थः सन्निधाय समुपेत्य।

(द) व्याहरतु सम्बोधयतु।

असाविति। असौ विश्वामित्रः उपनयसंस्कारात् द्विजन्मा ब्राह्मणः ब्रह्मवर्चसं ब्रह्मण्य यथा वशिष्ठस्य निर्देशात् ब्रह्मर्षे इति सम्बोधनात् ब्रह्मर्षित्वम् अविन्दत प्राप ॥९८॥

इतीति। इतीत्थं जनकस्य पुरोधसा शतानन्देन स्ताविनः प्रशंसितः गाधिसूनुः विश्वामित्रः नृपतनयाभ्यां रामलक्ष्मणाभ्यां तत्र शर्वरीं रजनीं नीत्वा अतिवाह्य सरसिजदयिताय कमलकान्ताय छान्दसाय वेदमयाय ज्योतिषे तेजसे सूर्यायेत्यर्थः विधिवत् यथा-

तदनु जनकराजधानीं रामलक्ष्मणनिरीक्षणकौतुकादनवरतपातितेन विकचकुवलयनिचयोपचीयमानमेचकमरीचिवीचिमलिम्लुचेन (ध) पौरनारीजनविलोचनरोचिषा कवचितनरपतिपथां (न) विश्वामित्रः प्रविश्य दशरथतनयावित्यमभाषत । अस्यां खलु नगर्यामारब्धयज्ञस्य राज्ञो जनकस्य भागधेयात् सीतानामधेयभाजनमजीजनत् (प) कन्यारत्नं रत्नगर्भा भगवती (फ)। तस्याः पुनः किं परं किमपि माहात्म्यम् (ब)। यतः,

यस्याः पृथ्वी वसनमुदधिः पीठिका हाटकाद्रि-
र्हारः सिन्धुः सगरतनयस्वर्गमार्गैकबन्धुः ।
क्रीडाशैलः परमपुरुषक्रोडदंष्ट्रा च तस्याः
सीतामातुर्जगति मिथिलां सूतिकागेहमाहुः ॥१००॥

---

विधि पुष्पदर्भोदगर्भं पुष्पकुशमिश्रितम् अर्घ्यम् अदितये दत्तवान् । प्रातः सूर्यमुपतस्थे इति भावः । मालिनीवृत्तम् ॥९९॥

(ध) विकचेति विकचानां प्रस्फुटितानां कुवलयनिचयानां नीलोत्पलसमूहानाम् उपचीयमाना वर्द्धमाना मेचका श्यामला या मरीचिवीचिः मयूखराजिः तद्वत् मलिम्लुच मलिनं चौर्यमित्यर्थः तेन ।

(न) कवचितेति कवचितम् आवृतं नरपतिपथं राजपथं यस्यास्ताम् ।

(प) अजीजनत् उदपादयत् ।

(फ) रत्नगर्भा भगवती पृथ्वीत्यर्थः ।

(ब) पुनः किन्तु परं श्रेष्ठं किमपि अनिर्वचनीयम् । माहात्म्यं प्रभावः ।

यस्या इति । यस्याः पृथ्व्याः पृथिव्याः वसनं वस्त्रम् उदधिः

अत्र सीताविवाहार्थममरैरपि दुष्करम्।
जनकः कल्पयामास धनुरारोपणं पणम्॥१०१॥

ततो महर्षिर्जनकस्य राज्ञः
सभां सुधर्मासदृशीं प्रपेदे।
तौ चापतुश्चापविलोकलोलौ
सचापलौ कोसलराजपुत्रौ॥१०२॥

तत्र विधिवदभ्यर्चितः कथितदशरथतनयवृत्तान्तः कौशिकः प्रमुखै(भ)रमरैरस्मत्कुले महत्तरे देवराते (म) नि-

---

सम्मुद्र॰, पीठिका पीठासनं काष्ठकादि॰ उमेह॰, स्वार॰ सगर॰तनयानां स्वर्गमार्गे स्वर्गारोहणव्यापारे इति यावत् एकबन्धुः गङ्गे॰त्यर्थः। क्रीडायैव॰ विहारार्थिभिः परमपुरुषस्य क्रोड़स्य वराहस्य वराहरूपिणो विष्णोरित्यर्थः दंष्ट्रा दन्तः, तस्याः सीतामातुः पृथिव्याः जगति मिथिलां सूतिकागेहं प्रसवागारम् आहुः वदन्ति बुधा इति शेष॰। मन्दाक्रान्तावृत्तम्॥१००॥

अत्रेति। अत्र मिथिलायां जनकः सीताया विवाहार्थम् अमरैरपि देवैरपि दुष्करं दुःसाध्यं धनुष आरोपणं मौर्व्या सङ्गमन भङ्गनमिति भावः पणं शुल्कं कल्पयामास संस्थापयामास॥१०१॥

तत इति। ततः अनन्तर महर्षिर्विश्वामित्रः जनकस्य राज्ञः सुधर्मासदृशीं देवसभासमानां सभां प्रपेदे प्राप। तौ च चापस्य धनुषः विलोके अवलोकनार्थं लोलौ समुत्सुकौ अतएव सचापलौ चापल्येन चपलतया सहितौ कोसलराजपुत्रौ रामलक्ष्मणौ आपतुः प्राप्नुवन्तौ। उपजातिवृत्तम्॥१०२॥

(भ) प्रमुखैः प्रवरैः।

(म) देवराते देवरक्षिते देवदत्ते वा।

च्चिप्तं विशेषतः सीताशुल्कार्थं मया रच्चितमिदमिति जनकेन प्रदर्शितस्य चापस्यारोपणे राममादिदेश ।

रामे बाहुबलं विस्तृणति धनुर्वंशे गुणारोपणं
नाभूत्केवलमात्मना तिलकिते वंशेऽपि वैकर्त्तने ।
आकृष्टं नितरां तदेव न परं सीतामनोऽपि द्रुतं
भङ्गस्तस्य न केवलं चितिभुजां दोस्तम्भदम्भस्य च ॥१०३॥
रामाकर्षणभग्नकार्मुकभुवा ध्वानेन रोदोरुधा
दृप्तक्षत्रयशःसितच्छदकुले जीमूतनादायितम् ।
वीरश्रीप्रथमप्रवेशसमये पुण्याहघोषायितं
मैथिल्याः किल मानसे परिणये माङ्गल्यतूर्य्यायितम् ॥१०४॥

---

रामे इति । रामे बाह्वोर्बलं विस्तृणति प्रकटयति सति केवलं धनुर्वंशे कार्मुकदण्डे गुणारोपणं मौर्वीसंयोजनं नाभूत्, आत्मना तिलकिते भूषिते वैकर्त्तने सूर्य्यसम्बन्धिनि वंशेऽपि गुणारोपणं सद्गुणकीर्त्तिसंयोजनम् अभूदिति शेषः । तदेव धनुः परं केवलं नितराम् अत्यर्थम् आकृष्टं न, सीताया मनोऽपि द्रुतं झटिति आकृष्टं रामेणेति शेषः । तस्य धनुषः केवलं भङ्गो न, चितिभुजां राज्ञाम् अन्येषामिति शेषः दोस्तम्भदम्भस्य बाहुरूपस्तम्भगर्वस्य च भङ्गः आसीदिति शेषः । शार्दूलविक्रीडितं वृत्तम् ॥१०३॥

रामेति । रोदसी द्यावापृथिव्यौ रुणद्धि आपूरयतीति तथोक्तेन द्यावापृथिव्योरन्तरालमापूरयतेत्यर्थः रामस्य आकर्षणेन भग्नात् कार्मुकात् भवतीति तथोक्तेन ध्वानेन शब्देन दृप्तानां गर्वितानां क्षत्राणां राज्ञां यश एव सितच्छदकुलं हंसकुलं तस्मिन् जीमूतनादायितं मेघनादेनेवाचरितम् । यथा मेघागमे हंसाः पृथिवीं परित्यज्य पलायमाना मानसं सरो यान्ति तथा राज्ञां यशांसि रामस्य धनु-

रवः कठिनकर्षणत्रुटितचापजन्मा क्षणा-
द्दिशां द्विरदचीत्कृतैः कृतहरित्पतिस्वागतः ।
जगद्भ्रमणकौतुकोच्चलितरामकीर्त्यङ्गना-
प्रयाणपटहध्वनिं प्रथयति स्म ताराध्वनि ॥१०५॥

तत्र सीतापरिणयकृतनियमजनकप्रहितदूताहूतः (य) पुरोहिताभ्युपगमा(र)न्मिथिलामुपागमद्दशरथः ।

---

मङ्गलशब्देन विज्ञयमापद्यन्ते स्मेति भावः । वीरश्रियः प्रथमप्रवेशसमये पुण्याहघोषायितम् अद्य पुण्यं दिनम् अद्य पुण्यं दिनम् इति माङ्गल्यशब्देनेवाचरितम् । मैथिल्याः सीतायाः मानसे परिणये उद्वाहे माङ्गल्यतूर्य्यायितं मङ्गलाय हितं माङ्गल्यं यत् तूर्य्यं वादित्र-भेदः तेनेवाचरितम् । उपमालङ्कारः । शार्दूलविक्रीडित वृत्तम् ॥१०४॥

रव इति । कठिनेन दृढेन कर्षणेन त्रुटितात् भग्नात् चापात् धनुषः जन्म यस्य तथोक्तो रवः ध्वानः क्षणात् क्षणमात्रेणैव दिशां द्विरदचीत्कृतैः दिग्गजचीत्कारैः कृतं हरित्पतिभिः दिक्पालैः स्वागतं शुभागमनप्रश्न इति भावः यस्य तथोक्तः सन् ताराणां नक्षत्राणाम् अध्वनि पथि जगत्सु भ्रमणेन यत् कौतुकम् औत्सुक्यं तदर्थम् उच्चलिता प्रस्थिता रामस्य या कीर्त्तिरूपा अङ्गना नारी तस्याः प्रयाणे यात्रायां पटहध्वनिं वाद्यविशेषरव प्रथयति स्म प्रकटयति स्म । पृथ्वीवृत्तम् ॥१०५॥

(य) सीतेति सीतायाः परिणयाय उद्वाहार्थं कृतो नियमः निश्चयो येन तथाभूतेन जनकेन प्रहितः प्रेरितः दूतः सन्देशहरः, स्यात् सन्देशहरो दूत इत्यमरः । तेन आहूतः ।

(र) पुरोहितेति पुरोहितस्य शतानन्दस्य अभ्युपगमः प्रत्युद्-गमनं तस्मात् ।

यत्कीर्त्तिस्तिलकायते सुरवधूसङ्गीतगोष्ठीमुखे
येनाद्य. पितृमान् पुमान् वसुमती येनैव राजन्वती।
इन्द्रः सङ्गरसङ्कटेषु विजहौ वीरस्य यस्योन्मुखः
प्रेङ्खत्स्यन्दनकेतनाम्बरदशासन्दर्शनाद् दुर्दशाम् ॥१०६॥

ततः,

जनकः स्वकनीयांसमाजुहाव कुशध्वजम्।
हत्वा युधि सुधन्वान साङ्काश्ये स्थापितं पुरे ॥१०७॥

तदनु ताभ्या(ल)मभ्यर्चितः सपुरोहितो दशरथस्तत्र पुत्राणां गोदानमङ्गलं निर्वर्त्तयामास (व)।

---

य दिति। यस्य दशरथस्य कीर्त्तिः सुरवधूना या सङ्गीतगोष्ठी सङ्गीतसभा तस्या मुखे तिलकायते तिलकभूषणमिवाचरति, सुरवध्वः सङ्गीतारम्भे यस्य कीर्त्तिं गायन्तीति भावः। आद्यः पुमान् विष्णुः येन दशरथेन पितृमान् यं पितरमुपगत इति भावः, वसुमती पृथ्वी येनैव दशरथेन राजन्वती शोभनराजवती, सुराज्ञि देशे राजन्वानित्य-मरः। इन्द्रः सङ्गरसङ्कटेषु संग्रामविपत्सु उन्मुखः अर्द्धमुखः सन् यस्य वीरस्य दशरथस्य प्रेङ्खतः चलतः स्यन्दनस्य रथस्य यत् केतना-म्बरं ध्वजवस्त्रवसन पताकेत्यर्थः तस्य दशा अञ्चलं प्रान्तदेशः तस्याः सन्दर्शनात् अवलोकनात् दुर्दशा दुरवस्थाम् असुरजयकतामिति भावः विजहौ तत्याज। शार्दूलविक्रीडित वृत्तम् ॥१०६॥

जनक इति। जनकः युधि युद्धे सुधन्वानं तदाख्यं नृपतिं हत्वा साङ्काश्ये तन्नामनि पुरे नगरे स्थापितं स्वस्य आत्मनः कनीयास कुशध्वज आजुहाव आहूतवान् ॥१०७॥

(ल) तदन्विति तदनु तदनन्तर कुशध्वजागमनात् परमित्यर्थः। ताभ्या जनककुशध्वजाभ्याम्।

(व) गोदानमङ्गलं गोदानरूपं माङ्गलिकं कर्मेति यावत् विवाहात् प्राक् कर्त्तव्यमिति भावः। निर्वर्त्तयामास सम्पादयामास।

जग्राह जनकात्सीतां तातादेशेन राघवः ।
आम्नायशासनेनार्चां यजमानादिवानलः ॥१०८॥

आश्चर्य्यमेतत् ।

गुणमनिमिषचापे कश्चिदारोप्य सीतां
कुशिकतनयवाक्यादग्रहीद्रामभद्रः ।
तदनु तदनुजन्मा मैथिलेन्द्रस्य चित्ते
निहितबहुगुणः सन्नूर्मिलां लक्ष्मणोऽपि ॥१०९॥

ततो भरतशत्रुघ्नौ कुशध्वजनियोगतः ।
माण्डवीश्रुतकीर्तिभ्यामभूतां गृहमेधिनौ ॥११०॥

अथ दशरथः स्वतनयैः सह कृतविवाहैर्विदेहेभ्यः प्रति-

---

जग्राहेति । राघवः रामः, अनलः अग्निः आम्नायशासनेन वेदविधानेन यजमानात् याज्ञिकात् अर्चां पूजामिव, तातस्य पितुरादेशेन जनकात् सीतां जग्राह ॥१०८॥

गुणमिति । रामभद्रः कुशिकतनयस्य विश्वामित्रस्य वाक्यात् अनिमिषचापे देवधनुषि कश्चित् गुणं मौर्वीमित्यर्थः आरोप्य सीताम् अग्रहीत् । तदनु सीताग्रहणानन्तरं तदनुजन्मा तस्य रामस्य अनुजः लक्ष्मणोऽपि मैथिलेन्द्रस्य जनकस्य चित्ते निहिता अर्पिता स्थापिता इति यावत् बहवः गुणाः स्वकीया इति भावः येन तथाभूतः सन् ऊर्मिलां तदाख्यां जनकनन्दिनीम् अग्रहीदिति पूर्वेणान्वयः । मालिनीवृत्तम् ॥१०९॥

तत इति । ततः अनन्तरं भरतशत्रुघ्नौ कुशध्वजस्य नियोगतः आदेशात् माण्डवीश्रुतकीर्त्तिभ्यां कुशध्वजसुताभ्यामिति शेषः गृहमेधिनौ गृहिणौ सदारावित्यर्थः अभूताम् । भरतः माण्डवीं शत्रुघ्नश्च श्रुतकीर्त्तिमग्रहीदिति भावः ॥११०॥

निवर्त्तमानो दुर्निमित्तदूयमानान्तरङ्गः (श) संवर्त्तसमय-
समुज्जृम्भितहुतवहदुःसहरोषभीषणं (ष) दुर्वारपराक्रम क्षत्र-
वर्गगर्वसर्वङ्कषपरश्वधधाराधीनरुधिरधारापरिकल्पितपितृ-
तर्पणं (स) दर्पवतामग्रेसरं समुदग्रप्रतापं (ह) तपःसमुचि-
तवल्कलमयवसनं वसान(च)मपि वासनावशादनतिपरि-
मुषितयुद्धश्रद्धं (क) मध्येमार्गं (ख) भार्गवमुनिमन्विष्टराम-
भद्र(ग)मद्राक्षीदप्राक्षीच्च। तन्निरीक्षणा(घ)देव प्रक्षीण-

---

(श) दुर्निमित्तेति दुर्निमित्तेन अशुभलक्षणेन दूयमानं तप्यमानम् अन्तरङ्गम् अन्तःकरणं यस्य तथोक्तः।

(ष) संवर्त्तेति संवर्त्तसमये प्रलयकाले, संवर्त्तः प्रलयः कल्पक्षयः कल्पान्त इत्यमरः। समुज्जृम्भितः सम्यक् प्रज्वलितः यः हुतवहः अग्निः तद्वत् दुःसहेन रोषेण क्रोधेन भीषणः भयङ्करः तम्।

(स) क्षत्रेति क्षत्रवर्गाणां गर्वस्य अहङ्कारस्य सर्वङ्कषः सम्यक् चूर्णन इत्यर्थः यः परश्वधः कुठारः तस्य धारायाः अधीनाभिः आयत्ताभिः रुधिरधाराभिः रक्तप्रवाहैः परिकल्पितं सम्पादितं पितृणां तर्पणं येन तथोक्तम्।

(ह) दर्पवताम् अहङ्कारिणाम् अग्रेसरं श्रेष्ठम्। समुदग्रः समुन्नतः समुज्ज्वलितः प्रतापो यस्य तादृशं तम्।

(च) तपःसमुचितं वल्कलमयं वसनं वसानं परिदधानम्।

(क) वासनावशात् संस्कारवशात् अनतिपरिमुषिता असम्यगपनीता युद्धश्रद्धा येन तथाविधम्।

(ख) मध्येमार्गं मार्गस्य मध्ये

(ग) अन्विष्टेति [illegible] रामभद्रः येन तथाविधम्।

(घ) [illegible] तस्य [illegible] निरीक्षणात् अवलोक-

र्षो(ङ)ऽपि महर्षिभि. सह विधाय सपर्य्यामार्य्यशील:
(च) कुशलमन्वयुङ्क्त (छ) ।

अथ दशरथवाणीं तामशृण्वन् प्रसन्नां
भृगुपतिरिदमूचे प्रस्थितं रामभद्रम् ।
अवजिगमिषुरास जीर्णचापात्तकीर्त्ते-
रविदितपरशोस्ते दोर्मद कार्मुकेऽस्मिन् ॥१११॥

आदाय तत्सगुणमाशु विधाय तत्र
सन्धाय बाणमवधार्य्य तपोधनत्वम् ।
तज्जीविताय दयमानमना मनीषी
सम्भूतघोरसमराद् विरराम रामः ॥११२॥

---

(ङ) प्रक्षीणहर्षः विलुप्तधृतिः ।

(च) सपर्य्या पूजाम् । आर्य्यशीलः साधुप्रकृतिः ।

(छ) अन्वयुङ्क्त अपृच्छत् ।

अथेति । अथ दशरथकृतपूजाग्रहणानन्तर भृगुपति· परशु-राम. प्रसन्ना प्रीतियुक्ता ता दशरथवाणीम् अशृण्वन् अगणयन्निति भाव प्रस्थित चलित पथीति शेषः रामभद्रम् इदं वच इति शेषः ऊचे उक्तवान् । जीर्णेन चापेन धनुषा आत्ता गृहीता कीर्त्ति यावत् कीर्त्तिर्येन तथाभूतस्य अविदितः अज्ञातः परशु· मदीय इति भावः येन तथाभूतस्य मम परशुधाराम जानत इति यावत् ते तव अस्मिन् मदीये इति भाव· कार्मुके धनुषि दोर्मद बाहुबलदर्पम् अवजिगमिषु· अवगन्तुमिच्छु· आसम् अभवम् । मालिनीवृत्तम् ॥१११॥

आदायेति । मनीषी बुद्धिमान् राम तत् जामदग्न्य धनु-रित्यर्थः आदाय गृहीत्वा आशु शीघ्रं तत्क्षणमेवेत्यर्थः सगुणं मौर्व्वीसहितं विधाय कृत्वा तत्र धनुषि बाण सन्धाय संयोज्य तपो-

तावुभौ च भृगुवंशसम्भवौ
चापदण्डजमदग्निसम्भवौ ।
प्रह्वभावमवलम्ब्य केवलं
राघवार्पितगुणौ बभूवतुः ॥११३॥

युगपत्प्राप्तगुणयोश्चापभार्गवयोस्तयोः ।
ऋजुता वक्रतां प्राप वक्रतापि तथार्जवम् ॥११४॥

ततस्तत्क्षणममोघेन राघवः शरेण भार्गवस्य स्वर्गगतिं रुरोध । स्थाने (ज) हि तत् ।

---

अनन्त तस्येति शेषः अवधार्य्य तस्य परशुरामस्य जीविताय प्राणरक्षणाय दयमानमनो यस्य तथाभूतः सन् सम्भूतात् उपस्थितात् घोरात् दारुणात् समरात् युद्धात् विरराम निववृते । वसन्ततिलकं वृत्तम् ॥११२॥

ताविति । भृगुवंशसम्भवौ भृगुकुलसमुद्भूतौ तौ उभौ चापदण्डजमदग्निसम्भवौ कार्मुकपरशुरामौ केवलं प्रह्वभावं नतभावम् अवलम्ब्य प्राप्य राघवार्पितगुणौ राघवेण रामेण अर्पितः योजितः गुणः मौर्वी अन्यत्र गुणः विनयः ययोः तथोक्तौ बभूवतुः । धनुः रामेणावनम्य ज्यया सङ्गमितं तेन च परशुरामोऽवनतः विनयं प्रापेति भावः । रथोद्धतावृत्तं, रात् परैर्नरलगैः रथोद्धतेति लक्षणात् ॥११३॥

युगपदिति । युगपत् समकालं प्राप्तगुणयोः अधिगतमौर्वीकस्यैकस्य प्राप्तविनयस्यान्यस्येति भावः तयोश्चापभार्गवयोः ऋजुता चापस्येति शेषः वक्रतां कुटिलतां तथा वक्रतापि भार्गवस्येति शेषः आर्जवम् ऋजुतां प्राप । ज्यायुक्तं धनुर्मण्डलाकारत्वेन कुटिलं भार्गवश्च दर्पोपशमनात् शान्तो बभूवेति भावः ॥११४॥

(ज) स्थाने युक्तं, युक्ते द्वे साम्प्रतं स्थाने इत्यमरः ।

नूनं जनेन पुरुषे महति प्रयुक्त-
मागः परं तदनुरूपफलं प्रसूते ।
कृत्वा रघूद्वहगतेः क्षणमन्तरायं
यद्भार्गवः परगतेर्विहतिं प्रपेदे ॥११५॥

अथ संक्रान्तया (ञ) जामदग्न्यशक्तिसम्पदा सम्पन्नं (ञ) पन्नगपरिवृढभोगभुजाभिराम(ट)मविरलपुलक(ठ)मालिङ्ग्य मूर्ध्न्युपाघ्राय दशरथः परिखयेव परिसरन्त्या (ड) सरयूसरितानुविद्धा(ढ)मयोध्यां दारकान् (ण) सदारान्

---

नूनमिति । जनेन महति पुरुषे महात्मनि प्रयुक्तं परद्रुह्वत् कृतम् आगः अपराधः, आगोऽपराधो मन्तुश्चेत्यमरः । नूनं निश्चितं तदनुरूपं तस्य आगसः अनुरूप सदृशं फलं प्रसूते जनयति, यत् यतः भार्गवः परशुरामः रघूद्वहस्य रामस्य गतेः गमनस्य क्षणम् अल्पकालम् अन्तरायं विघ्नं कृत्वा परगतेः परमाया गतेः स्वर्गगमनस्येत्यर्थः विहतिं व्याघातं प्रपेदे प्राप । वसन्ततिलकं वृत्तम् ॥११५॥

(ञ) संक्रान्तया सङ्गतया ।

(ञ) जामदग्न्यस्य शक्तिसम्पदा सम्पन्नं युक्तम् ।

(ट) पन्नगानां भुजङ्गानां परिवृढः प्रभुर्वासुकिरित्यर्थः तस्य भोग· शरीरं, भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोरित्यमरः । तद्वत् यौ भुजौ बाहू ताभ्याम् अभिरामः सुन्दरः तं महाभुजमिति यावत् ।

(ठ) अविरलं सान्द्रं पुलकं रोमाञ्चः यस्मिन् तद् यथा तथा ।

(ड) परिसरन्त्या प्रवहन्त्या ।

(ढ) अनुविद्धां वेष्टिताम् ।

(ण) दारकान् पुत्रान् ।

सादरमवलोकयन्तीनां पौरपुरन्ध्रीणां निरन्ध्रितगवाक्षैः (त) कटाक्षैः सौन्दर्य्यवञ्चिततापिच्छैः (थ) पिपासातपत्रायमाण-धवलातपत्रः (द) प्रविवेश। तत्र,

लज्जावशादविशदस्मरविक्रियाभि-
स्ताभिर्वधूभिरतिवेलमवाप्तसौख्यान्।
इक्ष्वाकुनाथतनयान् प्रथमो रसानां
तारुण्ययोगचतुरश्चतुरः सिषेवे॥११६॥

विद्ययेव तयोद्वाह्या दर्भपत्राग्रधीः सुधीः।
राजपुत्र्या तया रामः प्रपेदे प्रीतिमुत्तमाम्॥११७॥

इति श्रीविदर्भराजविरचिते चम्पूरामायणे बालकाण्ड समाप्तम्।

---

(त) निरन्ध्रितगवाक्षैः आच्छादितवातायनैः।

(थ) सौन्दर्य्येति सौन्दर्य्येण चारुतया वञ्चितं विप्रलब्धं निर्जितमित्यर्थः तापिच्छं तमालकुसुमं यैः तथाभूतैः श्यामलैरिति भावः।

(द) पिपासा पानेच्छा एव आतपः सौरमयूखः तस्मात् त्राय-माणं धवलं श्वेतम् आतपत्रं यस्य तथाभूतः।

लज्जेति। तारुण्यस्य यौवनस्य योगेन सङ्गेन चतुरः प्रवीणः इति भावः, रसानां शृङ्गारहास्यकरुणवीरवीभत्सरौद्रभयानकाद्भुता-ख्यानां प्रथमः आद्यः शृङ्गाररस इत्यर्थः, लज्जावशात् अविशदा अस्फुटा स्मरविक्रिया कामावेशः यासां ताभिः वधूभिः नारीभिः अतिवेलम् अतिमात्रम् अवाप्तं प्राप्तं सौख्यम् आनन्दः यैः तथो-क्तान् चतुरः इक्ष्वाकुनाथतनयान् दशरथसुतान् सिषेवे भेजे। वस-न्ततिलकं वृत्तम्॥११६॥

विद्ययेति। दर्भपत्राग्रधीः कुशाग्रबुद्धिः रामः तयोद्वाह्या

# अथ अयोध्याकाण्डप्रारम्भः ।



गच्छता दशरथेन निर्वृतिं
भूभुजामसुलभा भुजाबलात् ।
मातुलस्य नगरे युधाजितः
स्थापितौ भरतलक्ष्मणानुजौ ॥ १ ॥

अथ दशरथः सुतं राम स्वतस्त्रिजगत्पतिं
स्वविषयमहीमात्रे कर्तुं पतिं विदधे मतिम् ।
भुवनभरणे कल्पं कल्याणभूधरमादरात्
स्वगृहपटलीधुर्य्यस्तम्भं विधातुमना इव ॥ २ ॥

---

त्रिवेदीदर्शनजनितया विद्यया ज्ञानेन सुधीर्विद्वानिव तया राजपुत्र्या सीतया उत्तमां प्रीतिं प्रपेदे प्राप । उपमालङ्कारः । अनुष्टुब्वृत्तम् ॥ ११७ ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण कृता
चम्पूरामायणबालकाण्डव्याख्या समाप्ता ।



गच्छतेति । भुजाबलात् बाहुबलात् भूभुजां राज्ञाम् असुलभां दुर्लभामिति यावत् निर्वृतिं सुखं गच्छता लभमानेन दशरथेन मातुलस्य भरतस्येति शेषः युधाजितः नगरे केकयराजभवने इति यावत् भरतः लक्ष्मणानुजः शत्रुघ्नः तौ स्थापितौ प्रेषिताविति भावः । रथोद्धतावृत्तम् ॥ १ ॥

अथेति । अथानन्तरं दशरथः स्वतः स्वयमित्यर्थः त्रिजगतां

तदनन्तरमसौ संमन्त्र्य मन्त्रिभिः सह पौरवृद्धान् वृद्धश्रवःपुरोधसः समान् (क) पुरोहितान् समाहूय समादिदेश। विदितमेव हि भवतां शिवतातिमेव मतिं दधानाः सुपथा सुसञ्चरमाणाः प्रार्थिनान्द्यमानमानसाः मानधनाः अयशःसरणिसम्मार्जनजागरूकाः (ख) जनोपतापमार्जनपरा. (ग) परां निर्वृतिमुपेत्य देवभूयङ्गताः (घ) सर्वे न. पूर्वपुरुषा इति। तस्मादस्माभिरप्येतेषां सरणिमनुसरमाणै(ङ)रेतावन्तं कालं परिपालिता. किल सकलाः

---

पतिम् अनन्यस्य भुवनानां भरणे दक्ष समर्थं कल्पान्तभूधर अङ्कुरपर्वतं अङ्कुरमवगमित्यर्थ. एवं राम तत्र आत्मनः स्वरूपदर्शनोत्सुकतया भूत्वा. भारधारी सम्भः न विधातुमना इव चिकीर्षुरिव स्वविषयः स्वाधिकार इव मही तस्मात्तं पतिं कर्तुं मतिं विदधे कृतवान्। हरिणोक्तं, नवमरथना नः सहस्रैदैत्यैररिभो भवेति तद्वचनात् ॥२॥

(क) वृद्धश्रव इति वृद्धश्रवा इन्द्र, वृद्धश्रवाः सुनासीरपुरुहूत-पुरन्दरा इत्यमरः। तस्य पुरोधसः बृहस्पतेः समान् तुल्यान्। शिवतातिं शुभकरीम्। सुपथा सुमार्गेण। सुसञ्चरमाणा. सुष्ठु सञ्चरन्तः।

(ख) अयश इति अयशसा दुष्कीर्तीनां सरणिः पन्थाः तत्सम्मार्जने जागरूकाः दुराचारपराङ्मुखा इति भावः।

(ग) जनानाम् उपतापस्य सन्तापस्य मार्जनपरा. शान्तिविधायिनः।

(घ) देवभूयङ्गताः देवत्वं प्राप्ताः।

(ङ) एतेषां पूर्वपुरुषाणां सरणिं पन्थानं पद्धतिमित्यर्थः अनुसरमाणैः अनुगच्छद्भिः।

प्रजाः प्रमाण(च)मव परिपालनक्रियामनुभवन्तो ननु भवन्तः । एवं भवतामभ्युपगतानां निगमानां वा प्रतीपगामिनीं पदवीं न प्रत्येति (छ) खलु लोकस्तदस्ति किञ्चिदभ्यर्थनीयम ।

मम सुरनरगीतख्यातिभिर्हेतिभिर्वा
दिवि भुवि च समानप्रक्रमैर्विक्रमैर्वा ।
नियतमपरिहार्य्या या जरा सा मदङ्गे
विकचकमलषण्डे चन्द्रिकेवाविरासीत् ॥२॥

तस्मात्समस्तक्षत्रवर्गगर्वपाटनपटुधारपरश्वधभरणभीषणवेषभार्गवभङ्गादपरिच्छिन्नतरशौर्य्यशालिनि (ज) सौजन्य-

---

(च) प्रमाणं साक्षिणं द्रष्टारं ।

(छ) अभ्युपगतानाम् उपार्जितानां विदितानामिति यावत् निगमानां प्रतीपगामिनीं प्रतिकूलवर्त्तिनीं भवदीयनिगमविरोधिनीमिति यावत् पदवीं पद्धतिम् आचारमित्यर्थः । प्रत्येति विश्वसिति । भवता विदितनिगमाचारमेव सर्वः समाद्रियते इति भाव॰ ।

ममेति । मम सुरनरैः गीताभिः कीर्त्तिताभिः ख्यातिभिः यशोभिः हेतिभिरस्त्रैर्वा दिवि स्वर्गे भुवि पृथिव्याञ्च समानः प्रक्रमः सामर्थ्यं येषां तादृशैः विक्रमैर्वा या नियतम् अपरिहार्य्या अनिवारणीया, सा जरा मदङ्गं विकचकमलषण्डे प्रस्फुटितपद्मसमूहे चन्द्रिकेव मदङ्गे मम शरीरे आविरासीत् प्रादुर्बभूव । मम जरोपस्थितेति भावः । मालिनीवृत्तम् ॥२॥

(ज) समस्तेति समस्तानां क्षत्रवर्गाणां गर्वपाटने पटुधारा यस्य तादृशस्य परश्वधस्य कुठारस्य भरणेन धारणेन भीषणः वेषः यस्य

भाजने (झ) जनानुरागनिलये निर्मत्सरे(ञ) मत्सूनौ च वत्सेऽस्मिन् विश्वम्भराभारं चिरकालधार्य्यमाणमार्य्यैरमात्यैरनुमतः सन्नवतार्य्य(ट) विश्रान्तिसुखमनुभवितुमभिलषामीति। ततः प्रावृषेण्यपयोवाहव्यूहस्तनितनादाकर्णनसमुदीर्णनिरतिशयाह्लादनिसर्गनिर्गलनिर्गलत्केकालापिनः कलापिन इव(ठ) जनाः प्रमदभरभवत्कलकलरवमुखरितहरिन्मुखा(ड) बभूवुः।

आनन्दबाष्पविसरो नयने प्रजाना-
माविर्बभूव मकरन्द इवारविन्दे।
रामस्य कान्तिमभिषेकदिने भवित्रीं
प्रक्षाल्य चक्षुरिव वीक्षितुमादरेण ॥४॥

---

तस्य भार्गवस्य परशुरामस्य भङ्गात् पराजयात्। अपरिच्छिन्नतरं परिच्छेत्तुमशक्यतरं यत् शौर्य्यं तेन शालते शोभते इति तास्मिन्।

(झ) सौजन्यभाजने शिष्टाचारवति।

(ञ) निर्मत्सरे विद्वेषरहिते।

(ट) अवतार्य्य समर्प्य।

(ठ) प्रावृषेण्येति प्रावृषि भवः प्रावृषेण्यः वर्षाकालीन इत्यर्थः यः पयोवाहव्यूहः मेघवृन्दं तस्य स्तनितनादस्य गर्जितध्वनेः आकर्णनेन श्रवणेन समुदीर्णः समुत्पन्नः यः निरतिशयाह्लादः तेन निसर्गतः स्वभावात् निरर्गलम् अनवरतं निर्गलन्ती निःसरन्ती या केका ताम् आलपन्तीति तथोक्ताः कलापिन इव मयूरा इव :

(ड) प्रमदेति प्रमदभरेण आनन्दातिशयेन भवन्तीति तथोक्ताः कलाः मधुरास्फुटाः ये कलरवाः कोलाहलानि तैः मुखरितं ध्वनितं हरिताः दिशः मुखं येषां तथोक्ताः।

आनन्देति। अरविन्दे पद्मे मकरन्द इव अभिषेकदिने

राजापि तेषां सम्पद्यमानमहोत्सवोत्सुकजनसमर्द्दजनिष्यमाणरजोराजिव्रातपरिजिहीर्षयेव (ढ) रोमाञ्चप्रपञ्चेन कञ्चुकितानां (ण) प्रमाण्यानीतां (त) प्रीतिं प्रपन्नानां (थ) हर्षप्रकर्षेण द्विगुणीकृतमानन्दमन्तर्निर्यस्य (द) सुमन्त्रप्रमुखान् मन्त्रिमुख्यानेवमाचख्यौ।

अस्माननाश्रिततपोवनभूमिभागान्
उल्लङ्घ्य मार्गप[...]लनजागरूकान्।
अम्लानमौर्व्यमचिरादवलम्ब्य राम-
मेवंविधः कथमुदेति जनानुराग[:] ॥५॥

---

भविनी भाविनीं रामस्य कान्तिं चक्षुः प्रक्षाल्य आदरेण वीक्षितुं द्रष्टुमिव प्रजानां नयने आनन्दवाष्पविन्दु. आनन्दाश्रुप्रसर. आविर्बभूव । वसन्ततिलकं छन्दः ॥४॥

(ढ) सम्पद्यमानेति सम्पद्यमान[...] [...]भूमाभ्यः यः महोत्सवः रामाभिषेकजनित[...] [...] तस्मिन् [...] जनानां सम्मर्द्देन जनिष्यमाणा या र[...] [...] [...] व्रातस्य समुदायस्य परिजिहीर्षयेव परिहाराभि[...]

(ण) रोमाञ्चप्रपञ्चेन लोमहर्षेण [...] [...]तानां वर्मितदेहानाम् ।

(त) प्रमाण्यानीतां प्रमाणमय[...]

(थ) प्रपन्नानां प्राप्तानाम् ।

(द) अन्तर्निर्यस्य संयम्येत्यर्थः ।

अस्मानिति । अम्लानम् अकि[...] [...]भावः कैशोरदशा यस्य तादृशं रामम् अवलम्ब्य [...] [...]मेषः अचिरात् आरादि अनाश्रिततपोवनभू[...] [...]नाश्रितानित्यर्थः

भाजने (झ) जनानुरागनिलये निर्मत्सरे(ञ) मत्समे च वत्से-ऽस्मिन् विश्वम्भराभारं चिरकालधार्य्यमाणमार्य्यैरमात्यैरनुमत: सन्नवतार्य्य(ट) विश्रान्तिसुखमनुभवितुमभिलषामीति।

तत: प्रावृषेण्यपयोवाहव्यूहस्तनितनादाकर्णनसमुदीर्णनिरतिशयाह्लादनिसर्गनिर्गलनिर्गलत्केकालापिन: कलापिन इव(ठ) जना: प्रमदभरभवकलकलरवमुखरितहरिन्मुखा(ड) बभूवु:।

आनन्दवाष्पविसरो नयने प्रजाना-
माविर्बभूव मकरन्द इवारविन्दे।
रामस्य कान्तिमभिषेकदिने भवित्रीं
प्रक्षाल्य चक्षुरिव वीक्षितुमादरेण ॥४॥

---

तस्य भार्गवस्य परशुरामस्य भङ्गात् पराजयात्। अपरिच्छिन्नतरं परिच्छेत्तुमशक्यतरं यत् शौर्य्यं तेन शालते शोभते इति तस्मिन्।

(झ) सौजन्यभाजने शिष्टाचारवति।

(ञ) निर्मत्सरे विद्वेषरहिते।

(ट) अवतार्य्य समर्प्य।

(ठ) प्रावृषेण्येति प्रावृषि भव: प्रावृषेण्य: वर्षाकालीन इत्यर्थ: य: पयोवाहव्यूह: मेघवृन्द तस्य स्तनितनादस्य गर्जितध्वने: आकर्णनेन श्रवणेन समुदीर्ण: समुत्पन्न य निरतिशयाह्लाद: तेन निसर्गत: स्वभावात् निरर्गलम् अनवरतं निर्गलन्ती नि:सरन्ती या केका ताम् आलपन्तीति तथोक्ता: कलापिन इव मयूरा इव :

(ड) प्रमदेति प्रमदभरेण आनन्दातिशयेन भवन्तीति तथोक्ता: कला: मधुरास्फुटा: ये कलरवा कोलाहलानि तै: मुखरितं ध्वनितं हरिता दिशा मुख येषा तथोक्ता:।

आनन्देति। अरविन्दे पद्मे मरकरन्द इव अभिषेकदिने

तवोत्तमाङ्गे मुकुटं विधातु-
मन्नाय तिष्ये दिवसे यतिष्ये ७॥

अथ दशरथमनोरथं कौशल्यायै निवेद्य स्वभवनमुप-गतस्य रामस्य भगवान् वशिष्ठः सञ्जातकौतुकः कौतुक-मङ्गलं (प) निर्वर्त्तयामास (फ)।

आपूरयन् मङ्गलतूर्य्यघोषै-
राशावशावल्लभकर्णतालान् ।
उज्जृम्भितः कोऽपि गिरामभूमि-
रुन्मस्तकः पौरजनातिमोदः ॥८॥

तत्र,

यामेवाहुर्निशिचरकुलोन्मूलने मूलहेतुं
यस्याश्चित्तं प्रकृतिकुटिलं गात्रमिव बभूव ।

---

दशरथ विनयाभिराम विनयावनतमित्यर्थः रामम् आहूय एवम् इत्यम् ऊचे उक्तवान् । अन्नाय झटिति तव उत्तमाङ्गे शि᳚सि मुकुट राजकिरीटमित्यर्थः विधातुम् अर्पयितु तिष्ये पुष्यानक्षत्रयु᳚ दिवसे यतिष्ये यत्न करिष्यामि । इन्द्रवज्रावृत्तम् ॥७॥

(प) कौतुकमङ्गल हस्तसूत्रबन्धनरूप मङ्गलकार्य्यम् ।

(फ) नि᳚र्त्तयामास सम्पादयामास ।

आपूरयन्निति । मङ्गलतूर्य्यघोषै मङ्गलिकवाद्यविशेषनिस्वनैः आशावशावल्लभाना दिग्गजाना कर्णतालान् आपूरयन् अ᳚ᳺ᳚ पयन् कोऽपि अनिर्वचनीय गिरा वाचाम् अभूमिः अगोचर उन्मस्तक उच्छ्रितशिरा पौरजनानाम् अतिमोद आत्यन्तिक-प्रमोद उज्जृम्भितः उदियाय । इन्द्रवज्रावृत्तम् ॥८॥

᳚र्ण यामिति । याम् एव निशिचराणा राक्षसाना कु᳚ल उन्मूलने

अम्भोजिन्याः शिशिरसरितः कासरीवाच्छमम्भः
कैकेय्याः सा सदयहृदयं मन्थरा निर्ममन्थ ॥९॥

अलघुचलितझञ्झावातनिष्पेषदोषा-
दशनिरिव कठोरः शीतलाम्भोदपङ्क्तौ।
अपहृतजनसौख्यान्मन्थराभेदवाक्या-
दपि भरतजनन्या हन्त दौर्जन्यमासीत् ॥१०॥

---

विध्वंसने मूलहेतुम् आदिकारणम् आद्यः जनः इति शेषः, यस्याः चित्तं प्रकृत्या स्वभावेन कुटिलं गात्रस्य शरीरस्य कुब्जस्येति भावः मित्रं तुल्यमिति भावः समानयोरेव मैत्री स्यादिति भावः बभूव, सा मन्थरा तदाख्या कैकेय्याः कुब्जा किङ्करी अम्भोजिन्याः कमलिन्याः शिशिरसरितः शीतलसलिलाया नद्याः अच्छं निर्मलम् अम्भः जलं कासरीव महिषीव कैकेय्याः सदयं स्निग्धं हृदयं निर्ममन्थ विलोडयामास आविलं चकारेत्यर्थः। दुर्जनस्वभावादानादिति भावः। हृदयमदयमिति पाठस्त्वसत्, उपमानाच्छाम्भसा साहश्यादिति बोध्यम्। मन्दाक्रान्तावृत्तम् ॥९॥

अलघ्विति। हन्त खेदे। अलघूनां महतां चलितानां प्रसरतां झञ्झावातानां वातविशेषाणां निष्पेषदोषात् निर्घर्षणबलात् शीतलाम्भोदपङ्क्तौ शीतलमेघनिचये कठोरः दारुणः अशनिरिव वज्रमिव अपहृतं जनानां सौख्यम् आनन्दः येन तथाभूतात् मन्थरायाः भेदवाक्यात् मनोभङ्गजनकवचनोपन्यासात् भरतजनन्यामपि भरतस्य अतिशीतलप्रकृतेरिति भावः जनन्यां मातर्यपि कारणगुणाः कार्यगुणमारभन्ते इति न्यायेन अतिसुशीतलप्रकृतावपीति भावः दौर्जन्यं दौःशील्यम् आसीत् अजनीत्यर्थः। उपमालङ्कारः। मालिनीवृत्तम् ॥१०॥

सैषा (ब) मन्थराभिधानपिशाचिकादेशपरवशनिजा-शया (भ) पूर्वं दण्डके (म) वैजयन्तपुरवास्तव्यशम्बरासुरसङ्गरसङ्गतवेदनापनोदनवेतनार्थं(य)मात्मने वितीर्णवराय(र) दशरथाय वरद्वय न्यवेदयत् ।

तयोरेकस्य संरम्भो भरतस्याभिषेचनम् ।
अन्यस्य वन्यवृत्त्यैव वने रामस्य वर्त्तनम् ॥११॥

तस्मिन् क्षणे वरयुगं क्षणतप्ततान्न-
नाराचवेधपरुषं श्रवसी विदार्य्य ।
सत्यप्रहाणचकितस्य नृपस्य काम-
मूरीचकार हृदये पुटपाकरीतिम् ॥१२॥

---

(ब) सैति सा एषा कैकयी ।

(भ) मन्थरेति मन्थरा अभिधान यस्याः तथाविधा या पिशाचिका तस्या आदेशस्य परवशः अधीनः निजाशयः यस्याः तथोक्ता ।

(म) दण्डके दण्डकारण्ये ।

(य) वैजयन्तेति वैजयन्तपुर वास्तव्य निवासः यस्य तादृशस्य शम्बरासुरस्य सङ्गरे संग्रामे सङ्गता जाता या वेदना व्यथा तस्या अपनोदनस्य उपशमनस्य स्वकृतस्येति भावः वेतनार्थं निष्क्रयार्थम् ।

(र) वितीर्णवराय दत्तवराय वरद्वय लब्धुमिति शेषः ।

तयोरिति । तयो. वरयोः मध्ये एकस्य वरस्य संरम्भ· समुद्योगः भरतस्य अभिषेचनम्, अन्यस्य वरस्य संरम्भः वन्यवृत्त्या वने रामस्य वर्त्तनं स्थिति· । एकेन वरेण भरतस्य राज्यम्, अपरेण वरेण रामस्य वनवास इति भावः ॥११॥

तस्मिन्निति । तस्मिन् क्षणे क्षणात् तप्तस्य अतएव ताम्रस्य रक्तस्य नाराचस्य अस्त्रविशेषस्य वेधवत् परुष कठोरं दारुणमित्यर्थः

तदनुतनयवार्त्तामात्रसन्त्यज्यमाना-
द्दथ दशरथचित्ताच्चेतना निर्जगाम ।
दवहुतवहरोचिर्ज्वालया लिह्यमानात्
झटिति गहनगुल्मादुज्जिहाना मृगीव ॥ १३ ॥

अथ दशरथः कथमपि लब्धसंज्ञः (ख) कैकेयीमभाषत ।

राम काममुपाश्रयिष्यति वनं त्यक्त्वा धृतं कौतुकं
लोकस्त्यक्ष्यति कौतुकं चिरधृतं तस्याभिषेके कथम् ।
धर्मापायभयेन वत्सविरहं द्रक्ष्यामि वक्ष्यामि किं
यावत्कल्पमकीर्त्तिरार्त्तिजननी जायेत जाये ! तव ॥ १४ ॥

---

वरयोः युगं सत्वदच्छायात् सत्वस्य व्ययात् चकितस्य शङ्कितस्य नृपस्य श्रवसी कर्णौ विदार्य्य हृदये कामं सम्यक् यथा तथा पुटपाकस्य रीतिम् उरीचकार अङ्गीचकार । उपमालङ्कारः । वसन्ततिलकं वृत्तम् ॥ १२ ॥

तदन्विति । अथानन्तरं सा सुतनया तनयसम्बन्धिनी या वार्त्ता वनप्रयाणरूपा तया सन्त्यज्यमानात् दशरथस्य चित्तात् चेतना दवहुतवहस्य दावाग्नेः रोचिषा तेजसा ज्वालया लिह्यमानात् आक्रम्यमाणात् गहनगुल्मात् वनगुल्मात् उज्जिहाना उद्गच्छन्ती मृगीव झटिति सहसा निर्जगाम । दशरथो मुमोहेति भावः । उपमालङ्कारः । मालिनीवृत्तम् ॥ १३ ॥

(ख) लब्धसंज्ञः प्राप्तचेतनः ।

रामेति । हे जाये ! प्रिये ! रामः धृतं कौतुकं हस्तसूत्रं त्यक्त्वा वनं कामम् अवश्यम् उपाश्रयिष्यति गमिष्यति, किन्तु लोकः तस्य रामस्य अभिषेके अभिषेकार्थं चिरधृतं कौतुकम् आनन्दं कथं त्यक्ष्यति ? धर्मस्य सत्यस्य अपायभयेन व्ययशङ्कया वत्सस्य रामस्य विरहं द्रक्ष्यामि,

वत्स कठोरहृदये! नयनाभिराम
रामं विना न खलु तिष्ठति जीवितं मे।
धातुर्बलादुपयमस्त्वयि जातपूर्वः
कैकेयि! मामुपयम नयतीति मन्ये ॥१५॥

तदनु निजमनोरथैकपूरणे कृतादरा(क) कैकेयी सोपहासमवादीत्।

सत्यविप्लवमपत्यसङ्गतः
सङ्गतं भयमपश्यतस्तव।
आश्रुतस्य विफलत्वमस्ति चे-
दाश्रुतस्य रचितोऽयमञ्जलिः ॥१६॥

---

किन्तु किं वक्ष्यामि वत्समिति शेषः। कल्पं यावत् आप्रलयमित्यर्थः आर्त्तिजननी व्यथाजननी अकीर्त्तिः अयशः तव जायेत। शार्दूलविक्रीडितं वृत्तम् ॥१४॥

वत्समिति। हे कठोरहृदये! नयनाभिरामं वत्सं रामं विना मे मम जीवितं न खलु तिष्ठति, हे कैकेयि! धातुर्बलात् दैवबलात् त्वयि जातपूर्वं उपयमः विवाहः माम् उपयमं यमसमीपं नयतीति मन्ये सम्भावयामि। वसन्ततिलकं वृत्तम् ॥१५॥

(क) कृतादरा कृतयत्ना।

सत्यविप्लवमिति। अपत्यसङ्गतः अपत्यस्नेहेन सङ्गतं जातं भयम् अत्ययं सत्यविप्लवं सत्यध्वंसम् अपश्यतः अनवलोकयतः तव आश्रुतस्य प्रतिज्ञातस्य विफलत्वं वैफल्यम् अस्ति चेत्, तदा आश्रुतस्य सम्यग्ज्ञानवत्याया इति यावत् अयम् अञ्जलिः रचितः कृतः। त्वं ज्ञानी अपि यदि सत्यं त्यजसि तदा ज्ञानवत्तां धिगिति भावः। रथोद्धता वृत्तम् ॥१६॥

किं नागतस्ते श्रवसोः सकाश-
मरिन्दमः सत्यगिरां पुरोगः ।
श्येनामिषीभूतकपोतपोत-
जीवातवे शस्त्रनिकृत्तगात्रः ॥१७॥

किञ्च,

अभ्यर्थ्य कस्मैचिदुपाश्रिताय
वितीर्य्य विप्राय विलोचने स्वे ।
आपूरयत्कश्चिदलर्कसञ्ज्ञः
प्राज्ञः प्रतिज्ञां प्रथितप्रभावः ॥१८॥

---

किमिति । सत्यगिरां सत्यवादिनां पुरोगः अग्रगामी श्रेष्ठ इत्यर्थः अरिन्दमः तदाख्यन्टपतिः श्येनस्य पक्षिविशेषस्य आमिषीभूतः भोग्यवस्तुभूतः यः कपोतपोतः पारावतशिशुः तस्य जीवातवे जीवनाय शस्त्रेण निकृत्तं छिन्नं गात्रं येन तथाभूतः ते तव श्रवसोः कर्णयोः सकाशं श्रवणगोचरतामित्यर्थः किं न आगतः ? पुरा कश्चिदरिन्दमो नाम राजा शरणागतं कपोतशावकं रक्षामीति प्रतिज्ञां कृत्वा तदनु तद्भक्षणार्थमागताय श्येनाय सत्यरक्षार्थं कपोतमांससमं स्वगात्रमांसं ददाविति पुराणवार्त्ता । उपजातिवृत्तम् ॥१७॥

अभ्यर्थ्येति । अलर्कसञ्ज्ञः अलर्कनामा कश्चित् प्रथितप्रभावः विख्यातमहिमा प्राज्ञः कस्मैचित् उपाश्रिताय विप्राय अभ्यर्च्य पूजयित्वा स्वे विलोचने नयने वितीर्य्य दत्त्वा प्रतिज्ञाम् आपूरयत् । यत्त्वं याचसे तदहं दास्यामीति बद्धप्रतिज्ञोऽसौ पश्चात् नयने ते अहं याचे इति कथयते कस्मैचित् विप्राय ते एव नयने दत्त्वा प्रतिज्ञां सफलीचकारेति यावत् । उपजातिवृत्तम् ॥१८॥

अतुरसमरवेलाजातबाधावसाने
वरयुगमदिशस्त्वं प्रीतिपूर्वं यथा मे ।
अशिथिलगुणबन्धाः सत्यसन्धा नरेन्द्राः
जललिपिरिति कामं सङ्किरन्तां गिरं ताम् ॥१९॥

किं बहुना,

सत्योद्यां गिरमिह निर्वह स्वभावात्
सम्मानं भुवि न सहेय राममातुः ।
संस्थास्ये विषमुपभुज्य पश्यतस्ते
सन्नाहं त्यजसि न चेत् प्रवर्त्तमानम् ॥२०॥

---

असुरेति। असुरैः सह समरवेलायां युद्धसमये जाता या बाधा पीडा तस्या अवसाने उपशान्तौ सत्यामिति भावः त्वं प्रीतिपूर्वं यथा मे मह्यं वरयुगं वरद्वयम् अदिशः दत्तवानसि, अशिथिलः निश्चल इत्यर्थः गुणबन्धः येषां सत्यगुणशालिन इति यावत् सत्यसन्धाः सत्यप्रतिज्ञा नरेन्द्राः तां गिरं वाचं प्रतिज्ञां ते इति शेषः कामं सम्यक् जललिपिः जललिपिं जले लेखपत्रमिति अचिरस्थायिनीमिति भावः सङ्किरन्तां कीर्त्तयन्तु त्वं मिथ्यावादीति सर्वे वदन्त्विति भावः। मालिनीवृत्तम् ॥१९॥

सत्योद्यामिति। इह संसारे स्वभावात् सत्योद्यां गिरं सत्यकृतां वाचं निर्वह प्रतिपालय। भुवि पृथिव्यां रामस्य मातुः कौशल्यायाः सम्मानं राजमातेति समादरं न सहेय। चेत् यदि प्रवर्त्तमानम् उपस्थितमित्यर्थः सन्नाहम् उद्योगं रामाभिषेकविषयमिति भावः न त्यजसि, तदा पश्यतः ते तव अनादरे षष्ठी पश्यन्तं त्वाम् अनादृत्येत्यर्थः विषम् उपयुज्य पीत्वा संस्थास्ये मरिष्यामि ॥२०॥

एव वादिनीमिना भूयोऽपि भूपतिरवदत्। अयि कठिनहृदये। किमुक्तं मुक्तलोकमर्य्यादया दयापेतया (श) त्वयेति।

नैवाभवस्त्वमिह शीलवतीषु गण्या
नैवागमत् पितृमता गणना स रामः।
नैवापमात्मजसुखान्यहमप्यनार्य्ये।
नैवापमम्बु भरतेन न मे प्रदेयम् ॥२१॥

किञ्च,

वासस्त्वचा भवतु किञ्चन तारवीणां
छायाद्रुमाश्च भवनानि भवन्तु वन्याः।
कैकेयि। तस्य शयनानि कथं भवेयु-
स्त्वच्चेतसोऽपि कठिनानि शिलातलानि ॥२२॥

---

(श) मुक्तलोकमर्य्यादया त्यक्तलोकस्थित्येत्यर्थः। दयापेतया निर्दयया।

नैवेति। हे अनार्य्ये। दुराचारे। इह जगति त्वं शीलवतीषु सुशीलासु नारीषु मध्ये गण्या नैव अभवः, स रामः पितृमतां मध्ये गणना नैव आगमत्। अहम् आत्मजसुखानि पुत्रजनितानि सुखानि नैव आप नैव प्राप्तवानस्मि। भरतेन प्रदेयम् अम्बु जलं तर्पणोदकमिति यावत् नैव अहम् आप नैव प्राप्तवानस्मि। सर्वत्र भाविनि भूतवदुपचारोऽत्र द्रष्टव्यः। तथाच त्वं सुशीलासु गण्या न, रामः पितृशून्यो भविष्यति, अहं पुत्रसुखवाञ्चितः सन् भरतदत्तं तर्पणोदकं न प्राप्स्यामीति निष्कर्षः। वसन्ततिलकं वृत्तम् ॥२१॥

वास इति। हे कैकेयि। तस्य रामस्य तारवीणां तरुसम्बन्धिनीनां त्वचा वल्कलानामित्यर्थः मध्ये किञ्चन वासः वसनं

एवं भर्त्रा भर्त्सिताप्यार्द्रचित्ता
नाभूदेषा मन्थराक्रान्तवृत्तिः ।
राकाचन्द्रे राजमाने निशायां
वीरुच्छन्ना चन्द्रकान्तस्थलीव ॥२३॥

तदनु मुहूर्त्तमात्रमपि राममुखावलोकनसुखमनुबुभूषु-र्दशरथः कुमारमानयेति सुमन्त्रमादिदेश। तेन सत्वरं राजभवनं प्रवेशितस्ततो रामः कृतप्रणामः पितरमयथा-भूतमुखविकारमारा(ष)दालक्ष्य चकितमतिः (स) किमि-दमिति कैकेयीमन्वयुङ्क्त (ह)। सापि पापाशया प्रत्य-वादीत्। वत्स! प्रतिश्रुतवरद्वयनिर्वहणे निपुणेतर(च)-

---

भवतु, वन्या वनसम्बन्धिनः छायाद्रुमाः छायाप्रधानतरवः भवनानि गृहाणि भवन्तु। किन्तु तव चेतसः अपि कठिनानि शिला-तलानि कथं शयनानि शय्याः भवेयुः? वसन्ततिलकं वृत्तम् ॥२२॥

एवमिति। एषा कैकेयी मन्थरया आक्रान्ता अभिभूता वृत्तिः सदाचाररूपा यस्याः तथाभूता अतएव राजमाने दीप्यमाने राका-चन्द्रे पूर्णिमाचन्द्रमसि निशायां वीरुधा लतया छन्ना आवृता चन्द्र-कान्तस्थलीव भर्त्रा स्वामिना एवम् इत्थं भर्त्सितापि तिरस्कृतापि आर्द्रचित्ता सदया अन्यत्र स्ववन्ती न अभूत्। शालिनीवृत्तं, म्तौ गौ चेच्छालिनी वेदलोकैरिति तल्लक्षणात्। उपमालङ्कारः ॥२३॥

(ष) आरात् दूरतः।

(स) चकितमतिः शङ्कितमनाः।

(ह) अन्वयुङ्क्त अपृच्छत्।

(च) प्रतिश्रुतवरद्वयेति प्रतिश्रुतयोः प्रतिज्ञातयोर्वरयोर्द्वयमिति भावः

स्तातस्ते सम्प्रति सानुशयस्तनयवात्सल्यात् (क) सत्यव्यत्यासत्रासाच्च (ख) गाढ(ग)मगाधशोकसागरे निमज्जतीति। वरद्वय तावत्तव वन्यवृत्त्यैव वने वर्त्तनमवनेरवन (घ) भरतस्य चेति। रामस्तदाकर्ण्य प्रमुदितहृदयः कृताञ्जलिरेनां व्यजिज्ञपत्।

भीतो भूभरतः किमम्ब! भरत. किंवा वनात्पावनात्
त्रस्तोऽहं सगरान्ववायककुदस्तातः कुतः शोचति।
दिव्यायाः सरितो निवापकरणाद्रघूं प्रतिज्ञामिमां
आज्ञाभ्यामिह पूरयिष्यति न चेत् पुत्रो कथं स्यादयम् ॥२४।

---

वरयोर्द्वयस्य निर्वहणे सम्पादने प्रदाने इति यावत् निपुणेतरः अनिपुण. अक्षम इत्यर्थः।

(क) सानुशयः सानुतापः। तनयवात्सल्यात् तनयस्य तव वात्सल्यात् स्नेहात्।

(ख) सत्येति सत्यस्य प्रतिज्ञातस्य व्यत्यासः विपर्य्यासः तस्मात् त्रास भय तस्मात्।

(ग) गाढम् अत्यर्थम्।

(घ) वर्त्तनम् अवस्थानम्। अवने' पृथिव्या अवनं रक्षणम्।

भीत इति। हे अम्ब! मात। भरतः भूभरतः भूभारधारणात् किं भीतः? नैव भीतो भवेदित्यर्थः। अहञ्च पावनात् विशुद्धात् वनात् वनवासादिति यावत् किंवा त्रस्तः? नैव त्रस्त इत्यर्थः। अतः सगरान्ववायककुदः सगरवंशतिलक तातः पिता कुत' कथ शोचति? शोकस्य नैव किञ्चित् कारणमित्यर्थ.। दिव्याया. सरितः सम्बन्धविवक्षया षष्ठी दिव्यायां सरिति मन्दाकिन्यामित्यर्थः निवापकरणात् पितृपुरुषाणां तर्पणकरणात् अभीरघ-

वनभुवि तनुमात्रत्राणमाज्ञापितं मे
सकलभुवनभारः स्थापितो वत्समूर्ध्नि ।
तदिह सुकरतायामावयोस्तर्कितायां
मयि पतति गरीयानम्ब ! ते पक्षपातः ॥२५॥

किञ्च,

तातः स्ववाचा व्यवहृत्य हृद्य
वत्साभिषेकोत्सवमङ्गलं मे ।

---

कलादिति भावः लघ्वीम् अतिक्षुद्राम् इमां प्रतिज्ञाम् आवाभ्यां पुत्राभ्यां रामभरताभ्यामिति भावः करणाभ्यां पूरयिष्यति न चेत् तदा इह जगति अयं राजा कथं पुत्री पुत्रवान् स्यात् ? पुत्रवतानेन किं फलं प्राप्तम् ? नैव किञ्चिदिति भावः । यस्य वंश्यो भगीरथः घोरं तपः समास्थाय गङ्गाराधनेन दिव्यलोकात् गङ्गामानीय पितॄन् समुद्धरन् घोरां प्रतिज्ञामुत्ततार सोऽयं पिता कथं सामान्यामेतां प्रतिज्ञाम् आवाभ्यां न पूरयेदिति विषादोऽयं । शार्दूलविक्रीडितं वृत्तम् ॥२४॥

वनभुवीति । हे अम्ब ! मातः ! वनभुवि तनुमात्रस्य स्वशरीरमात्रस्य त्राणं रक्षणं मे मम आज्ञापितं, किन्तु वत्सस्य भरतस्य मूर्ध्नि शिरसि सकलानां भुवनानां भारः स्थापितः । तत् तस्मात् इह एतयोर्विषययोरित्यर्थः सुकरतायां सौकर्ये तर्कितायां विवेचितायां सत्याम् आवयोः मध्ये मयि ते तव गरीयान् अतिमहान् पक्षपातः स्नेहः पतति, यतः मयि अल्पभारं भरते च विपुलं भारं न्यस्यसि अतस्ते मयि स्नेहः भरतादपि समधिक इति मन्ये इति भावः । मालिनीवृत्तम् ॥२५॥

तात इति । तातः पिता स्ववाचा निजेन वचसा हृद्यं प्रियं

प्रणामसन्नस्य मयार्पितस्य
किं पूर्णपात्रस्य न पात्रमासीत् ॥२६॥

तत्क्षणमशनिहत (ङ) इव पर्वतः सर्वतः (च) परीतदवदहन (छ) इव वनस्पति (ज) दिवस्पतिपदभ्रंशविधुर (झ) इव नहुष पपात निःसंज्ञः पङ्क्तिरथ (ञ)। ततः सा पितृनिदेशविचारमचिर(ट)माचरेति राममादिदिश। स एवः,

मातुराज्ञा वहन् मूर्ध्ना मालामिव महायशाः।
वनाय रामो वव्राज जगतामवनाय च ॥२७॥

---

वृत्तस्य भरतस्य अभिषेकोत्सवमङ्गले मे मह्यं मम वा व्यवहृत्य व्याहृत्येत्यर्थं मया अर्पितस्य दत्तस्य प्रणामसन्नस्य पूर्णपात्रस्य पात्रं भाजनं किं कथं न आसीत्? पिता स्वयं भरताभिषेकवार्त्तया-तुष्टाया वनं गच्छता मया यत् प्रणामपूर्णपात्रं पित्रे दीयते तदसौ कथं न गृह्णातीति भावः। उपजातिवृत्तम् ॥२६॥

(ङ) अशनिहतः वज्राहतः।

(च) सर्वतः समन्तात्।

(छ) परीतदवदहनः व्याप्तदावानलः।

(ज) वनस्पतिः वृक्षः।

(झ) दिवस्पतीति दिवस्पतेरिन्द्रस्य पदात् भ्रंशेन विधुरः व्याकुलः।

(ञ) पङ्क्तिरथः दशरथः।

(ट) पितृनिदेशेति पितुर्निदेशस्य आज्ञाया विचारः कार्याकार्यत्वावधारणमित्यर्थः तम्। अचिरम् अविलम्बम्।

मातुरिति। महायशाः रामः मालामिव मातुः कैकेय्याः

असौ समासाद्य (ठ) कौशल्यासदनमभिषेकप्रतिबन्ध (ड) कैकेयीनिर्बन्धमात्मनश्च वनवास प्रणाम्यानन्तरं तस्यै न्यवेदयत् । एतदाकर्ण्य विदीर्णहृदया विषदिग्धमुखशिलीमुखविद्धश्रवणयुगलेव (ढ) सहसा भूम्या निपत्य विललाप ।

रेखारथाङ्गसरसीरुहशङ्खचिह्ने
क्षेमङ्करे तव करे जगतां त्रयाणाम् ।
कान्तारकन्दखननं रचयेति नून-
मावद्धवान् प्रतिसरं भगवान् वशिष्ठः ॥२८॥

---

श्चाद्याम् मूर्ध्ना वहन् जगताम् अवनाय रक्षणाय राक्षसकुलनिधनेनेति भाव. वनाय वव्राज जगाम । चशब्द पादपूरणार्थ । अनुष्टुवृत्तम् ॥२७॥

(ठ) समासाद्य प्राप्य ।

(ड) कौशल्यासदनं कौशल्यागृहम् । अभिषेकप्रतिबन्धम् अभिषेकव्याघातम् ।

(ढ) विषेति विषदिग्ध विषलिप्तं मुखम् अग्रं यस्य तादृशः य· शिलीमुख शर. तेन विद्धं श्रवणयुगलं कर्णयुगलं यस्या तथाभूतेव ।

रेखेति । भगवान् वशिष्ठः रेखारथाङ्गसरसीरुहशङ्खचिह्ने रेखाचक्रपद्मशङ्खचिह्निते अतएव त्रयाणा जगता क्षेमङ्करे शुभकरे तव करे त्वं कान्तारस्य दुर्गमकाननस्य कन्दाना मूलविशेषाणा खननं भक्षणार्थमिति भाव रचय कुरु इति एतदर्थमित्यर्थं नूनं निश्चित प्रतिसर कौतुकं हस्तसूत्रमिति यावत् आबद्धवान् नूनशब्द उत्प्रेक्षार्थ । कोमलकरेण कन्दखननस्य दुष्करत्वात् तस्य दृढीकरणाय सूत्रबन्धनमिति भावः । वसन्ततिलकं वृत्तम् ॥२८॥

तत्र सौमित्रि(ण)रतिमात्रप्रवृद्धमन्यु (त) शतमन्युसमान(थ)मेनमग्रजमकथयत्। आर्य्य! न कार्य्यमिदं लोकगर्हणीयायाः कैकेय्या वचसा जरसा (द) च समाक्रान्तस्वान्ततया (ध) कृत्याकृत्यविवेकमूकस्य राज्ञः प्रज्ञाशैथिल्या(न)न्निःसृतेन वचसा सन्त्यज्य राज्यमटवीपर्य्यटनं विधातुम्। किन्तु तुभ्यमनभ्यर्थयमानाय (प) प्रथममेव पित्रा प्रदत्ता ननु पृथ्वी। चलधर्मोऽपि सत्यात् पथः प्रमादो(फ)ऽपि वर्णाश्रमरक्षणतः समीचीनः (ब) प्रायेण पुरुषं निःश्रेयसे (भ) नियोजयेत्। नियतं नियते(म)र्बलमति-

---

(ण) सौमित्रिर्लक्ष्मणः।

(त) अतिमात्रेति अतिमात्रम् अत्यर्थं प्रवृद्धो मन्युः क्रोधः यस्य तादृशः।

(थ) शतमन्युसमानम् इन्द्रतुल्यम्।

(द) जरसा वार्द्धक्येन।

(ध) समाक्रान्तस्वान्ततया अभिभूतमनस्कतया।

(न) प्रज्ञाशैथिल्यात् बुद्धिभ्रंशात्।

(प) अनभ्यर्थयमानाय अयाचमानाय।

(फ) प्रमादः भ्रष्टः।

(ब) वर्णेति वर्णानां ब्राह्मणक्षत्रियवैश्यशूद्राणाम् आश्रमाणां ब्रह्मचारिगृहस्थवानप्रस्थभिक्षूणां रक्षणतः रक्षणात् समीचीनः उत्कृष्टः।

(भ) निःश्रेयसे मुक्तये।

(म) नियतेः दैवस्य।

लङ्घ्य (य) पौरुष(र)मेव पुरुषस्य धीरस्य पुरुषार्थान् (ल) समर्पयेत् ।

मा भूत्त्वत्पदपद्मयोररुणिमा कान्तारसञ्चारतः
पाणौ पाटलिमा मनाक् प्रसरतु ज्याकर्षणादेव मे ।
कैकेयीपरिभूततातवचने नम्रो भवान्मास्म भूत्
किंवा मामकमार्य्यशौर्य्यजलधे । नम्रं धनुर्वर्त्तताम् ॥२८॥

एवमाचक्षाणं (व) लक्ष्मणं रामः सान्त्वयन्निवावोचत् । वत्स । सवितृवंशजातानां(श) पितृनिदेश एव दैशिकः(ष) सर्वकर्मसु । बहवः खलु पितृवचनगौरवात् गोहत्या(स)-

---

(य) अतिलङ्घ्य अतिक्रम्य ।

(र) पौरुषं पुरुषकारः ।

(ल) पुरुषार्थान् धर्मार्थकाममोक्षान् ।

मेति । कान्तारेषु दुर्गमेषु वनेषु सञ्चारतः पर्य्यटनेन तव पदपद्मयोः अरुणिमा लौहित्यं मा भूत् न भवतु । मे मम पाणौ ज्याकर्षणादेव मौर्वीकर्षणादेव मनाक् वरं पाटलिमा रक्तिमा प्रसरतु वर्द्धताम् । भवान् कैकेय्या परिभूतस्य वशीकृतस्य तातस्य वचने नम्रः अवनतः तत्पालनरत इति यावत् मास्म भूत् न भवतु । हे आर्य्य ! हे शौर्य्यजलधे ! वीर्य्यसागर ! मामकं मदीयं धनुः किंवा कथ वा वर्त्तताम् ? न वर्त्तामिति यावत्, तातवचनमकुर्वन्तं भवन्तमनुसरन् धनुर्धरः तव विपक्षान् नाशयिष्यामीति भावः । शार्दूल-विक्रीडितं वृत्तम् ॥२८॥

(व) आचक्षाणं वदन्तम् ।

(श) सवितृवंशजातानां सूर्य्यकुलप्रसूतानाम् ।

(ष) पितृनिर्देशः पित्रादेशः । दैशिकः प्रवर्त्तकः ।

(स) गोहत्या गोवधम् ।

मपि मातृवधमपि तारुण्यविनिमय(ङ)मपि मृक-
ण्डुरैणुकेयपूरुप्रभृतयः (च) कुर्वाणास्तेऽपि निर्विचारमाचा-
रवता(क)मग्रगण्या इति गण्यन्ते। तस्माद्वश्य वश्य
एव (ख) पितुरवगाहे (ग) गहनमिति। तत्र विस्तृतपुत्र-
वात्सल्या (घ) कौशल्या तेन सह गन्तुमभिलषन्ती कृत-
प्रणामेन रामेण सविनयमेवमभिहिता।

कान्तारभाजि मयि कैकयराजपुत्र्याः
कार्कश्यकन्दलितया दलितस्य वाचा।
तातस्य शोकदहनग्लपित शरीर
मातस्त्वया न तु कदाचिदुपेक्षणीयम्॥२०॥

---

(ङ) तारुण्यविनिमयं यौवनपरिवर्त्तम्। यौवन पित्रे दत्त्वा पितुर्वार्द्धक्यग्रहणमिति भाव।

(च) मृकण्डुरिति मृकण्डुस्तदाख्यो मुनिः, रैणुकेयः रेणुकासुतः परशुराम, पूरु ययाते कनीयान् सुतः, ते प्रभृतयः आदय, येषां तथोक्ताः।

(क) आचारवता सदाचारशालिनाम्।

(ख) वश्य एव वशवद एव।

(ग) अवगाहे प्रविशामि।

(घ) विस्तृतपुत्रवात्सल्या अतीवपुत्रस्नेहवती।

कान्तारेति। हे मात। मयि कान्तारभाजि वन गते त्वया, कैकयराजपुत्र्या कार्कश्येन नैष्ठुर्येण कन्दलितया युक्तया वाचा दलितस्य निर्भिन्नस्य तातस्य पितु शोकदहनेन शोकाग्निना ग्लपित ज्वलित शरीरं कदाचित् न तु उपेक्षणीय नैव अनवधानतया दर्श-यनीयम् अपितु सेवनीयमेवेति भाव.। वसन्ततिलकं वृत्तम्॥२०॥

ततः सा तनयस्य स्वस्त्ययनाय समस्तदेवताकीर्त्तन-पुरःसरी(ङ)माशिषमाचचक्षे । रामस्तामभिवन्द्य निष्क्रान्तः प्रक्रान्तनेपथ्यायाः (च) सीतायाः प्रासादमाससाद ।

कल्याणवादसुखितां सहसैव कान्तां
कान्तारचारकथया कलुषीचकार ।
अम्भोदनादमुदिता विपिने मयूरीं
सन्त्रासयन्निव धनुर्ध्वनिना पुलिन्दः ॥२१॥

अयमेनामुपगन्तुमुपक्रान्ता(छ)मकथयत् ।

प्रिये जनकनन्दिनि । प्रकृतिपेशलामीदृशीं
कथं ग्लपयितुं सहे तव शिरीषमृद्वीं तनूम् ।

---

(ङ) समस्तेति समस्तानां देवतानां कीर्त्तनं पुरःसरं यस्याः ताहृशीम् ।

(च) प्रक्रान्तेति प्रक्रान्तम् आरब्धं नेपथ्यं राजमहिष्युचित-परिच्छदः यस्याः तयोक्ता तस्याः ।

कल्याणेति । विपिने वने अम्भोदस्य मेघस्य नादेन ध्वनिना मुदितां प्रफुल्लां मयूरीं धनुर्ध्वनिना कार्मुकनादेन सन्त्रासयन् पुलिन्द इव व्याध इव, रामः कल्याणवादेन अद्यैवाभिषेको भविता पत्युरिति मङ्गलसमाचारेण सुखिताम् उल्लासितां कान्तां सीतां कान्तारे चारः गमनं तस्य कथया वार्त्तया सहसैव कलुषीचकार व्यथयामास । उपमालङ्कारः । वसन्ततिलकं वृत्तम् ॥२१॥

(छ) अथ रामः । एनां सीताम् । उपगन्तुम् अनुगन्तुम् उपक्रान्ताम् उद्यताम् ।

प्रिये इति । हे प्रिये जनकनन्दिनि ! ईदृशीतानां धृतानां

गृहीतहरिणीगणत्रिकविसारिनानाशिरा-
चलितचरितशोणितारुणवृककानने कानने ॥२२॥

तदनु (ज) नानाविधप्रजल्पशतेनाप्यनुन्मिषदनुजिगमिषाशैथिल्याया (झ) मैथिल्या लक्ष्मणेऽप्यनवसितानुगमनव्यवसाये (ञ) वाशिष्ठाय (ट) सुयज्ञाय भूषणमशेषं नागसहस्रेण सह (ठ) शत्रुञ्जयाह्वय(ड)मतुलं मातुलदत्तं हस्तिनमगस्त्यकौशिकाभ्यां च महार्हाणि च रत्नानि वितीर्य (ढ)

---

घृतानामिति यावत् हरिणीगणानां त्रिकेषु पृष्ठवंशाधरेषु, पृष्ठवंशाधरे त्रिकमित्यमरः। नितम्बभागेष्विति यावत् विसारिण्यः याः नाना बहवः शिराः धमन्यः तासां चल्या त्रोटनेन चरितैः निःसृतैः शोणितैः रक्तैः अरुणानि रक्तानि वृकाणां व्याघ्रविशेषाणाम् आननानि मुखानि यत्र तादृशे अतिभयङ्करे इति भावः कानने वने प्रकृतिपेशलां स्वभावकोमलाम् ईदृशीं तव तनुं शरीरं ग्लपयितुं क्लेशयितुं कथं सहे कथमनुमन्ये? नानुमन्तुं शक्नोमीत्यर्थः। पृथ्वीवृत्तम् ॥२२॥

(ज) तदनु तदनन्तरम्।

(झ) अनुन्मिषदिति न उन्मिषत् अनुजिगमिषायाः शैथिल्यं यस्याः तथोक्तायाम् अनुजिगमिषायामिति निर्बन्धवत्यामिति भावः।

(ञ) अनवसितेति अनवसितः अनुगमनव्यवसायः अनुगमनोद्योगः यस्य तादृशे अनुजिगमिषतीति यावत्।

(ट) वाशिष्ठाय वशिष्ठसुताय।

(ठ) नागसहस्रेण हस्तिसहस्रेण सह।

(ड) शत्रुञ्जयाह्वय शत्रुञ्जयनामकम्।

(ढ) वितीर्य्य दत्त्वा।

निर्जराराति वीर्य्यमुषी (ण) धनुषी निरपायत्राणकर्म्मणी (त) वर्म्मणी (थ) निर्म्मर्य्यादशिलीमुखक्षतानुषङ्गौ (द) निषङ्गौ निर्वर्त्तितवीरपानौ (ध) कृपाणौ वरुणेन (न) जनकसदसि (प) दत्तमेतत्सर्वमादाय मामनुगच्छेति सौमित्रिमन्वग्रहीत्। सीतापि निजाभरणगणं सुयज्ञपत्न्यै विदधे (फ)। सौमित्रिरपि स्वधनेन कश्चित्कौशल्याश्रितमुपाध्यायमतोषयत्। तत्र सकुटुम्बाय त्रिजटाभिधाय (ब) द्विजातये स्वहस्ततलनिक्षिप्तदण्डदेशा(भ)वधिकं गोधनं काम्पिल्यादिभ्यो

---

(ण) निर्जरेति निर्जराणां देवानाम् अरातयः शत्रवः तान् मुष्णीत इति तथोक्ते असुरविध्वंसिनी इत्यर्थः।

(त) निरपायेति निरपाय निर्विघ्न त्राणकर्म आत्मरक्षणकर्म ययोः तादृशे।

(थ) वर्म्मणी कवचे।

(द) निर्म्मर्य्यादेति निर्म्मर्य्यादैः मर्य्यादा सीमा तद्रहितैः असंख्यैरित्यर्थः शिलीमुखैः शरैः आनुषङ्गः आश्रयः ययोः तथोक्तौ।

(ध) निर्वर्त्तितेति निर्वर्त्तितं सम्पादितं वीरपानं वीरभोजनं वीराणां प्राणानामिति भावः पानं रक्षणं याभ्यां तथोक्तौ, आमाने पापरत्त्वयः इत्यस्मात् भावे अनट्।

(न) वरुणेन जलाधिपेन।

(प) जनकसदसि जनकसभायाम्।

(फ) विदधे समर्पयामास।

(ब) सकुटुम्बाय सलोकाय। त्रिजटाभिधाय त्रिजटनाम्ने।

(भ) स्वहस्तेन स्वस्य हस्ततले निक्षिप्तः अर्पितः दण्डेति भावः देशः प्रान्तं ययोः तादृशौ।

द्विजातिभ्यश्च रघुपतिर्वित्तानि विविधानि विततार। ततस्ते पौरनारीणां विश्वासान्निःश्वासजृम्भानिलचलदधरकिसलयानामश्रुसलिलासारेण(म) शोकपावकेन च वपूंषि मनांसि च सिक्त्वा दग्ध्वा च निषिद्धपरिजनानुगमनतया प्रकाशितप्रवाससिद्धान्ताच्छुद्धान्ता(य)न्निश्चक्रमुः। तत्र,

सीता पुरा गगनचारिभिरप्यदृष्टा
मा भूदियं सकलमानवनेत्रपात्रम्।
इत्याकलय्य नियतं पिदधे विधाता
बाष्पोदकेन नयनानि शरीरभाजाम् ॥२३॥

---

(म) विश्वासात् प्रणयातिरेकादिति यावत्। निःश्वासजृम्भानिलेन चलन् अधरकिसलयः अधरपल्लवः यासां तथोक्तानाम्। अश्रुसलिलासारेण बाष्पधारप्रवाहेण।

(य) प्रकाशितेति प्रकाशितः प्रवासस्य वनवासस्य सिद्धान्तः स्थैर्यं यत्र तथाभूतात्। शुद्धान्तात् अन्तःपुरात्।

सीतेति। पुरा पूर्वं गगनचारिभिः खेचरैरपि अदृष्टा इयं सीता सकलमानवानां नेत्रपात्रं दृष्टिविषयतां गता मा भूत् न न भवतु इति आकलय्य विविच्य विधाता शरीरभाजां प्राणिनां नयनानि बाष्पोदकेन अश्रुवारिणा पिदधे आच्छादयामास इति नियतं ध्रुवं मन्ये इति यावत्। अत्र नियतमिति पदमुत्प्रेक्षावाचकं, मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः। उत्प्रेक्षाव्यञ्जकाः शब्दा इवशब्दोऽपि तादृशः। इति दर्पणोक्तादिशब्देन ग्रहणादिति बोध्यम्। वसन्ततिलकं वृत्तम् ॥२३॥

कृत्वापि यान्तमनुगच्छति मैथिली मां
वत्सा जहाति न कदाचन लक्ष्मणोऽपि ।
इत्येतयोरनुगतिं प्रतिबोध्य गन्तुं
भूयोऽपि राजभवनं प्रविवेश रामः ।३४॥

तस्मिन् सुमन्त्रेण विज्ञाप्य दर्शिते दाशरथौ (र) भूपतिर्भूताविष्ट इव (ल) विष्टरा(व)न्निपत्य सदारः सदारचितपरिदेवनोत्कण्ठा स्वयमप्यकरोत्। तदा सुमन्त्र कैकेयीमब्रवीत् । देवि ! विरम विरम रामाभिषेकसमुन्मिषिताह्लादाङ्कुरावग्रहादाग्रहात् (श)। पुरा खलु ब्रह्मणो वरप्रसादा(ष)दवगतसकलप्राणिभाषणतया (स) पर्य्यङ्कप-

---

कृत्वापीति । मैथिली सीता कृत्वापि निवारितापि यान्तं गच्छन्तं माम् अनुगच्छति, वत्स लक्ष्मणोऽपि कदाचन न जहाति न त्यजति मामिति शेषः, इति हेतो रामः एतयो सीतालक्ष्मणयोः अनुगतिम् अनुगमनमित्यर्थं प्रतिबोध्य विज्ञाप्य राज्ञे इति शेषः गन्तुं भूयोऽपि पुनरपि राजभवनं प्रविवेश । वसन्ततिलक वृत्तम् ।३४॥

(र) दाशरथौ रामे ।

(ल) भूताविष्ट इव केनचिद्देवयोनिना अभिभूत इव ।

(व) विष्टरात् आसनात् ।

(श) रामेति रामस्य अभिषेके समुन्मिषितः सम्यक् विकसितः यः आह्लादाङ्कुरः आनन्दारम्भ इत्यर्थः तस्य अवग्रहः प्रतिबन्धो यस्मिन् तादृशात् । आग्रहात् यत्नात् निर्बन्धादित्यर्थः ।

(ष) वरप्रसादात् वरप्रभावात् ।

(स) अवगतेति अवगतं विदितं सकलानां प्राणिनां भाषणं येन तस्य भावः अवगतसकलप्राणिभाषणता तया ।

य्यन्तपरिसरत्पिपीलिकालापे (ङ) कृतहासं तव पितरं हसनकारणं पृष्ट्वा तद्विवरणं (च) पत्युर्मरणहेतुरित्यवेत्यापि भूयसो (क) निर्बन्धात् कुपितेन राज्ञावज्ञातायाः (ख) मातुस्ते मार्गं (ग) मा कुर्वीथा इति। ततः,

कृतासमञ्जनिर्य्यासं सगर कैकयात्मजा।
निदर्शनेन निर्दिश्य निरबध्नान्निज पतिम् ॥२५॥

---

(ङ) पर्य्यङ्कस्य खट्वायाः पर्य्यन्तेषु प्रान्तदेशेषु परिसरन्तीनां सञ्चरन्तीनां पिपीलिकानाम् आलापे अन्योन्यभाषणे।

(च) तद्विवरणं तस्य विवरणं प्रकाशनम्।

(क) अवेत्यापि ज्ञात्वापि। भूयसः अत्यन्तात्।

(ख) राज्ञा तव पित्रा कैकयराजेनेति शेषः। अवज्ञातायाः अवमतायाः।

(ग) मार्गं पन्थानं वैधव्यावलम्बनरूपमिति भावः। पुरा विधातृवरात् कैकयराजस्य सर्वप्राणिभाषणज्ञानशक्तिर्जाता। तत्प्रकाशे च तस्य मृत्युरिति स्थिते कदाचित् तस्य महिषी तस्य वरविवरणं जानती अपि पिपीलिकाहासे कृतनिर्बन्धा भर्त्तुर्निधनायाभवदिति भावः।

कृतेति। कैकयात्मजा कैकयी कृतः असमञ्जस्य निर्यासः परित्यागः येन तादृशम् असमञ्जाख्यपुत्रनिर्वासिनमित्यर्थः सगर निदर्शनेन दृष्टान्तेन निर्दिश्य दर्शयित्वा निजं पतिं दशरथ निरबध्नात् निर्बन्धेन बबन्धेत्यर्थः। पुरा सगरो नाम नृपतिर्ज्येष्ठं सुतमसमञ्जं परित्यज्य कनिष्ठेषु षष्टिसहस्रेषु मतिमकरोत्, अतः ज्येष्ठपरित्यागोऽस्य कुलस्थितिं प्रतिबध्नातीति भावः। अनुष्टुब्वृत्तम् ॥२५॥

तत्र,

सिद्धार्थको महामात्यस्तत्परित्यागमब्रवीत् ।
सरयूपतितानेकप्रजामरणकारणात् ॥ २६ ॥

अथ दशरथेन रामः सपरिच्छद एव गच्छेति निर्दिष्टः केवलं खनित्रपिटके वल्कलयुगलञ्च प्रार्थयत् ।

सुखोचितानां सुव्यक्तदिव्यलावण्यसम्पदाम् ।
त्रयाणामपि कैकेयी वल्कलादीन्युपाहरत् ॥ २७ ॥

अथ रघुकुलनाथो मध्यमाम्बानियोगाद्
गुणवति परिधाने मङ्गलार्हे निराशः ।
अधिकुचतटवल्गज्जानकीबाष्पसेका-
दपगतखरभावं वल्कलं पर्य्यधत्त ॥ २८ ॥

---

सिद्धार्थक इति । महामात्यः महामन्त्री सिद्धार्थकः सरय्वां पतितानाम् अनेकप्रजाना मरणकारणात् तस्य असमञ्जस्य परित्यागं सगरेणेति शेषः अब्रवीत् । पुरा सगरसुतोऽसमञ्जः अयोध्यावासिनीनां प्रजानां शिशून् बलात् गृहीत्वा सरय्वां प्रक्षिप्य नाशयामास । ततः प्रजाभिः क्रन्दन्तीभिरावेदितो नृपतिः पुत्रं तादृशं दुराचारं दृष्ट्वा निर्वासयामासेति पुराणवार्त्तानुसन्धेया । अनुष्टुब् वृत्तम् ॥ २६ ॥

सुखोचितानामिति । कैकेयी सुखोचितानाम् अभ्यस्तसुखानां सुखलालितानामिति भावः सुव्यक्ता दिव्या लावण्यसम्पत् सौन्दर्य्यशोभा येषां तथोक्तानां त्रयाणां सीतारामलक्ष्मणानां वल्कलादीनि उपाहरत् । सर्वान् परिच्छदान् आच्छिद्य वन्यपरिच्छदान् तेभ्यः दत्तवतीति भावः । अनुष्टुब् वृत्तम् ॥ २७ ॥

अथेति । अथानन्तरं रघुकुलनाथः रामः मध्यमायाः अम्बायाः मातुः कैकेय्या नियोगात् आदेशात् मङ्गलार्हे माङ्गलिके गुणवति

तत्र ये चित्रीयन्तः (ग) सर्वे निर्विकारवदनलक्ष्मीक-मिक्ष्वाकुकुलाध्यक्षमध्यक्षयन्त(घ)स्तेषामेव शोकशङ्कुसङ्कीलि-तमानमाना(ङ)माननेषु पारम्पर्येणास्फुर(च)द्विकारः।

सवल्कले दाशरथौ विषादा-
दामीलिताक्षो यदभूद्वशिष्ठः।
तदेव जातं करणं महर्षे
काकुत्स्थयाथार्थ्यविलोकनस्य ॥३९॥

---

शोभने परिधाने वसने निराश आशाराहित सन् आधकुचतट स्तनतटयोरुपरि वलाता पतता वाष्पाणां नयनवारीणां सेकात् अपगतं विनष्टं खरभारं कार्कश्यं यस्य तादृशम् अम्बुसिक्तत्वादा-र्द्रीभूततया म्रदुलमित्यर्थः वल्कलं द्रुमत्वचं पर्य्यधत्त परिहितवान्। शालिनीवृत्तम् ।३८॥

(ग) चित्रीयन्तः चित्रार्पिता इवाचरन्तः।

(घ) निर्विकारेति निर्विकारा वदनस्य लक्ष्मीः श्रीर्यस्य तथो-क्तम्। इक्ष्वाकुकुलाध्यक्षम् इक्ष्वाकुकुलप्रवरं राममित्यर्थः। अध्यक्षयन्तः पश्यन्तः।

(ङ) शोकेति शोकशङ्कुना शोकरूपेण कीलेन सङ्कीलितं विद्धं मानसं येषां तथाभूतानाम्।

(च) पारम्पर्येण क्रमेण। अस्फुरत् प्रकटतामगच्छत्।

सवल्कले इति। दाशरथौ रामे सवल्कले परिहितद्रुमत्वचि सति वशिष्ठः यत् आमीलिताक्षः निमीलितनयनः अभूत् तदेव नेत्रनिमीलनं महर्षेः वशिष्ठस्य काकुत्स्थस्य रामस्य याथार्थ्यं तत्त्वं परमात्मत्वमिति भावः. तस्य विलोकनस्य साक्षात्कारस्य करणं साधकतमं, करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपीत्यमरः। जातम्। तेन निमीलनेन रामोऽयं परमात्मेति तत्त्वदर्शनम् अभूदिति निष्कर्षः। उपजातिवृत्तम् ॥३९॥

अस्य पीताम्बरत्यागे किं जाता विक्रिया पुरा।
इति प्रत्यग्दृशां श्रेष्ठो वशिष्ठो नातिविव्यथे ॥४०॥

सोऽयं मैथिलीवल्कलधारणमरुणदरुणसारथिकुलगुरुः (क)। तत्र, प्रयाणाय प्रणिपतन्तीं स्नुषामाश्लिष्य कौशल्या गद्गदमवदत्।

घर्मे निदाघकिरणस्य करैः कठोरैः
कान्तारमध्यपदवीषु नखम्पचासु।
त्वां वीक्ष्य निस्तुलपदां वनदेवताभि-
र्निन्दिष्यते नियतमेव निमेषहानिः ॥४१॥

---

अस्येति। अस्य रामस्य पीताम्बरत्यागे पीतवसनपरित्यागेनान्यविधवस्त्रपरिधाने इति भावः पुरा पूर्वं किं विक्रिया विकारः जाता? न कश्चिदित्यर्थः, सम एव भावः आसीदिति भावः। इति धियेति शेषः प्रत्यग्दृशां परात्परदर्शिनां श्रेष्ठो वशिष्ठः न अतिविव्यथे नातिव्यथितः। परात्परस्य परमात्मनः रामस्य राजार्हे परिच्छदे वल्कले वा को भेद इति विविच्य सन्तापमत्यजदिति निष्कर्षः। अनुष्टुब्वृत्तम् ॥४०॥

(क) अरुणसारथेः सूर्यस्य कुलगुरुः वशिष्ठ इत्यर्थः। अरुणत् न्यवारयदित्यर्थः।

घर्मे इति। घर्मे ग्रीष्मे निदाघकिरणस्य उष्णरश्मेः कठोरैः करैः किरणैः नखम्पचासु नखपर्य्यन्तसन्तापिनीष्विति यावत् कान्तारमध्यपदवीषु वनमध्यवर्त्मसु निस्तुलपदां निरुपमचरणाम् अतिमृदुलाङ्घ्रिमित्यर्थः त्वा वीक्ष्य दृष्ट्वा वनदेवताभिः निमेषहानिः निर्निमेषः देव इत्यर्थः विधातेति यावत् नियतं निश्चितं निन्दिष्यते कथमीदृश्याः सुकुमार्य्याः अरण्ये गमनम्? सर्वथा धिग् विधातारं यस्य वस्तुविवेको नास्तीति निन्दाहेतुरिति भावः। वसन्ततिलकं वृत्तम् ॥४१॥

अथ मैथिलीनाथः सलक्ष्मणः सप्रदक्षिणं राजानं जननीजनञ्च प्रणम्य प्रतिषिद्धप्रतिहारचक्रो (ज) निश्चक्राम।

रथो दशरथाज्ञापरतन्त्रेण द्वारि समानीतः।

प्रारब्धयात्रस्य रघूद्वहस्य
प्रागेव सीता रथमारुरोह।
आनीलरथ्यं रथमारुरुक्षो-
रङ्का प्रभोरग्रसरी प्रभेव ॥४२॥

दाशरथी च रथमारुरुहतुः।

यथा यथा राघवराजधानीं
विहाय सीता विपिनोत्सुकाऽभूत्।
तथा तथाजायत यातुकामा
लङ्कां विना राक्षसराजलक्ष्मीः ॥४३॥

---

(ज) प्रतिषिद्धेति प्रतिषिद्धं मा मामनुसरेति निवारितं प्रतिहारचक्रं दौवारिकसमूहः येन तथोक्तः।

प्रारब्धेति। सीता, प्रारब्धा कृता यात्रा प्रयाणं येन तादृशस्य रघूद्वहस्य रामस्य प्रागेव पूर्वमेव आरोहणादिति शेषः आनीला रथ्या रथवाहाः अश्वा इत्यर्थः यस्य तादृशं रथम् आरुरुक्षोः आरोढुमिच्छोः अङ्का प्रभोः दिवसकरस्य अग्रसरी अग्रवर्त्तिनी प्रभेव रथम् आरुरोह। उपमालङ्कारः। इन्द्रवज्रावृत्तम् ॥४२॥

यथेति। सीता राघवराजधानीम् अयोध्यां विहाय यथा यथा विपिनोत्सुका वनाभिमुखी अभूत्, राक्षसराजस्य रावणस्य लक्ष्मीः तथा तथा लङ्कां विना परित्यज्येति भावः यातुकामा गमनोन्मुखी अजायत आसीत्। उपजातिवृत्तम् ॥४३॥

आबालवृद्धमनुगच्छति रामभद्र-
मेषा पुरी तदिह मा खलु निर्गुणा स्यात्।
इत्यादरादिव धरा बहुधा विधाय
धूलिच्छलान्निजतनुं तमनुप्रतस्थे ॥४४॥

नृपसुखविमुखेन स्वेन कान्तेन साकं
दुहितरि विधिपाकात् काननाय व्रजन्त्याम्।
अकुशलमिति मत्वा नूनमङ्गाय धात्री
परिजनमुखबाष्पं पांशुभिः पर्य्यहार्षीत् ॥४५॥

---

आबालेति। आबालवृद्धं बालवृद्धपर्य्यन्तं सर्व्वो जन इति भावः रामभद्रम् अनुगच्छति, तत् तस्मात् इह जगति एषा पुरी अयोध्या निर्गुणा गुणरहिता अकृतज्ञेति भावः मा खलु स्यात् नैव भवतु, इति धियेति शेषः धरा अयोध्याभूमिः धूलिच्छलात् बहुधा निजतनुं विधाय कृत्वा आदरादिव तं रामभद्रम् अनुप्रतस्थे अनुजगाम। रामानुसारिणां जनानां बहुधा सञ्चारात् रजोऽन्धकार आविरासीदिति भावः। वसन्ततिलकं वृत्तम् ॥४४॥

नृपेति। विधिपाकात् दैवदुर्विपाकात् नृपसुखविमुखेन त्यक्तराज्यसुखेनेत्यर्थः स्वेन निजेन कान्तेन स्वामिना रामेणेत्यर्थः साकं सह, साकं सार्द्धं समं सहेत्यमरः। दुहितरि कन्यायां सीतायामित्यर्थः काननाय व्रजन्त्यां गच्छन्त्यां सत्यां धात्री पृथिवी अकुशलम् अमङ्गलम् आयातिकमिति भावः मत्वा अङ्गाय झटिति पांशुभिः रजोभिः परिजनानां मुखबाष्पं वदनाश्रुजलं पर्य्यहार्षीत् परिजहार नूनमुत्प्रेक्षे। यात्राकाले रोदनममङ्गलकरमिति बुद्धा रजोयोगेन जनानां नयनवारिशोषणं कृतवतीत्यर्थः। उत्प्रेक्षालङ्कारः। मालिनीवृत्तम् ॥४५॥

रामानुसारसहनिर्गतपौरवर्गा
संस्थानमात्रसहचत्वरराजमार्गा ।
निर्मुक्तभोगभुजगत्वगिव क्षणेन
लघ्वीबभूव रघुपुङ्गवराजधानी ॥४६॥

अथ दशरथः सान्तःपुरजनः पुरान्निर्गत्य गत्यन्तराभावात्तमेव रामं सुचिरमवलोकयन्नालोकपथ(झ)मतिक्रान्ते सुमन्त्राक्रान्तस्यन्दने (ञ) रघुनन्दने स्यन्दमानवाष्पप्रवाहो (ट) मोहमुपगम्य भूम्यां पपात । ततः परिजनकृताश्वासाल्लब्धसंज्ञाय राज्ञे कौशल्यासदन(ठ)मरोचत । दाशरथि-

---

रामेति । रघुपुङ्गवानां रघुश्रेष्ठानां राजधानी अयोध्या रामानुसारेण राममनुसरामीति बुद्ध्या सह निर्गतः युगपत् वहिर्गतः पौरवर्गः यस्याः तथोक्ता, संस्थानमात्राः चिह्नमात्राः चिह्नावशेषा इति भावः, सहचत्वरराजमार्गाः यस्याः तथाविधा सहचत्वरराजपथमात्रावशिष्टेति भावः, अतएव क्षणेन निर्मुक्तः परित्यक्तः भोगः भुजगशरीरमित्यर्थः, भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोरित्यमरः । यया तादृशी भुजगत्वगिव सर्पनिर्मोक इव लघ्वीबभूव । उपमालङ्कारः । वसन्ततिलकं वृत्तम् ॥४६॥

(झ) आलोकपथं दर्शनपथम् ।

(ञ) सुमन्त्रेति सुमन्त्रेण तदाख्येन सारथिना आक्रान्तः अध्यासितः स्यन्दनः रथो यस्य तादृशे ।

(ट) स्यन्दमानेति स्यन्दमानः प्रसरन् वाष्पप्रवाहः अश्रुजलसमूहः यस्य तथाभूतः सन्नित्यर्थः ।

(ठ) कौशल्यासदनं राममातुर्गृहम् ।

त्यहमहमिकया (ड) समूर्च्छन्महाजनौघदुरवगाहतया (ढ) मन्दायमानस्यन्दनवेगः सकलजनविवेककोकनदं (ण) मुकुलयन् (त) मोहतमसा (थ) तमसातट(द)मुपागतत्, चरमगिरिशिखर(ध)मपि सहस्रदीधितिः (न) ।

आविःप्रलापमटवीं भजतो जनस्य
काकुत्स्थपादविरहासहमानसस्य ।
आस्तीर्णपर्णशयनान्यभवन् गृहाणि
मूलस्थलानि तमसातटभूरुहाणाम् ॥४७॥

---

(ड) अहमहमिकया अहमग्रतः अहमग्रतः राममनुसरामीत्येवमाग्रहातिरेकेणेति भावः, अहमहमिका तु सा स्यात् यः परस्परं भवत्यहङ्कार इत्यमरः ।

(ढ) सम्मूर्च्छदिति सम्मूर्च्छताम् अभिधावतां महाजनानाम् ओघेन समूहेन दुरवगाहतया दुर्गमतया ।

(ण) सकलेति सकलानां जनानां विवेकः ज्ञानमेव कोकनदं रक्तोत्पलम् ।

(त) मुकुलयन् निमीलयन् आच्छादयन्निति भावः ।

(थ) मोहतमसा मोहान्धकारेण ।

(द) तमसातटं तमसा नाम नदी तस्यास्तटः तम् ।

(ध) चरमगिरिशिखरम् अस्ताचलचूडाम् ।

(न) सहस्रदीधितिः सूर्यः ।

आविरिति । तमसायाः तटेषु ये भूरुहाः वृक्षाः तेषां मूलस्थलानि तलप्रदेशाः काकुत्स्थस्य रामस्य पादविरहासह चरणविच्छेदाक्षम मानसं यस्य तथाभूतस्य आविर्भूतः प्रलापः यत्र तत् बहुविलापसहितमिति यावत् यथा तथा अटवीं कान्तारं भजतः

अथ निशीथे (प) दाशरथिः सुमन्त्रेण संमन्त्र्य वञ्चितजनसङ्गति(फ)रतिविनतानन्दनेन स्यन्दनेन (ब) वेदश्रुतिगोमतिनिष्यन्दिनी नाम नदीः (भ) तत्र च परिष्कृतामिक्ष्वाकवे मनुना दत्तां वसुमतीमतीत्य (म) विविधवनगहनवीरुत्तृणपटलपिहितरथतुरगखुरमुद्रया पदव्या (य) गङ्गातरङ्गसङ्गतमूलं गगनगङ्गालिङ्गितशृङ्गं शृङ्गवेरपुरालङ्कार(र)मिङ्गुदीपादपमुपागमत्। तत्र,

---

गच्छतः जनस्य आस्तीर्णानि विरचितानि पर्णशयनानि पत्रशय्याः येषु तादृशानि स्थलानि अभवन्। वसन्ततिलकं वृत्तम् ॥४७॥

(प) निशीथे अर्द्धरात्रे।

(फ) वञ्चितजनसङ्गतिः प्रतारितानुयात्रिकलोकसमूह इत्यर्थः अनुयात्रिकान् जनान् परित्यज्येति भावः।

(ब) अतीति अतिक्रान्तः विनतानन्दनः गरुडः येन तादृशेन प्रजविनेति भावः। स्यन्दनेन रथेन।

(भ) वेदश्रुतीति वेदश्रुतिः गोमती निष्यन्दिनी च ताः नदीः अतीत्येत्यन्वयः।

(म) वसुमतीं भूमिम्। अतीत्य अतिक्रम्य।

(य) विविधेति विविधाभिः नानाविधाभिः वनगहनवीरुद्भिः वनस्य निविडलताभिः तृणपटलैः तृणसमूहैश्च पिहिता आच्छन्ना रथतुरगाणां खुरमुद्राः खुरपुटाः यया तथाभूतया। पदव्या वर्त्मना।

(र) गगनगङ्गालिङ्गितम् आकाशगङ्गाश्लिष्टम् अभ्रङ्कषमिति भावः। शृङ्गेति शृङ्गवेरं नाम पुरं नगरं तस्य अलङ्कारं भूषणभूतम्।

दृष्ट्वा राममनेकजन्मरचितैर्दृश्यं शुभैः कर्मभिः
श्रुत्वा मातृवरद्वयादुपगतां वृत्तिञ्च वैखानसीम्।
वेगोज्जृम्भितहर्षशोकजनितैर्वाष्पैर्निषादाधिपः
शीताशीतगुणान्वितैरविरलैः संपृक्तवक्त्रोऽभवत् ॥४८॥

सोऽयं सुहूर्त्तमासाद्य गुहः कृताञ्जलिरञ्जसा (ल) रघुनाथमनुनाथितवान् (व)। देव! पितृनियोगप्रवणान्तःकरण(श)मपि भवन्तं विज्ञापितुमज्ञातजानपदरीति(ष)-भारती मां मुखरयति(स)। अस्य तदनिवार्य्यवीर्य्योद्भटभटव-

---

दृष्ट्वेति। निषादानां चाण्डालानाम् अधिपः गुह इत्यर्थः अनेकजन्मरचितैः बहुजन्मकृतैः शुभैः कर्मभिः दृश्यं साक्षात्करणीयमिति यावत् मातुः कैकेय्याः वरद्वयात् पितृदत्तादिति शेषः हेतोः वैखानसी वृत्तिः तापसवृत्तिम् उपागतम् आश्रितं रामं दृष्ट्वा श्रुत्वा च वेगेन उज्जृम्भिताभ्याम् उद्दीपिताभ्यां हर्षशोकाभ्यां जनितैः रामदर्शने हर्षः वनप्रस्थाने च शोक इति भावः अतएव शीताशीतगुणान्वितैः हर्षजनितैः शीतलैः शोकजनितैः उष्णैरिति यावत् अविरलैः घनैः अविरतधारैरिति यावत् वाष्पैः अश्रुभिः सम्पृक्तम् आप्लुतं वक्त्रं वदनं यस्य तथाभूतः अभवत्। शार्दूलविक्रीडितं वृत्तम् ॥४८॥

(ल) अञ्जसा झटिति।

(व) अनुनाथितवान् प्रार्थितवान्।

(श) पित्विति पितृनियोगे आज्ञापालने इत्यर्थः प्रवणं तत्परम् अन्तःकरणं यस्य तादृशम्।

(ष) अज्ञातेति अज्ञाता अविदिता जानपदानां नगरवासिनां रीतिः प्रथा यया तादृशी।

(स) मुखरयति वाचालयति वक्तुं प्रेरयतीत्यर्थः।

र्गदुर्गयुक्तमनुषक्तभोज्यजातमम्बरं मन्थराहृदयतोदावह(ङ)-मस्मदीयं राज्यम्। तदिदमनिशं प्रथमप्रवृत्तं (च) परित्यज्य किञ्चिदनुत्सृज्य परिजनयोग्यभाजनममुष्य(क)मेव तातादेशेन देशेऽस्मिन् विस्मयनीयानुभावसुनिष्पन्दमन्दाकिनीसन्दर्शनेन (ख) मन्दायमानजननीजनदुर्दश(ग)श्चतुर्दश दशरथकथिताः समाः समापयतु (घ) भवानिति।

तस्मिन्नित्थं प्रार्थनाभाजि सख्यौ
प्रत्याचख्यौ रामभद्रः प्रियोक्त्या।

---

(ङ) अनिवार्येति अनिवार्यं वीर्यं येषां तादृशा उद्भटाः उत्कटाः भटवर्गा योद्धृसङ्घा यस्मिन् तथाभूतं यत् दुर्गं तेन युक्तम्। अनुषक्तेति अनुषक्तेन उत्तरोत्तरवर्द्धितेन भोज्यजातेन मन्थरम् अविचलम्। मन्थरेति मन्थरायाः कैकेयीपरिचारिण्याः हृदयस्य तोदावहं सन्तापकरं भवत्सुखदर्शनादिति भावः।

(च) अनिशं सततम् अनुत्सृज्येति क्रियाया विशेषणम्। प्रथमप्रवृत्तं प्रथमोपस्थितं प्रथमोपस्थितपरित्यागे प्रमाणाभावादिति भावः।

(क) परिजनयोग्यभाजनं परिवारोचितपात्रम्। अमुं जनं मामिति भावः। अनुज्झन् अत्यजन्।

(ख) विस्मयेति विस्मयनीयः अनुभावः प्रभावः यस्य तथाविधं सुनिष्पन्दं यस्याः तादृशी या मन्दाकिनी गङ्गा तस्याः सन्दर्शनेन।

(ग) मन्दायमानेति मन्दायमाना अल्पायमाना अल्पवदनुभूयमानेति यावत् जननीजनानां मातृवर्गाणां दुर्दशा यस्य तथाभूतः विस्मृतमातृजनदुःख इति भावः।

(घ) समाः वत्सरान्। समापयतु गमयतु।

तस्मिन्निति। तस्मिन् सख्यौ गुहे इत्थं प्रार्थनाभाजि सति

मातुर्वाक्याद्वल्कलेनावृतं मे
गात्रं चात्मप्रक्रियां नार्हतीति ॥४९॥

ततस्तु तदनुरोधेन (ङ) रोधस्तरो(च)रधस्तात् सुमन्त्र-नियन्त्रितरथ्ययोर्दाशरथ्यो(छ)रातिथ्यं समधुपर्कं कर्तुमिव मन्दमन्दमरविन्दवृन्दस्यन्दमानमकरन्दविन्दुसन्दोहवाहिनि वाहिनीतरङ्गमरुति(ज) वाति काननगमनावस्थां काकुत्स्थस्य प्रेक्षितुमक्षमायामिव क्ष्माभृति चरमे (झ) तिरोहितायामह्नामधिदेवतायां (ञ) सन्ध्याञ्चरमां (ट) रामः

---

रामभद्रः मातुः कैकेय्याः वाक्यात् वल्कलेन वृक्षत्वचा आवृतं मे मम गात्रं शरीरं चात्मप्रक्रिया चात्मियष्ठत्ति राजकार्य्यमिति यावत् न अर्हति इति एवंरूपया प्रियोक्त्या प्रियवचनेन प्रत्याचख्यौ प्रत्याख्यातवान् गुहवाक्यं नाकरोदिति भावः। शालिनीवृत्तं, मात्तौ गौ चेच्छालिनी वेदलोकैरिति तल्लक्षणात् ॥४९॥

(ङ) तदनुरोधेन गुहस्य अनुरोधेन।

(च) रोधस्तरोः तटतरो।

(छ) सुमन्त्रेति सुमन्त्रेण नियन्त्रिता नियमिता रथ्या अश्वा ययोः तथाभूतयोः।

(ज) अरविन्देति अरविन्दवृन्देभ्यः पद्मसमूहेभ्य स्यन्दमानानां निःसरतां मकरन्दविन्दूनां सन्दोहवाहिनि समूहवतीत्यर्थः। वाहिनीतरङ्गमरुति नदीतरङ्गवायौ। वाति वहति सति।

(झ) प्रेक्षितुं द्रष्टुम्। अक्षमायामिव अशक्तायामिव। क्ष्माभृति अचले। चरमे पश्चिमे।

(ञ) तिरोहितायाम् अदर्शनं गतायाम् अह्नामधिदेवतायां दिवाधिदेव्याम्।

(ट) चरमां सन्ध्या सायंसन्ध्याम्।

समाप्य तस्यां तरुमूलभुवि लक्ष्मणकल्पितं पर्णतल्प(ठ)-मभजत ।

राने विदेहसुतया तरुमूलसंग-
मन्तःपुरं विशति लक्ष्मणसौविदल्लम् ।
निध्याय तं नियमितामितवाष्पवृष्टि-
र्निद्रां निरस्य निषसाद निषादनाथः ॥५०॥

व्यतीतायां विभावर्य्यामर्य्यममरीचिवीचिमालाहारिणि पूर्वोर्वीधरमूर्ध्नि विरचितजटाबन्धौ (ड) सह सीतया राम-

---

(ठ) पर्णतल्पं पत्रशय्याम् ।

रामे इति । रामे विदेहसुतया सीतया सहेति शेषः लक्ष्मणः सौविदल्लः कञ्चुकी यत्र तथोक्तं लक्ष्मणपरिचारकमिति यावत्, सौविदल्लाः कञ्चुकिन इत्यमरः । तरुमूलं सद्म यस्य तथोक्तम् अन्तःपुरं विशति गच्छति सति निषादनाथः चण्डालाधिपतिर्गुह इत्यर्थः तं रामं निध्याय चिन्तयित्वा परमात्मत्वेनेति भावः, नियमिता निवारिता अमिता अतिशायिनीत्यर्थः वाष्पवृष्टिर्येन तथोक्तः रामस्य तत्त्वदृष्ट्या परिहृतशोक इति भावः निद्रां निरस्य त्यक्त्वा निषसाद आसाञ्चक्रे । वसन्ततिलकं वृत्तम् ॥५०॥

(ड) व्यतीतायां गतायाम् । विभावर्य्यां रजन्याम् । अर्य्यमेति अर्य्यमणः सूर्य्यस्य मरीचयः मयूखा एव वीचिमालास्तरङ्गश्रेणयः ताभिः हारिणि मनोहारिणीत्यर्थः पूर्वोर्वीधरमूर्ध्नि उदयाचलशिखरे । विरचितेति विरचितः विशेषेण कल्पितः जटाबन्धः याभ्यां तथाभूतौ ।

रथी भागीरथीकच्छ(ढ)मासच्छताम्। तत्र रामः प्रहृष्टचेताः सीतामाचष्ट।

मेध्याश्वमार्गपरिमार्गणदुर्णयस्य
दिव्यौषधिं कपिलकोपमहाज्वरस्य।
तातानुतर्पणपचेलिमभागधेयां
भागीरथीं भगवतीं शरणं भजामः॥५१॥

तदनन्तरं रामः सान्त्ववचननिवारितसुमन्त्रः (ण) ससौमित्रिर्मङ्गलानि प्रार्थयमानया तया मैथिल्या सह गुहेनानीतां नाव(त)मारुरोह। स एष निषिध्य निषा-

---

(ढ) दाशरथी रामलक्ष्मणौ। भागीरथीकच्छं भागीरथ्याः जलप्राय प्रदेशम् तटमिति यावत्, जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविध इत्यमरः।

मेध्येति। मेध्य. अश्वमेधीयः अश्वः तस्य मार्गः गतिरिति यावत् तस्य परिमार्गणं परितः समन्तात् अन्वेषणमेव दुर्णयः अपथ्याचारः यस्य तादृशस्य कपिलकोपमहाज्वरस्य कपिलमहर्षेः कोपरूपस्य महतो ज्वरस्य दिव्यौषधिं शमयित्रीमिति यावत्, तातानां पितॄणाम् अनुतर्पणेन पश्चात् तर्पणेन पचेलिमं परिणतमिति यावत् भागधेयं सौभाग्यं यस्यां तथाभूतां भगवतीं भागीरथीं गङ्गां शरणं निस्तारकारिणीं भजामः सेवामहे। पुरा मेध्याश्वाहरणार्थिषु सगरात्मजेषु मत्पूर्वजेषु कपिलमहसा दग्धेषु भगीरथः बहुतपोभिरिमां गङ्गां पातालं नीत्वा तान् गङ्गाजलसङ्गेनोद्धृत्य तर्पयामासेति पुराणवार्त्ता। वसन्ततिलक वृत्तम् ॥५१॥

(ण) सान्त्वेति सान्त्ववचनेन प्रियवाक्येन निवारितः अनुगमनाय निषिद्ध इति यावत् सुमन्त्रः येन तथाभूतः।

(त) नावं तरणिम्। स्त्रियां नौस्तरणिस्तरिरित्यमरः।

दाधिपते(थ)रनुगमनमपि तूर्णमेवावतीर्णसुरसरितपारः(द) सम्पूर्णसस्ये मत्स्याभिधाने जनपदे कृतपदस्खलल्लक्ष्यवेधनचतुर(ध)श्चतुरो मृगान् निहत्य कुत्रचिद्वनस्पतिमूले निशामनैषीत् (न)। अन्येद्युः(प)र्वन्येन पथा प्रयाता(फ)स्ते प्रभाते प्रतीयमानहोमधूमप्राग्द्वारं (ब) भारद्वाजाश्रममाश्रयन्तश्चाभिवन्द्य तममन्दहर्षं (भ) महर्षिजनेनादिष्टवर्त्मना (म) वैकर्तनीपूरोपप्लवं प्लवेन वैणवेन निस्तीर्य्य(य) श्रमधनजन-

(थ) निषादाधिपतेः गुहस्य।

(द) अवतीर्णेति अवतीर्णः सुरसरितः गङ्गायाः पारः येन तथोक्तः गङ्गामुत्तीर्य इत्यर्थः।

(ध) चलदिति चलता धावतां लक्ष्याणां शरव्याणां मृगाणामिति यावत् वेधने चतुरः निपुणः मृगयानिपुण इत्यर्थः।

(न) अनैषीत् अतिवाहयामास।

(प) अन्येद्युः अपरस्मिन् दिने।

(फ) प्रयाताः प्रस्थिताः।

(ब) प्रतीयमानेति प्रतीयमानं लक्ष्यमाणं होमधूम एव प्राग्द्वारं पूर्वद्वारं प्रथमं द्वारमित्यर्थः यस्य तादृशम्।

(भ) अमन्दः अत्यन्तः हर्षः रामदर्शनजः इति भावः यस्य तथाभूतं तं भरद्वाजम् अभिवन्द्य अभिवाद्य।

(म) आदिष्टवर्त्मना कथितमार्गेण।

(य) वैकर्त्तनीपूरोपप्लवं विकर्त्तनस्य सूर्य्यस्य अपत्यं स्त्री वैकर्त्तनी यमुना तस्याः पूरः प्रवाह एव उपप्लवः उपद्रवः तम्। प्लवेन नौकया। वैणवेन वेणवो वंशविशेषाः तेषामयं वैणवः तेन वंशकल्पितेनेत्यर्थः। निस्तीर्य्य उत्तीर्य्य।

सन्निधानशमितश्वापदसत्त्वचारित्रं (र) विचित्रं चित्रकूटमचलमभजन्त (ल)।

अनुजरचितपर्णागारहृद्यासु माद्यत्-
परभृतकुलचञ्चत्पञ्चमैरञ्जितासु ।
जनकदुहितृयोगाज्जातसाकेतसौख्य-
श्चिरमरमत रामश्चित्रकूटस्थलीषु ॥५२।

अथ मां वनवासवैरस्या(व)दपि राम. समाह्वयेदिति प्रत्याशया परतन्त्र सुमन्त्र कानिचिदहानि गुहसकाशे नीत्वा निराश(श)स्तत. प्रतिनिवृत्तो निवृत्तोत्सवामयोध्या-

(र) शमेति शाम एव धनं येषा ते शमधना: ऋषय इत्यर्थ तेषा जनानां तापसजनानामित्यर्थः सन्निधानेन समर्मेण शमितम् अपनीतं श्वापदम् अन्योन्यवधभाव: यत्र तादृश सत्त्वाना प्राणिना चारित्रं यस्मिन् तथाभूत विनीतश्वापदकुलमिति भाव ।

(ल) अभजन्त प्रापु ।

अनुजेति । राम अनुजेन लक्ष्मणेन रचित· निर्मितः य पर्णागार पत्रकुटीर तेन हृद्यासु मनोज्ञासु माद्यताम् प्रहृष्यता परभृतकुलानां कोकिलवृन्दानां चञ्चद्भि प्रसरद्भि पञ्चमै स्वरविशेषै. रञ्जितासु आमोदितासु चित्रकूटस्थलीषु जनकदुहितु· सीताया योगात् सङ्गात् जात साकेतसौख्यम् अयोध्यानिवाससुखं यस्य तथाभूत सन् चिरं दीर्घकालम् अरमत सुखेन तस्थावित्यर्थः। मालिनावृत्तम् ॥५२॥

(व) वनवासेति वने वासस्य वैरस्यात् विरसत्वात् दु खाकरत्वादिति भावः ।

(श) निराश. रामस्य प्रत्यागमनं प्रतीति शेष. ।

मासाद्य निर्दाशरथिः (ष) सारथिरिति शोकातिरेकात् पौरजनजनितदीनाक्रन्दमन्दीभूतनेमीघोषा(स)द्रथ्या रथाद्दशरथं प्रयाणोन्मुखप्राण प्राणंसीत् (ह)। एतद्दर्शनेन विसंज्ञो (च) दशरथः कौशल्यासुमित्राभ्यां समाश्वासितः क्व प्रयातं रामेण क्व कथितं मैथिल्या किं वृत्तः सौमित्रिरिति मुहुर्मुहुरश्रुकुण्ठितकण्ठः सुमन्त्रमन्वयुङ्क्त (क)। सोऽपि राज्ञे व्यजिज्ञपत्। देव! कथं ब्रवीमि, कठिनहृदयोऽहम्।

सेवारसानुगतपौरमनोरथस्य
पारे रथस्य च सुतौ तव वर्त्तमानौ।
भूत्वा विदेहदुहितुर्नवसौविदल्लौ
भागीरथीतटवने पथिकावभूताम् ॥५३॥

---

(ष) निवृत्तोत्सवा निरानन्दामित्यर्थः। आसाद्य प्राप्य। निर्दाशरथि रामलक्ष्मणरहित।

(स) पौरेति पौरैः पुरवासिभिर्जनै जनित आरब्ध इत्यर्थः यः दीनः कातरः आक्रन्द तेन मन्दीभूतः लघूभूतः नेमिघोषः चक्रप्रान्तध्वनिर्यस्य तथाभूतात्।

(ह) प्राणंसीत् प्रणनाम।

(च) एतद्दर्शनेन सुमन्त्रदर्शनेन। विसंज्ञः विचेतन।

(क) अन्वयुङ्क्त अपृच्छत्।

सेवेति। तव सुतौ रामलक्ष्मणौ सेवाया यो रसः अनुरागः तम् अनुगतानां पौराणां पुरवासिनाम् अनुगच्छतामिति शेषः मनोरथस्य अभिलाषस्य रथस्य च पारे वर्त्तमानौ परित्यक्तपौरजनानुसरणौ रथरहितौ चेत्यर्थः विदेहदुहितुः सीताया नवौ सौवि-

किन्तु,

देव ! त्वत्तनयस्य कुन्तलभरं चीरैः स्वधेनूद्भवैः
सेक्तुं नालमरुन्धतीपतिरभूत्तस्याभिषेकोत्सवे ।
सिक्तो हन्त स एष मैथिलसुतावाष्पोदकोत्पादकै-
र्न्यग्रोधचरितैर्जटां रचयितुं चीरैर्निषादाहृतैः ॥५४॥

तस्या विदेहदुहितुः पदयोर्नखेषु
लाक्षां विनाप्यरुणिमा सहसा बभूव ।
वन्ये पथि प्रियतमेन सह व्रजन्त्या
वैवर्ण्यमाविरभवन्न कदापि वक्त्रे ॥५५॥

---

दृष्टौ कश्चित्किनौ रत्नकाविरुयर्थः भूत्वा भागीरथ्याः गङ्गायाः तटवने तीरकानने पथिकौ पादचारिणौ अभूताम् । वसन्ततिलकं वृत्तम् ॥५३॥

देवेति । हे देव ! अरुन्धतीपतिर्वशिष्ठः स्वधेनूद्भवैः यस्य होमधेनुजातैः चीरैः दुग्धैः तस्य तव तनयस्य रामस्य अभिषेकोत्सवे कुन्तलभरं केशनिचयं सेक्तुं न अलं समर्थः अभूत्, हन्त खेदे स एष कुन्तलभरः मैथिलसुतायाः सीतायाः वाष्पोदकानाम् अश्रुजलानाम् उत्पादकैः निषादेन चाण्डालेन गुहेन आहृतैः आनीतैः न्यग्रोधात् वटात् चरितैः निःसृतैः चीरैः जटां रचयितुं सिक्तः । वटनिर्यासेन केशानां जटिलत्वं दृष्ट्वा सीता रुरोदेति भावः । शार्दूलविक्रीडितं वृत्तम् ॥५४॥

तस्या इति । लाक्षाम् अलक्तकरागं विनापि तस्या विदेहदुहितुः सीतायाः प्रियतमेन रामेण सह वन्ये पथि व्रजन्त्या गच्छन्त्याः सत्याः पदयोर्नखेषु सहसा अरुणिमा लौहित्यं बभूव । किन्तु वक्त्रे वदने कदापि वैवर्ण्यं मालिन्यं न आविरभवत् प्रियतमसङ्गजोल्लासातिशयादिति भावः । वसन्ततिलकं वृत्तम् ॥५५॥

सीतापतेः किसलयैः परिकल्प्य तल्पं
सञ्चार्य्य सत्वदमनाय निशासु दृष्टिम्।
धन्वी तदङ्घ्रिभजनादिव पुण्यलभ्या-
दस्वप्न एव वनवर्त्मनि लक्ष्मणोऽभूत् ॥५६॥

एवं सुमन्त्रनिवेदितपुत्रचरित्रश्चरमगिरिशिखरजुषि निगमवपुषि ज्योतिषि (ख) हृदयलग्नशोकशल्या कौशल्या-माश्वास्य नरपतिरित्थमकथयत्। पुरा खलु सरयूरोधसि (ग) विविधतरुनिवहपिहितविवस्वति वेतस्वति मृगया-स्पृहया(घ)कमपि समयमगमम्। तत्र,

तोयादाननिदानपुष्करगजभ्रान्त्या तपस्वी मया
विद्धः कश्चन शब्दवेधनविदा पाथः सरय्या हरन्।

---

सीतापतेरिति। पुण्यलभ्यात् सुकृतसुलभात् तस्य रामस्य अङ्घ्रिभजनादिव चरणसेवनादिव धन्य. कृतार्थतां गत लक्ष्मण किसलयैः पल्लवैः सीतापतेः तल्पं शय्यां परिकल्प्य रचयित्वा सत्त्वानां श्वापदानां दमनाय निवारणाय निशासु दृष्टिं सञ्चार्य्य उन्मील्येत्यर्थः वनवर्त्मनि चरणमार्गे अस्वप्न एव निद्रारहित एव अमर देवभावं प्राप्त एव अभूत्। वसन्ततिलकं वृत्तम् ॥५६॥

(ख) चरमेति चरमगिरिशिखरजुषि अस्ताचलचूडावलम्बिनि। निगमवपुषि वेदमयशरीरे ज्योतिषि सूर्य्ये इत्यर्थ.।

(ग) सरयूरोधसि सरयूतीरे।

(घ) विविधेति विविधैर्नानाप्रकारैः तरुनिवहैः वृक्षसमूहैः पिहितः आच्छादितः विवस्वान् सूर्य्यः येन तादृशे। वेतस्वति वेतसयुक्ते इति यावत्। मृगयास्पृहया मृगयार्थमित्यर्थ.।

तोयेति। शब्दवेधनविदा शब्दानुसारेण लक्ष्यवेधनपटुनेत्यर्थः

तस्मिन्नौ जरदन्धयोरनुमतिं कर्तुं चितां चिन्वतोः
शापो मय्यपतद्भवानपि सुतप्रेम्णा प्रणश्येदिति ॥५७॥

अहं वैश्यस्य शूद्रायां जातस्तस्मान्न संभवेत् ।
ब्रह्महत्येति मामुक्त्वा स्वर्गतो दुर्गतो मुनिः ॥५८॥

तदवश्यं वध्य एवास्मि मृत्योरिति नरपतिः श्रुतिमार्ग-
गतरामा एव विरराम (ङ) ।

मुनिशापकृतोत्पत्तिर्विपत्तिर्निष्प्रतिक्रिया ।
यतो दशरथायाशु दिदेश दशमीं दशाम् ॥५९॥

---

सखा सरय्वाः पाथः जलं हरन् कश्चन तपस्वी तोयस्य आदानं ग्रहणं तस्य निदानं कारणभूतं पुष्कर शुण्डादण्डः यस्य तादृशस्य गजस्य भ्रान्त्या गजोऽयं निशि शुण्डादण्डेन जलमाकर्षतीति भ्रमेणेति यावत् विद्धः शरेण ताडितः । जरदन्धयो वृद्धयोरन्धयोश्च तत्पित्रोः तस्य तपस्विनः हतस्येति भावः जननीजनकयोः अनुमतिं मृतपुत्रानुगमनं कर्तुं चितां चिन्वतोः प्रविशतोरिति यावत् भवानपि सुतप्रेम्णा पुत्रस्नेहजनितशोकेनेति यावत् प्रणश्येत् विनाशं लभेत इति शापः मयि अपतत् । त्वमपि आवामिव पुत्रशोकेन प्राणान् त्यक्ष्यसीति भणन्तौ तौ दिवं गताविति भावः । शार्दूलविक्रीडितं वृत्तम् ॥५७॥

अहमिति । अहं वैश्यस्य शूद्रायां भार्यायामिति शेषः जातः तस्मात् ब्रह्महत्या ब्रह्मवधजनितं पातकमिति यावत् न सम्भवेत् तवेति शेषः इति माम् उक्त्वा स दुर्गतः दुरवस्थः शरक्षतदेहतयेति भावः मुनि तापसः स्वर्गतः स्वर्गं प्राप ॥५८॥

(ङ) श्रुतिमार्गेति श्रुतिमार्गं श्रवणविवरं न तु हृदयमपथमिति भावः गतः रामः यस्य तथाभूतः रामनाम स्मरन्निति यावत् । विरराम तूष्णीमास ।

मुनीति । मुनिशापेन कृता उत्पत्तिर्यस्याः तथाभूता मुनिशाप-

किं बहुना,

नाक्रान्तं त्रिदिवं परैः सुमनसां कान्ता न वन्दीकृता
नाकीर्णं पुरुहूतशासनधरैः साकेतवाह्याङ्गनम् ।
नादिष्टा सचिवाश्च भूतलपरित्राणाय यद्यप्यसौ
नाकं शोकवशादगाद्दशरथो नास्था वहन् वाहने ॥६०॥

अथ दशरथप्रशंसामासन्नैः (च) कैकेयीनिन्दाकन्द-

---

जनितेति यावत् विपत्तिः विपत् निष्प्रतिक्रिया अप्रतिकार्य्येत्यर्थः । यतः सा दशरथाय आशु शीघ्रं दशमी दशा मृत्युमित्यर्थः दिदेश दत्तवती ॥५९॥

नाक्रान्तमिति । यद्यपि परैः शत्रुभिः असुरैरिति भावः त्रिदिवं स्वर्गं न आक्रान्तं नोपद्रुतमित्यर्थः सुमनसां देवानां कान्ता नार्य्यः न वन्दीकृता न हठेन हृता असुरैरिति शेषः, पुरुहूतस्य इन्द्रस्य शासनधरैः किङ्करैः साकेतस्य अयोध्यायाः वाह्याङ्गनं वाह्य चत्वरं न आकीर्णं न व्याप्तं साहाय्यदानार्थं दशरथानयनार्थेति भावः तथा भूतलपरित्राणाय पृथिवीराज्यरक्षणाय सचिवाः अमात्याः न आदिष्टाः न आज्ञप्ताश्च, तथापि असौ दशरथः वाहने रथे आस्था यत्नं न वहन् विना रथमित्यर्थः शोकवशात् नाकं स्वर्गम् अगात् प्राप । असुराणामुपद्रवनिवारणार्थम् अमात्येषु राज्यभारं निक्षिप्य इन्द्रकिङ्कराहूतो राजा प्रायशः रथेन स्वर्गं गच्छति, साम्प्रतन्तु तत्तत् कारणं विनापि रथं विहाय पुत्रशोकात् स्वर्गं जगामेति निष्कर्षः । शार्दूलविक्रीडितं वृत्तम् ॥६०॥

(च) दशरथेति दशरथस्य प्रशंसया राजायं पुत्रशोकेनात्मनः प्राणानपि तत्याज तथापि सत्यात् न परिभ्रष्ट इत्येवंरूपया इति भावः आसन्नैः पूर्वैरिति यावत् ।

लिते. (छ) रामगुणकीर्त्तनद्विगुणितैरवरोधवधूजनपरि-देवनारवैर्मुखरितेषु (ज) दिङ्मुखेषु ।

अभूद्राजकम्लानसद्म गगनाङ्गनम् ।
आलोक्येव तथा ग्रान्तमशेषञ्च महीतलम् ॥६१॥

ततः प्रभाते वशिष्ठवचसा तैलद्रोण्यां नरपतिं निक्षिप्य क्षिप्रमेव (झ) भरतमकथितदशरथ(ञ)मेव आनयतेति दूतान् केकयेषु (ट) प्रेषयामासुः । तेऽपि जितपवनजवन-हयसङ्कोचितपथा(ठ)स्तुरगपतिपुरे (ड) दुःस्वप्नदर्शनदूयमा-नमानसं भरतमभिवन्द्य गुरुनिदेशं व्यजिज्ञपन् । सोऽयं मातामहेन युधाजिता (ढ) चानुज्ञातः कतिपयैरेव दिनै-

---

(छ) कैकेय्या निन्द्या कन्दलिते परिपुष्टे. ।

(ज) मुखरितेषु ध्वनितेषु ।

अभूदिति । अशेषं समस्तं महीतलम् अराजकेन राजराहित्येन म्लानाः सता साधूना गणा यत्र तादृशम् अशेषं गगनाङ्गन शून्यचत्वरम् आलोक्येव तथा ग्रान्तं निरुत्सोत्सवमिति यावत् अभूत् ॥६१॥

(झ) क्षिप्रमेव शीघ्रमेव ।

(ञ) अकथितेति न कथिता दशरथस्य कथा वार्त्ता यस्मै तादृशम् ।

(ट) केकयेषु तदाख्यदेशेषु ।

(ठ) जितेति जितः पवनः वायुर्यैः ते जवना वेगवन्तः ये हयाः तैः सङ्कोचिताः खर्वीकृता पन्थानः यैः तथाभूताः ।

(ड) तुरगपतिः अश्वपतिः केकयराज इत्यर्थः तस्य पुरे नगरे ।

(ढ) मातामहेन अश्वपतिना । युधाजिता तदाख्येन मातुलेन ।

रनिमित्तसम्भूतस्वान्तातङ्कः (थ) साकेत(त)माससाद ।

अतिचकितमतिः पुरैव पश्यन्
पुरमयथापुरचारपौरवर्गम् ।
न्यविशत भरतः परीतदूतः
पितृभवने पितृकाननादनूने ॥६२॥

स पितरमनवेक्ष्य तत्र मातुः
सदनगतः प्रणिपत्य तामपृच्छत् ।
क्व नु मम गतवान् पितेति सैषा
परुषतरं भरताय वाचमूचे ॥६३॥

---

(थ) अनिमित्तेन दुर्निमित्तेन सम्भूत सञ्जात स्वान्ते मनसि आतङ्क दुःखम् उद्वेग इति यावत् यस्य तथाभूत ।

(त) साकेतमयोध्याम् ।

अतीति । परीतदूतः राजदूतपरिवृतः भरतः पुरैव पूर्वमेव अयथा पुरे नगरे चरतीति चारः पौरवर्गः यस्मिन् तादृशं पुरम् अयोध्यानगरं पश्यन् अतएव अतिचकिता अतिशङ्किता मतिर्यस्य तथाभूतः सन् पितृकाननात् श्मशानात् अनूने अनल्पे तद्सदृशे इत्यर्थः पितुर्भवने न्यविशत प्रविष्टवान् । पुष्पिताग्रावृत्तम्, अयुजि न युगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रेति तल्लक्षणात् ॥६२॥

स इति । स भरतः तत्र पितृभवने पितरम् अनवेक्ष्य अदृष्ट्वा मातुः कैकेय्याः सदनगतः तां मातरं प्रणिपत्य मम पिता क्व नु कुत्र खलु गतवान् इति अपृच्छत् । सा एषा कैकयी भरताय परुषतरम् अतिनिष्ठुरं यथा तथा वाचम् ऊचे उक्तवती । पुष्पिताग्रावृत्तम् ॥६३॥

वनचर इव साकं मैथिलीलक्ष्मणाभ्यां
पितृविधिमभिरोद्धुं प्रस्थितो रामभद्रः ।
तदनु तव पिताभूत् कालधर्मानुकूल-
स्त्वमनुभव यथेच्छं निःसपत्नां धरित्रीम् ॥६४॥
मयूरीव महानागं केकया केकयात्मजा ।
भारत्या भरतं चक्रे परिक्षुभितमानसम् ॥६५॥

तदनु भरतश्चिरतरं विलप्य विलुप्यमानविवेकः (थ) कैकेयीमकथयत् ।

परिणतिपरुषाणां पाप्मनां सन्निपातात्
न हि भवसि चतुर्णां सा त्वमस्माकमम्बा ।

---

वनचर इति । रामभद्रः मैथिलीलक्ष्मणाभ्यां साकं सार्द्धं वनचर इव व्याध इव पितृविधिं पितुरादेशम् अभिरोद्धुं पालयितुं प्रस्थितः गतः, तदनु तदनन्तरं रामवनगमनात् परमित्यर्थः तव पिता कालधर्मस्य मृत्योः अनुकूलः वशङ्गतः अभूत् । त्वं निःसपत्नां शत्रुरहितां धरित्रीं पृथिवीं यथेच्छम् अनुभव भुङ्क्ष्व । मालिनीवृत्तम् ॥६४॥

मयूरीति । केकयात्मजा कैकेयी मयूरी केकया स्ववाण्या केका वाणी मयूरस्येत्यमरः । महानागं महासर्पमिव भारत्या वचसा उक्तरूपयेति शेषः भरतं परिक्षुभितं सन्तापितं मानसं यस्य तथाभूतं चक्रे कृतवती । तद्वचसा भरतो नितरां व्यथित इति भावः । अनुष्टुब्वृत्तम् ॥६५॥

(थ) विलुप्यमानविवेकः विलुप्तबुद्धिः इतिकर्त्तव्यविमूढ इति यावत् ।

परिणतीति । परिणतौ परिपाके विरसानि दारुणानि तेषां

तदिह तनयवत्यः संलपिष्यन्ति कामं

श्रुतिपुटरचितार्त्तिस्त्वां सवित्रीमकीर्त्तेः ॥६६॥

तदनु तन्मुखादाकृष्टदृष्टिरनुजमिदमवादीत् ।

अविकलमिनवंश्यं दग्धुमाश्रित्य तापं

जनमनसि किरन्त्या हन्त सत्यां भवत्याम् ।

अनुसवनमपापैर्दैवता पूज्यमाना

वहति कथमिदानीमाश्रयाशाभिधानम् ॥६७॥

अविरतरुषिताार्त्तं वत्समालोक्य धेनो-

रपि तनुजशतानां मातुरस्रं बभूव ।

---

पाप्मनां पातकानां सन्निपातात् तव शरीरे प्रवेशादिति यावत् सा प्रतिघातिनी साधुपुत्रविनाशिनी च त्वम् अस्माकं चतुर्णां रामभरतलक्ष्मणशत्रुघ्नानां अम्बा माता नहि भवसि मातेति अस्माभिश्चतुर्भिः नैव सम्बोधनीयासीति भावः । तत् तस्मात् इह अस्मिन् जगति तनयवत्यः पुत्रवत्यः नार्य्य इति शेषः त्वां श्रुतिपुटेषु कर्णकुहरेषु रचिता आर्त्तिः व्यथा यया तथाभूतायाः अकीर्त्तेः दुर्यशसः सवित्रीं जनयित्रीं कामं अत्यर्थं संलपिष्यन्ति कीर्त्तयिष्यन्ति । मालिनीवृत्तम् ॥६६॥

अविकलमिति । हन्तेति खेदे । अविकलं विशुद्धं सम्पूर्णं वा इनवंश्यं सूर्य्यवंशम् आश्रित्य दग्धुं जनानां मनसि तापं किरन्त्यां ददत्यां भवत्यां सत्यां विद्यमानायाम् अपापैः पुण्यकृद्भिः अनुसवनं प्रतियज्ञं पूज्यमाना देवता अग्निरिति भावः इदानीं कथम् आश्रयम् अश्नातीति आश्रयाशः स अभिधानं तत् आश्रयभक्षकनामधेयं वहति ? आश्रयाशो वृहद्भानुरित्यमरः । त्वमेव आश्रयाशाख्यामर्हसीति भावः । मालिनीवृत्तम् ॥६७॥

अविरतेति । तनुजशतानां पुत्रशतानां मातुः जनन्याः अपि

तदिह तनयशोकं सन्तरेदेकपुत्रा
कथय कथमिदानीं कोशलेन्द्रस्य पुत्री ॥६८॥
अपिबदियमनन्ते कालयोगान्नरेन्द्रे
वरयुगरसनाभ्यां प्राणवायुं तदीयम्।
अपनगरमनुष्यावर्त्तनं युक्तरूप
पितृवनवसुमत्या क्वापि वल्मीकवत्याम् ॥६९॥
एषा निकृष्टमतिरात्मगुणोचितेषु
वंशेषु सत्सु बहुधा पिशिताशनानाम्।

---

धेनो. अविरत सतत हृषितम् अतएव आर्त्तं क्लिष्टं वत्सम् आलोक्य दृष्ट्वा अस्रं नेत्रजलं बभूव पततीति भावः। तत् तस्मात् इह संसारे एकपुत्रा कोशलेन्द्रस्य पुत्री कौशल्या इदानीं कथं तनयशोकं सन्तरेत् त्यजेत् कथय। मालिनीवृत्तम् ॥६८॥

अपिबदिति। इय केकयी कालयोगात् समयबलसामर्थ्यादित्यर्थः यवर्थे पञ्चमी, नरेन्द्रे राजनि विषवैद्ये च, नरेन्द्रो विषवैद्ये स्यादिति कोषः। अनन्ते मन्त्ररहिते कर्मापि मन्त्रं मन्त्रिभिः सह अकृत्वा अविमृश्यकारिणि सति वरयुगरसनाभ्यां वरद्वयरूपजिह्वाभ्यां तदीयं नरेन्द्रसम्बन्धिनमित्यर्थः प्राणवायुम् अपिबत् एतेनास्या भुजङ्गीत्वं सूचितम्। अतः वल्मीकवत्यां वल्मीकाख्यकीटकृतमृत्पिण्डशालिन्यां क्वापि पितृवनवसुमत्यां श्मशानभूमौ अपनगरमनुष्यावर्त्तनं नगरमनुष्यावस्थानराहित्यं युक्तरूपम् उचितमेवेत्यर्थः। वल्मीकवति श्मशाने प्रायशः पन्नगानां स्थितेः नगरमनुष्यावासोऽयुक्त एव युक्तस्तु अनागरिकाणाम् अन्त्यावसायिनां तत्तन्मन्त्रौषधविदां वास इति निष्कर्षः। भुजङ्ग्या इव केकय्याः वरशापेन राज्ञो विनाश इति भावः। मालिनीवृत्तम् ॥६९॥

एषेति। निकृष्टमतिः क्षुद्राशया एषा आत्मनः स्वस्य गुणो-

माकन्दशालिनि वने विषवल्लरीव
हा हन्त! केकयकुले कथमाविरासीत् ॥७०॥
जननीति विहीना मे जननीति स धर्मवित्।
निरयान्निरयाद्वीरो निरयादिव सानुजः ॥७१॥

ततः सामात्यः पत्युश्चितारोहणमभिलषन्तीं कौशल्यां भरत प्रपद्यशतैर्निवार्य्य (ट) वशिष्ठाधिष्ठितेन पथा दशरस्थाय यायजूकाभिप्रेतं (ध) प्रेतकृत्यमशेषमकरोत्।

तात पितृवनं याते यातु भ्रातृवनं तथा।
भरतः प्रार्थयामास प्राञ्जलिः प्रकृतीः कृती ॥७२॥

---

चितेषु नीचाशयशालिष्विति भाव बहुधा पिशिताशनानां राक्षसानां वंशेषु सत्सु विद्यमानेषु माकन्दशालिनि आम्रतरुशोभिनि वने विष- वल्लरीव विषलतेव केकयकुले अतिगुणशालिनीति भावः कथम् आवि- रासीत् जाता? हा हन्तेति खेदसूचकमव्ययद्वयम्। वसन्ततिलक वृत्तम् ॥७०॥

जननीति। स सानुजः सलक्ष्मणः वीरः धर्मवित् रामः मे मम जननी माता जनानां नीतिविहीना नीतिभ्रष्टा दुर्णयवतीत्यर्थः, इति हेतोः निर्नास्ति अयः शुभावहविधिर्यस्य तथाभूतात् अशुभादित्यर्थः, अयः शुभावहो विधिरित्यमरः। निरयात् नरकात् एत- द्यमालयसदृशाद्गृहादिति भाव निरयादिव निरगच्छदिव। उत्- प्रेक्षालङ्कारः ॥७१॥

(ट) निवार्य्येति निवार्य्य सान्त्वयित्वेत्यर्थः।

(ध) यायजूकाभिप्रेतं याज्ञिकोचितमिति यावत्।

ताते इति। कृती भरतः प्राञ्जलिः बद्धाञ्जलिः सन् ताते पितरि पितृवनं श्मशानं याते गते इति यावत् तथा तेन प्रकारेण भ्रातृवदिति भावः भ्रातृवनं भ्रातुः रामस्य वनं यत्र रामो वसति

ताभ्यां सुमित्राकौशल्याभ्यामन्तःपुरजनेन च सह भरतो भवनमभजत । अथ यथाविधिविहितौर्ध्वदैहिकं गमितचतुर्दशदिवसं (न) दिवसकरकुलहितकरै(प)र्नगरवृद्धैः सार्द्धममात्याः समुपेत्य मुकुटाभरणाय भरतं प्रार्थयामासुः । ततस्तान् निर्बध्नतः (फ) सोऽयं प्रत्यवादीत् ।

बहुभिरिह किमुक्तैस्त्यक्तसौमित्रिवृत्ति-
र्मुकुटमथ वहेयं युष्मदाज्ञा हि पूज्या ।
मम परमवकाशः पर्णशालानुकूलः
क्वचिदपि विपुलायां नास्ति चेद्दण्डकायाम् ॥७३॥

---

वृद्धनमित्यर्थः याढं मन्तुं प्रकृतीः अमात्यादीन् प्रार्थयामास ।
अनुष्टुब्वृत्तम् ॥७२॥

(न) गमितेति गमिता अतिक्रान्ताः चतुर्दशदिवसाः येन तादृश, अत्रियो द्वादशेऽहनीति शास्त्रात् द्वादशदिनात् परमशौचान्तदिने श्राद्धविधानं तदूपरे चतुर्दशेऽहनि प्रतिष्ठाभोजनादिकं समाप्य स्थितमिति भावः ।

(प) दिवसकरकुलेति दिवसकरकुलस्य सूर्य्यकुलस्य हितकरैः हितैषिभिः ।

(फ) निर्बध्नतः आग्रहवतः ।

बहुभिरिति । इह अस्मिन् विषये बहुभिः उक्तैः वचनैः युष्माकमिति शेषः किम् ? न किमपि प्रयोजनमित्यर्थः, युष्माकम् आज्ञा पूज्या हि पूजनीया एव ममेति शेषः, परं किन्तु चेत् यदि क्वचिदपि विपुलायां महत्यां दण्डकायां दण्डकारण्ये पर्णशालानुकूलः पत्रकुटीरोचितः मम अवकाशः स्थानं न अस्ति न भवति न प्राप्यते इति भावः, अथानन्तरं तदेत्यर्थः त्यक्ता सौमित्रेर्लक्ष्मणस्य वृत्तिः

इत्युक्त्वा रामसेवोत्सुकमना निश्चक्राम ।

अनवधि रचयित्वा सत्पथे पांशुलत्वं
भुवननयनसौख्यप्रातिकूल्यञ्च कृत्वा ।
नरपतिगृहमध्यात् तूर्णमुद्घूर्णमाना
कुटिलगतिरुदस्थान्मन्थरा नाम वात्या ॥७४

ततः,

केशहस्तं स्वहस्तेन गृहीत्वा तद्वधोद्यतम् ।
कौशल्या वारयामास क्रुद्धं रामानुजानुजम् ॥७५॥

ततः सान्तःपुर (ब) एव पुरान्निर्गत्य शिल्पिवर्गसमी-

---

व्यवहारः रामसेवनरूपेति भावः येन तादृशः सन् मुकुटं वक्ष्येयं राजकिरीटं धारयेयम् । दण्डकारण्ये रामपरिचर्य्यां विहाय नैव राजश्रियं स्पृहयामीति भावः । वसन्ततिलकं वृत्तम् ॥७३॥

अनवधीति । कुटिलगतिः वक्रगामिनी मन्थरा नाम वात्या घूर्णवायुविशेषः सत्पथे सदाचारे उत्कृष्टे मार्गे च अनवधि अत्यन्तं पांशुलत्व कलङ्क धूलिसञ्चयञ्च रचयित्वा प्रदायेत्यर्थः भुवनस्य जगतः नयनानां सौख्यस्य प्रातिकूल्य विपर्य्यासं कृत्वा च सर्वान् जनान् असन्तोष्येति भावः उद्घूर्णमाना सती नरपतेः राज्ञः गृहमध्यात् उदस्थात् उत्तस्थौ निर्जगामेत्यर्थः । मालिनीवृत्तम् । रूप-कमलङ्कारः ॥७४॥

केशहस्तमिति । कौशल्या केशहस्तं हस्तेन केशेषु तामाकृष्येत्यर्थः स्वहस्तेन गृहीत्वा तस्याः मन्थरायाः वधे उद्यतं क्रुद्धं कुपितं रामानुजस्य भरतस्य अनुजं शत्रुघ्नं वारयामास स्त्री-हत्या नैव कार्य्येति न्यषेधत् । अनुष्टुब्वृत्तम् ॥७५॥

(ब) सान्तःपुर. अन्तःपुरजनसहितः ।

कृतसरणि(भ)र्भरतः पुरतः प्रस्तनरगजरथतुरगचरणक्षुस-क्षौणीतलसमुत्कीर्णेन (म) रेणुनिकुरम्बेन जम्बालयन्नम्बर-गङ्गां (य) गङ्गाञ्च सुमन्त्रभणितगुणनिवहगुहानुमत्या (र) निस्तीर्य्य दूरादेवाश्रमद्वारि निवेशितबलभारो (ल) भर-द्वाजाभिवन्दनमकरोत् । सोऽयं प्रीतमना मुनिर्भरत तज्ज-ननीजनमपि प्रत्येकमालोक्य सेनामप्याहूय यथोचितमा-तिथ्यमकुरुत ।

तथातिथ्यं चक्रे भरतबलभाजां तनुभृतां
भरद्वाजः सोऽयं भ्रुकुटिभटकल्याखिलसुरः ।
तपस्तप्ता घोरं दिवि सुमनसस्तत्फलभुजो
यथा तेषां तोषं चणमभिलषेयुर्मुनिकृतम् ॥७६॥

---

(भ) शिल्पिवर्गेति शिल्पिनां वर्गैः समीकृता असमाना समाना कृता सरणिः पद्धतिः यस्य तथाभूतः ।

(म) प्रस्तेति प्रस्तानां चलितानां नरगजरथतुरगाणां चरणैः क्षुस्तात् दलितात् क्षौणीतलात् भूतलात् समुत्कीर्णेन समुत्थापितेन । रेणुनिकुरम्बेन रजःसमूहेन ।

(य) जम्बालयन् कर्दमयन् । अम्बरगङ्गा मन्दाकिनीम् ।

(र) सुमन्त्रेति सुमन्त्रेण भणितः उक्तः गुणनिवहः गुणराशि-र्यस्य तादृशः यो गुहः तस्य अनुमत्या अनुज्ञया ।

(ल) निवेशितेति निवेशितः संस्थापितः बलानां सैन्यानां भारः आतिशयः येन तथोक्तः ।

तथेति । भ्रुकुटिभ्रू भङ्गिरेव भटः सेनापुरुषः तस्य कल्याः वश्याः अखिलाः समस्ताः सुराः देवा यस्य तथोक्तः आज्ञावशंवददेवगण इति यावत् सोऽयं भरद्वाजः भरतस्य बलभाजा सेनासमेतानां

इति दिनं दिनशतकल्प (ब) तत्र नीत्वा मुनेर्निदेशे न सर्वेऽपि चित्रकूटवनोद्देशमविशन्। तत्र सन्न्यस्तसैन्य(ग)-स्तत इतो गुहेन सह राममन्विष्यन् हव्यगन्धिना गन्धवहेन(घ) होमधूमेन च दूरादेव विभाव्यमानमचपलमृगगण-(ङ)महश्यरूपाभिर्वनदेवताभिरवकीर्य्यमाणबलिकुसुम(ह)-मशेषितपिशिताशनपिशाचोच्चाटनमन्त्रायमाणलक्ष्मणचाप-घोषश्रवणसमुचितसामीप्यप्रदेशं(च) नूतनपरिकल्पितपर्ण-

---

तनुभृतो मार्गिना तथा तादृशम् आतिथ्यं चक्रे कृतवान् यथा घोरं कठोरं तपः तप्त्वा चरित्वा दिवि स्वर्गे तस्य तपसः फलं भुञ्जते इति तथोक्ताः सुमनसः देवाः तेषां भरतसैनिकानां मुनिना भरद्वाजेन कृत जनितं तोषं प्रीतिं च्यापम् अभिलषेयुः इच्छेयुः। भरतसैनिका भरद्वाजेन कृतातिथ्याः दिव्य सुखमनुभवन्ति स्मेति भावः। शिख-रिणीवृत्तं, रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणीति तल्लक्षणात् ॥७६॥

(ब) दिनशतकल्पं शतसंख्यकदिनसदृशं रामदर्शनोत्सुक्यादिति भावः।

(ग) सन्न्यस्तसैन्यः सन्निवेशितबलः।

(घ) हव्यगन्धिना कृतगन्धवता। गन्धवहेन वायुना।

(ङ) विभाव्यमानं लक्ष्यमाणम्। अचपलमृगगणं शान्तत्वा-दिति भावः।

(ह) अवकीर्य्यमाणेति अवकीर्य्यमाणानि इतस्ततो विक्षिप्य-माणानि बलिकुसुमानि पूजापुष्पाणि यत्र तथोक्तम्।

(च) अशेषितेति अशेषितानां समस्तानां पिशिताशनानां मांसा-शिनां पिशाचानां निकृष्टदेवयोनिविशेषाणाम् उच्चाटने दूरीकरणे

शालावासलब्धवैखानसकुटुम्बिनीनिविड़ित-भूभागमनोकह-
शाखावलम्बमानवल्कलाजिन(क)ममुं तरुशाखारचिते(ख)-
रम्बरचरपतिसेनागणकरकिसलयविमुक्तैरिव(ग) नवपल्लवभ-
ङ्गशवलैः(घ) कुसुमनिकरैरभ्यर्च्यमानजानकीनिवासतरुमूल-
वेदिक(ङ)मालक्ष्यमाणखड्गकार्मुकनिषङ्ग(च)मतिथिजनसप-

यो मन्त्र स इवाचरन् लक्ष्मणस्य यस्यापस्य धनुषः घोषः शब्दः तस्य श्रवणसमुचितः अभ्यस्तश्रवण इत्यर्थः सामीप्यप्रदेश यस्य तथाविधं लक्ष्मणस्य धनुर्निनादेन विद्रावितपिशिताशनमिति यावत् ।

(क) नूतनेति नूतनपरिकल्पितासु नवप्रस्तुतासु पर्णशालासु कुटीरेष्वित्यर्थः वसन्तीति वास्तव्याः वासिन्य इत्यर्थः या वैखानसानां तापसानां कुटुम्बिन्यः पत्न्यः ताभिः निविडितः परिपूरितः भूभागः प्रदेशः यस्य तथोक्तम् । अनोकहेति अनोकहानां वृक्षाणां शाखासु अवलम्बमानानि वल्कलानि वृक्षत्वचः अजिनानि कृष्णमृगचर्माणि च यत्र तादृशम् ।

(ख) तरुशाखेति तरुशाखासु वृक्षपल्लवेष्विति यावत् रचितैः स्थापितैः ।

(ग) अम्बरेति अम्बरचराणां खेचराणां पतिः सूर्यः तस्य सेनागणा इव करकिसलयाः किरणपल्लवाः तैः विमुक्तैरिव पातितैरिव ।

(घ) नवेति नवैः पल्लवानां भङ्गैः छेदैः शवलानि विचित्राणि तैः ।

(ङ) अभ्यर्च्यमानेति अभ्यर्च्यमाना पूज्यमाना जानक्या सीतया निवासतरुमूलवेदिका वासतरुतलपरिष्कृता भूमिः यत्र तादृशम् ।

(च) आलक्ष्येति आलक्ष्यमाणाः सम्यक् दृश्यमानाः खड्गकार्मुकनिषङ्गाः असिचापतूणीरा यत्र तथाविधम् ।

र्य्यापर्य्युत्सुकसौमित्रि-समाहृतकन्दमूलफलकल्पितैकदेश(छ)-मविनाभूतजनकदुहितृचरणनलिनविन्यास(ज)मपहसित-साकेतं रामणीयक (झ) रामाश्रमं भरतःससम्भ्रममभजत (ञ)।

अथावासं शान्तेरकृतसुकृतानामसुलभं
नवाम्भोदश्यामं नलिननयनं वल्कलधरम्।
जटाजूटापीडं भुजगपतिभोगोपमभुजं
ददर्श श्रीमन्तं विपिनभुवि सीतासहचरम्॥७७॥

---

(छ) सपर्य्येति सपर्य्यायां सेवाया पर्य्युत्सुकेन व्यस्तेन सौमित्रिणा लक्ष्मणेन समाहृतैः समानीतैः कन्दमूलफलैः कल्पितः सज्जितः एकदेशो यस्य तथोक्तम्।

(ज) अविनेति अविनाभूतं अरहितः सन्निवेशित इत्यर्थः जनकदुहितुः सीतायाः चरणनलिनयोः पदकमलयोः विन्यासः विन्यासचिह्नमिति यावत् यस्मिन् तथाविधम्।

(झ) अपहसितं साकेतम् अयोध्या येन तथाभूतं साकेतादपि मनोरममिति भावः। रमणीयकम् अतिसुन्दरम्।

(ञ) ससम्भ्रमं सावेगम्। अभजत प्राप।

अथेति। अथानन्तर विपिनभुवि वनप्रदेशे शान्तेः शमगुणस्य आवासम् आधारं, न कृतं सुकृतं पुण्यं यैः तेषाम् अपुण्यवतामित्यर्थः असुलभ दुर्लभमित्यर्थं, नवाम्भोदश्याम नवनीरदश्यामल, नलिननयनं पद्मनेत्रं, वल्कलधरं, जटाजूटम् आपीडः भूषणं यस्य तादृशं जटाशोभितमित्यर्थः, भुजगानां पतिर्वासुकिः तस्य भोगः शरीरं तदुपमौ तत्सदृशौ भुजौ यस्य तादृश महाभुजमित्यर्थः, श्रीमन्तं, सीतासहचरं रामं ददर्श। शिखरिणीवृत्तम्॥७७॥

ततस्तस्योपान्ते जनकयजनाधीनजननां
ववन्दे वैदेहीं रजनिकररेखामिव नवाम्।
अरण्यानां पुण्यात्पदकमलमुद्रापरिचयात्
अयोध्यासध्रीचीमविकलमवस्थां विदधतीम् ॥७८॥

स्वतः सिद्धं यस्मिन्नितरदुरवापं विजयते
सुमित्रापुत्रत्वादपि जगति रामानुजपदम्।
यदीयाच्छिद्रद्वन्द्वप्रतिनिधि भवेदम्बुजयुग
निशीथे निनिद्रं यदि तमपि साक्षादकृत सः ॥७९॥

तत इति। ततः रामदर्शनानन्तरं तस्य रामस्य उपान्ते सान्नि-धाविति यावत् नवां रजनिकररेखामिव चन्द्रकलामिव पुण्यात् पवित्रात् पदकमलयोः या मुद्रा चिह्नं तस्याः परिचयात् सम्बन्धात् अरण्यानां काननानाम् अविकलं सम्यक् अयोध्यासध्रीचीम् अयो-ध्यासदृशीमित्यर्थः अवस्थां विदधतीं जनयन्तीम् अयोध्यायाः तस्याः पदकमलचिह्नेन तादृशी शोभा आसीत् तादृशीं शोभाम् उत्पादय-न्तीमिति भावः जनकस्य यजनं यज्ञभूमिः तदधीनं जननम् उत्पत्ति-र्यस्याः तां वैदेहीं सीतां ववन्दे प्रणनाम, ददर्शेति केचित्। शिख-रिणीवृत्तम् ॥७८॥

स्वत इति। यस्मिन् इतरदुरवापम् अन्यदुर्लभं स्वतः स्वभावात् सुमित्रापुत्रत्वादपि सिद्धं रामानुजपदं रामानुज इति शब्दः जगति विजयते सर्वोत्कर्षेण वर्त्तते, यदि अम्बुजयुगं पद्मयुग्मं निशीथे अर्द्धरात्रे सर्वासु रात्रिष्विति यावत् निनिद्रं विकसितं भवेत्, तदा यदीयस्य यत्सम्बन्धिनः अच्छिद्रस्य नेत्रयुगलस्य प्रतिनिधि तुल्यमि-त्यर्थः स्यादिति शेषः, स भरतः तं लक्ष्मणमपि साक्षादकृत साक्षात्-कृतवान्। लक्ष्मणस्य सीतारामयोर्निशि तयोः रक्षणार्थं जागरूक-त्वात् तदीयनेत्रद्वन्द्वस्य रात्रिष्वपि विकस्वरयोः पद्मयोः साम्यमुक्तं

तदनन्तरं मरुपथे(ट) प्रथिततरघोषोष्मणि(ठ) दैवात् कृतोपलम्भ(ड)मम्भोरुहतटाक(ढ) सुधाधारापूरिताप भूरिताप.(ण) सतृष्णा इव कृष्णसारः सरभसमुपेत्य (त) निपत्य पादयोश्चिरतरं रुदन् दशरथकथामपि कथयित्वा मैथिलीसहिताय सलक्ष्मणाय रामाय शोकमूर्च्छां (थ) प्रायच्छत्। जननीजनोऽपि तत्र निपत्य सुचिरमरोदीत्।

विलोलङ्घनमेतेषां शोकोदन्वति तन्वति।
अगस्त्यायितमेतस्मिन् वशिष्ठेनात्मवेदिना॥८०॥

---

मिति द्रष्टव्यम्। अत्र यद्यर्थबलादाहृतेन सम्बन्धेनाध्यवसानादसम्बन्धे सम्बन्धरूपातिशयोक्तिरलङ्कारः। तदुक्तं दर्पणे। सिद्धत्वेऽध्यवसाय-स्यातिशयोक्तिर्निगद्यते। भेदेऽप्यभेदः सम्बन्धेऽसम्बन्धस्तद्विपर्ययौ। पूर्वापर्यात्ययः कार्य्यहेत्वोः सा पञ्चधा ततः इति। शिखरिणीवृत्तम् ॥७९॥

(ट) मरुपथे निर्जनदेशे।

(ठ) प्रथितेति प्रथिततरः सुप्रसिद्धः घोषोष्मा घोषसन्तापः यस्मिन् तादृशे।

(ड) कृतोपलम्भ प्राप्तमित्यर्थः।

(ढ) अम्भोरुहतटाक पद्मसर.।

(ण) सुधेति सुधाधाराभिः अमृतधाराभिः पूरिता आपो जलानि यत्र तादृशम्। भूरितापः अतिसन्तप्तः।

(त) सरभसं सवेगम्। उपेत्य समीपं प्राप्य।

(थ) शोकमूर्च्छां शोकेन मूर्च्छा मोहः ताम्।

विलोलङ्घनमिति। तन्वति विस्तारं गच्छति एतस्मिन् शोकोदन्वति शोकसागरे सत्यपि एतेषां रामादीनां विलम्ब्य गतस्य उल्लङ्घनं जातमिति शेषः, महान्तमपि शोकं ते क्षुद्रगर्तमिव उत्तरितं

ततः प्रपद्य संज्ञा(द)मनुज्ञया गुरोरमरसरिति (ध) विरचितसमुचितनिवापकृत्यं (न) प्रणिपत्य राममसकृत् (प) प्रवर्त्तयितुं भरतः प्रार्थयत् । विकर्त्तनकुलस्य (फ) यदनुकूलं गुणगणस्य यदनुगुणं यशोरूपस्य यदनुरूपं समाचारस्य (ब) यत् समुचितं प्राचीनभाग्यस्य (भ) यद्योग्यं लोकगर्हणीयाय (म) यदनर्हं सुतस्य (य) वा यत्सदृशम्तादृशमाशयं प्रकाशयन्ती भरतोपज्ञा (र) विज्ञापना । तत्क्षणं क्षणप्रभाभङ्गुरलक्ष्मीसमावेशलक्ष्मणि (ल) क्षोणीपतिशत-

---

भावः यतः आत्मवेदिना तत्त्वज्ञानिना वशिष्ठेन अगस्त्यायितम् अगस्त्यमुनिवत् आचरितम् । अगस्त्यो यथा गण्डूषमात्रेण समुद्रं पपौ तथा वशिष्ठः तत्त्वोपदेशेन तेषां शोकसागरं शोषितवानिति भावः । अनुष्टुब्वृत्तम् ॥८०॥

(द) प्रपद्य प्राप्य । संज्ञां चेतनाम् ।

(ध) गुरोर्वशिष्ठस्य । अमरसरिति गङ्गायाम् ।

(न) विरचितेति विरचितम् अनुष्ठितं समुचितं निवापकृत्यं श्राद्धकार्यं येन तथोक्तम् ।

(प) असकृत् पुनः पुनः ।

(फ) विकर्त्तनकुलस्य सूर्यवंशस्य ।

(ब) समाचारस्य शिष्टाचारस्य ।

(भ) प्राचीनभाग्यस्य पूर्वकृतसुकृतजनितशुभादृष्टस्य ।

(म) लोकगर्हणीयाय लोकनिन्दायै ।

(य) सुतस्य पुत्रस्य ।

(र) भरतोपज्ञा भरतस्य उपज्ञा प्रथमचरितेत्यर्थः । ईदृशी विज्ञापना कैरपि कदापि न कृतेति भावः ।

(ल) क्षणप्रभेति क्षणप्रभाया विद्युतः भङ्गुरा अचिरस्थायिनी

घृतोज्झिते मुकुटे विघटिताग्र(व) रामं प्रणिपत्य सादरं मां पादुकाभ्यां परिष्कुरुत (श) युवामिति रघुवरचरणद्वयं स्वयमेव प्रार्थ्य परिचरितुं (प) स्थण्डिलशायिचरितमिव (स) बभार भरतस्योत्तमाङ्गम् (ह)।

तथाहि,

त्वया मया च कर्त्तव्यं सत्यवाचः पितुर्वचः।
इति प्रत्यादिशद्रामो भारतीमपि भारतीम् ॥८१॥

जाबालिप्रार्थनायामपि व्यर्थायाम् (च)।

---

या लक्ष्मीः शोभा तस्याः समावेशः सम्यगाविर्भावस्य लक्ष्म चिह्नं यस्य तादृशे सौदामिनीप्रभे इति भावः।

(व) क्षौणीपतीनां राज्ञां शतैः पूर्वपुरुषशतैरिति यावत् घृतं पश्चात् उज्झितं त्यक्तं तस्मिन्। मुकुटे राजकिरीटे। विघटिताग्रं व्याहताग्रम्।

(श) परिष्कुरुतं विशोधयतम्।

(प) परिचरितुं सेवितुम्।

(स) स्थण्डिलशायिचरितमिव भूतलशयनरूप व्रतमिव।

(ह) उत्तमाङ्गं शिरः।

त्वयेति। त्वया मया च सत्यवाचः सत्यवादिनः पितुः वचः कर्त्तव्यं पालनीयम्। रामः इति उक्त्वेति शेषः भारती भरतसम्बन्धिनीं भारतीं वाणीं प्रत्यादिशत् निराचकार भरतवाक्यं प्रत्याख्यातवान्, प्रत्यादेशो निराकृतिरित्यमरः। अनुष्टुब्वृत्तम् ॥८१॥

(च) जाबालीति जाबालिर्नाम मुनिः तस्य प्रार्थनाया त्वया वनं गन्तव्यमिति पितुरादेशः, किन्तावद् वनत्वम्? वृक्षगुच्छादिमत्-प्रदेशत्वं तदिति तदुत्तरम्। तत्त्वया अयोध्यासन्निधौ कस्मिंश्चिदु-

भरतस्तदनु प्रार्थ्य लेभे लाभविदां वरः ।
काकुत्स्थपादुकाकारं महार्घं मुकुटद्वयम् ॥८२॥
स एष सानुजः प्रायादयोध्यां भ्रातृशासनात् ।
अटवीं पितृसन्देशाद्ययौ रामः सलक्ष्मणः ॥८३॥
विलङ्घ्य विविधान् देशान् भरतो धृतवल्कलः ।
विषयं समुपाश्रित्य विषये विमुखोऽभवत् ॥८४॥

ततश्चार्यं यावदार्य्यस्य प्रत्यागमनं तावदयोध्यां नाध्यास्ते (क)। तस्मिन्नवधि(ख)मतिक्रम्य चिरायति (ग)

---

स्थाने वासे कृतेऽपि पितुराज्ञा पालिता भवति तत् कथं महारण्यगमनमतो भरतानुरोधेन तथा भवत्वेति कुतर्कवादेनानुरोधेऽपीति भावः व्यर्थायां विफलायां सत्याम् ।

भरत इति । तदनु तदनन्तरं लाभविदां वरः लभ्यवस्तुज्ञानकुशल इत्यर्थः भरतः प्रार्थ्य याचित्वा काकुत्स्थस्य रामस्य पादुकाकारं पादुकारूपं महार्घं महामूल्यं मुकुटद्वयं लेभे प्राप ॥८२॥

स इति । स एषः सानुजः सशत्रुघ्नः भरतः भ्रातुः रामस्य शासनात् अयोध्यां प्रायात् जगाम । रामः सलक्ष्मणः सन् पितृसन्देशात् अटवीम् अरण्यं ययौ ॥८३॥

विलङ्घ्येति । भरतः धृतवल्कलः वल्कलपरिधायी सन् विविधान् देशान् विलङ्घ्य अतिक्रम्य विषयं जनपदं राज्यमित्यर्थः समुपाश्रित्य सम्प्राप्य विषये स्रक्चन्दनवनितादौ भोग्यवस्तुनि विमुखः वीतस्पृहः अभवत् ॥८४॥

(क) अध्यास्ते अधितिष्ठति ।

(ख) तस्मिन् रामे । अवधिं चतुर्दशवत्सरकालरूपं समयम् ।

(ग) चिरायति विलम्बमाने ।

सत्य एवाश्रयाश(घ)माश्रित्य प्राणानपि निन्दिष्या(ङ)मीति नन्दिग्रामसद्मभाश्रय(च)मधिश्रयत्। दाशरथि(छ)रपि शमधनजनकथितनिशिचरगणरचितकदनपरिहरणाय गहनजठरमवजगाहे (ज)।

विस्तीर्णाक्षैर्विपिनहरिणैर्वीतभीतिप्ररोहै-
र्दर्भग्रासेऽप्यकृततरुचिभिः सस्पृहं वीक्ष्यमाणः ।
रामः प्राप्य प्रकृतिमहितं स्थानमत्रेर्महर्षे-
र्जग्राहास्य प्रमुदितधियः प्रेमपथ्यां सपर्याम् ॥८५॥

---

(घ) आश्रयाशम् अग्निम् ।

(ङ) निन्दिष्यामि त्यक्ष्यामीत्यर्थः ।

(च) आश्रय स्थानम् ।

(छ) दाशरथिः रामः ।

(ज) शमधनेति शम एव धनं येषां तैः जनैः मुनिभिरित्यर्थः कथितं उक्तं निशिचरगणैः राक्षसगणैः रचितं कृतं यत् कदनं पीडनं लोकानामिति शेषः तस्य परिहरणाय निवारणाय तेषां नाशेनेति भावः । गहनजठरं निविडकाननान्तरालम् । अवजगाहे प्रविवेश ।

विस्तीर्णेति । रामः विस्तीर्णाक्षैः विशालनेत्रैः वीतभीतिप्ररोहैः विगतभयसञ्चारैः ऋषिप्रभावादिति भावः, विपिनहरिणैः वनमृगैः दर्भग्रासेऽपि कुशाङ्कुराखादेऽपि अकृतरुचिभिः त्यक्तस्पृहैः सद्भिः सस्पृहं सानुरागं वीक्ष्यमाणः दृश्यमानः सन् प्रकृतिमहितं स्वतः पूजितं प्रमुदितधियः हृष्टचित्तस्य रामदर्शनेनेति भावः महर्षेः अत्रेः स्थानम् आश्रमं प्राप्य अस्य महर्षेः प्रेमपथ्यां आदरामित्यर्थं सपर्यां पूजाम् आतिथ्यमित्यर्थः जग्राह । मन्दाक्रान्तावृत्तं, मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्ममिति तल्लक्षणात् ॥८५॥

सीतामप्यनसूयाभिधाना अस्य पत्नी स्वभूषणैरतोषयत् ।

खण्डनाय वसुधावधूमनः-
पुण्डरीकतुहिनत्विषां द्विषाम् ।
दण्डकावनमवाप राघव-
श्चण्डभानुरिव मेघमण्डलम् ॥८६॥

इति विदर्भराजविरचिते चम्पूरामायणे
श्रीमदयोध्याकाण्डः समाप्तः ।

---

खण्डनायेति । राघवः रामः चण्डभानुः सूर्यः मेघमण्डल-मिव आकाशमण्डलमिव वसुधा पृथिवी वधूरिव तस्या मनःपुण्डरी-कमिव पद्ममिव तस्य तुहिनत्विष इव चन्द्रा इव तेषां द्विषां शत्रूणां पृथिवीपीडनपराणामिति भावः खण्डनाय विध्वंसाय दण्डकावनं दण्डकारण्यम् अवाप प्राप । रथोद्धतावृत्तम् ॥८६॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्यविरचिता
चम्पूरामायणायोध्याकाण्डव्याख्या
समाप्ता ।

---

# अथारण्यकाण्डः ।



प्रविश्य विपिनं महत्तदनु मैथिलीवल्लभो
महाबलसमन्वितश्चलितनीलशैलच्छविः ।
निशाचरदवानलप्रशमनं विधातुं शरै-
श्चचार शशरासनः सुरपथे तडित्वानिव ॥१॥

ततः, कण्डूलापनयनपटुशुण्डालकपोलकषणविषमितानमितविकट-विटपसालखण्डनिर्य्यात-निर्य्यासगन्धा(क)-

---

प्रविश्येति । तदनु तदनन्तरं महाबलसमन्वितः अतिबलः चलितस्य नीलशैलस्येव छविः कान्तिर्यस्य तथाभूतः सशरासनः धनुष्मान् मैथिलीवल्लभः रामः सुरपथे आकाशे तडित्वान् सविद्युत् मेघ इव शरैः निशाचरा एव दवानलाः दावाग्नयः तेषां प्रशमनं विधातुं कर्त्तुं महत् विपिनं वनं प्रविश्य चचार बभ्राम । पृथ्वीवृत्तं, जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुरिति तल्लक्षणात् । उपमालङ्कारः ॥१॥

(क) कण्डूलेति कण्डूलाः गात्रकण्डूतिमन्तः अतएव अपनयने कण्डूलानामिति शेषः पटवः तत्पराः शुण्डालाः प्रशस्तशुण्डा इत्यर्थः तेषां हस्तिनामित्यर्थः कपोलयोः गण्डयोः कण्डूतिमतोरिति भावः कषणेन घर्षणेन विषमितं यथा तथा आनमिता विकटाः महान्तः विटपाः शाखा यस्य यथाभूतात् सालखण्डात् सर्जसमूहात् निर्यातः निःसृतः यो निर्यासः रसावशेषः तस्य गन्धान् ।

मप्यात्तगन्धान् (ख) विदधानै(ग)राहुतिगन्धैर्धूमस्तोमै(घ)-रनुमीयमानाविनाभूत-जलाशया(ङ)नाश्रम भागानभितश्च-रतो(च)रातिथ्यशमितमार्गश्रमयो(छ)र्दाशरथ्योरध्वानं त-रसा (ज) रुरोध विराधाभिधानो यातुधानः (झ)। स एष रोषभीषणस्त्रिशिखशिखरावतंसितविविधमृगशवशतः शत-ह्रदातनयः (ञ) सीतामपजहार व्याजहार च दाशरथी। कौ युवां युवानौ कुतस्त्यौ वामाचारवत् प्रतिभाति मे वा-माचारः (ट)। चीरं (ठ) वपुषि जटाशिरसि करे च चण्ड-

---

(ख) आत्तगन्धान् हृतगर्वान्।

(ग) विदधानैः कुर्वद्भिः ततोऽप्युत्कृष्टैरिति भावः।

(घ) आहुतिगन्धैः हव्यगन्धवद्भिः धूमस्तोमैः धूमनिचयैः।

(ङ) अनुमीयमानेति अनुमीयमाना अविनाभूताः अवश्यं स्थिता इति भावः जलाशया येषु तान्।

(च) अभितः सर्वत। चरतोः भ्रमतोः।

(छ) आतिथ्येति आतिथ्येन शमितः निवारितः मार्गश्रमः ययोः तत्तन्मुनिकृतातिथियसमुचितसत्कारयोरित्यर्थः।

(ज) अध्वानं पन्थानम्। तरसा बलेन।

(झ) यातुधानः राक्षसः।

(ञ) रोषभीषणः क्रोधेन भयङ्करः। त्रिशिखेति त्रिशिखस्य त्रिशूलस्य शिखरे अग्रे अवतंसितम् अवलम्बितं विविधानां मृग-शवानां निहतमृगशरीराणां शत येन तथाभूतः। शतह्रदातनयः शतह्रदा नाम नारी तस्यास्तनयः पुत्रः।

(ट) कुतस्त्यौ कुतः सम्भूतौ कुत आगतौ वा। वां युवयोः आचारः व्यवहारः मे मम वामाचारवत् अत्यन्तप्रतिकूलाचार इव प्रतिभाति राजते प्रतीयते इति भावः।

(ठ) चीरं वल्कलम्।

कोदण्ड:(ड) कायमाकल्प:(ढ) क्वचन कल्पलताकल्पेयमनल्पा-भरणा (ण) तरुणीति। दाशरथिरपि कथितनिजान्वयो विराधाङ्के वेपमानां (त) विदेहराजदुहितरं विलोक्य सकोपः सौमित्रिणा साकं रक्षो (थ) वक्षसि शिलीमुखा (द)-न्निजघान। ततः,

विशिखे विशिखे तत्र विधातृवरवर्मणि।
सीतां निक्षिप्य चिक्षेप शूलं रक्षो रघूद्वहे॥२॥

तदनु शूलमखण्डयदञ्जसा
शितशिखं रघुनायकसायकः।
नियतमेव विराधविरोधिना
हृदयशूलमपि त्रिदिवौकसाम्॥३॥

---

(ड) चण्डकोदण्डः भीषणकार्मुकम्।

(ढ) आकल्पः परिच्छदः।

(ण) कल्पलताकल्पा कल्पलतासदृशी। अनल्पाभरणा नाना-लङ्कारवती।

(त) कथितनिजान्वयः कथितात्मकुलः। विराधाङ्के विराधस्य उत्सङ्गे। वेपमाना कम्पमानाम्।

(थ) रक्षो राक्षसम्।

(द) शिलीमुखान् शरान्।

विशिखे इति। विधातुर्ब्रह्मणः वर एव वर्म कवचं यस्य तादृशे दुर्भेद्यशरीरे इति भावः. तत्र विराधे विशिखे शरे विशिखे विध्वस्त-फलके सति रक्षः विराधः, नैकृतो यातुरक्षसी इत्यमरः। सीतां निक्षिप्य परित्यज्य रघूद्वहे रामे शूलं चिक्षेप॥२॥

तदन्विति। तदनु शूलक्षेपानन्तरं रघुनायकस्य रामस्य सायकः शरः अञ्जसा झटिति शितशिखं तीक्ष्णाग्रं तत् शूलं विराधस्य

विराधोऽपि क्रुधा सरभस(ध)मभिपत्य स्कन्धे निधाय रामलक्ष्मणौ गतिनिरोधापराधपरिहरणायेव मिहिरहिमकरौ प्रस्थे वहन् विन्ध्य इव प्रतस्थे (न)। रामस्तत्र विराधवधोद्युक्तं सौमित्रिमेवमभिदधे ।

या तु नः पदवी सेयं यातुनस्यास्य लक्ष्मण ।
यातु कामं तयैवेदं यातु काम न हन्यताम् ॥४॥

विरोधिनां विपक्षाणां त्रिविष्टपौकसां देवानां हृदयमूलमपि नियतमेव समकमेव युगपदेवेत्यर्थः खण्डखण्डयत् चिच्छेद। देवपत्नीस्तनमूलच्छेदः देवानां मनस्तापनाशी अभवदिति भावः। द्रुतविलम्बितं वृत्तं, द्रुतविलम्बितमाह नभौ भराविति तल्लक्षणात् ॥३॥

(ध) सरभसं सवेगम् ।

(न) गतीति गतेर्निरोधः अवरोधः अस्य स्कन्धेनात्येति भावः स एव अपराधः दोषः तस्य परिहरणाय परिमार्जनाय। मिहिरहिमकरौ सूर्य्याचन्द्रमसौ। प्रस्थे सानुनि वहन् धारयन्। पुरा सुमेरुमिव मां प्रदक्षिणीकुरुतमिति विन्ध्याद्रिणा सुमेरुस्पर्द्धिनाभिहितौ सूर्य्याचन्द्रमसौ कथमावां विधातृविहिताचारमतिक्रमेव, तत्ते वचनं न कुर्व इति कथयामासतुः। ततश्च जातकोपेन विन्ध्याद्रिणा तथा समुन्नतं यथा सूर्य्याचन्द्रमसोर्गतिनिरोधः सञ्जातः। ततश्च देवानां भीतानामनुरोधेन अगस्त्यः विन्ध्यगुरुः समुपेत्य विन्ध्यं प्रकृतिस्थमकरोदिति पुराणवार्त्ता ।

यात्विति। हे लक्ष्मण ! नः अस्माकं या तु पदवी पन्थाः वर्त्तते यावत् सा इयं पदवी अस्य यातुनः राक्षसस्य च। इदं यातु रक्षः तयैव पदव्या कामं स्वच्छन्दं यातु गच्छतु, न हन्यतां न बध्यताम् ॥४॥

अयि कवलय मामनू विमुञ्च-
त्यतिकरुणं रुदतीमवेक्ष्य सीताम् ।
अरमरचयतामुभावसिभ्यां
पिशितभुजं भुजभारहीनमेनम् ॥५॥

ततस्तीक्ष्णतरक्षुरप्रप्रहरणगवाक्षितवक्षसा (प) रक्षसा न परित्यक्तेषु प्राणेषु पराक्रमाविषयपराक्रमौ प्राक्रमेतामेतौ(फ) तदङ्गगलितरुधिरधारासेकेन खननक्षमायां काननक्षमायां राक्षसशवोचितं विकटमवट(ब)मुत्पादयितुम् ।

---

अयीति । अयि मां कवलय भक्षय अमू रामलक्ष्मणावित्यर्थः विमुञ्च त्यज इति अतिकरुणम् अतिदीन रुदती विलपन्तो सीताम् अवेक्ष्य दृष्ट्वा उभौ रामलक्ष्मणौ असिभ्या खड्गाभ्याम् एनं पिशितभुजं राक्षसम् अरं शीघ्र, अर द्रुतमित्यमरः । भुजयोर्भारेण हीनम् अरचयताम् अकुरुताम् । पुष्पिताग्रा वृत्तम् ॥५॥

(प) तीक्ष्णतरेति तीक्ष्णतरेण अतिनिशितेन क्षुरप्रेण अस्त्रविशेषेण यत् प्रहरणं प्रहारः तेन गवाक्षितं वातायनायितं विदारितमिति भावः वक्षो यस्य तेन ।

(फ) पराक्रमेति पराक्रमस्य परैः शत्रुभिराक्रमस्य अभिभवस्य अविषयौ अगोचरौ पराक्रमौ वीर्य्ये ययो तथाभूतौ दुरतिक्रमसामर्थ्यावित्यर्थः प्राक्रमेताम् आरब्धवन्तौ । एतौ रामलक्ष्मणौ ।

(ब) तदङ्गेति तस्य अङ्गेभ्य गलितानां निःसृतानां रुधिरधाराणां सेकेन पातेनेति यावत् खननक्षमायां खननयोग्यायाम् आर्द्रत्वादिति भावः । काननक्षमायां वनभूमौ राक्षसशवोचितं राक्षसस्य मृतदेहसदृशं विकटं वृहत् । अवट गर्त्तम् ।

तत्क्षणमेव क्षणदाचरो भूत्ऽपि सञ्जातप्रत्यभिज्ञः (म) सन्द्

रामं व्यजिज्ञपत् आत्मनो गन्धर्वकुलसम्भवं रम्भापरिरम्भं (य)

तच्छ्रवणाकुपितवैश्रवणदत्तरक्षोरूपिणीं शापव्यापदं तस्या-

स्तथाविधमवसानञ्च (र) ।

रक्षोवधः प्रकृत इत्ययमेव शंसेत्

स्वर्गाय गायकपदं गमितो विराधः ।

नागालयाय वपुरस्य वदेदितीव

श्वभ्रे तदक्षिपदिषुप्रहृतः स रामः ॥ ६ ॥

---

(भ) क्षणदाचरः निशाचरः ।

(म) सञ्जातप्रत्यभिज्ञः समुद्भूतपूर्वसंस्कारः इत्यर्थः ।

(य) रम्भा नाम काचित् सुरसुन्दरी तस्याः परिरम्भः आलि-ङ्गनं बलादिति भावः ।

(र) तच्छ्रवणेति तस्य रम्भापरिरम्भस्य श्रवणेन कुपितः यः वैश्रवणः कुवेरः रम्भाश्वशुर इति भावः तेन दत्ता रक्षोरूपिणी राक्षसाकृतिं शापव्यापदम् अभिशापात्मकामापदम् । तस्याः आपदः तथाविधं रामलक्ष्मणकृतनिग्रह इति भावः अवसानं विमुक्त्युपाय-मिति भावः । यदा रामलक्ष्मणौ ते बाहुच्छेदरूपनिग्रहं करि-ष्यतः तदा त्वं स्वां प्रकृतिमाप्स्यसीति वैश्रवणप्रसादवार्त्तामिति भावः ।

रक्ष इति । अयमेव विराधः रक्षोवधः राक्षसवधः प्रकृतः प्रारब्धः रामेणेति शेषः इति स्वर्गाय स्वर्गवासिजनाय शंसेत् कथयेत् इतीवेत्यध्याहार्य्यं गायकपदं गन्धर्वपदवीं गमितः नीतः । तथा अस्य विराधस्य वपुः शरीरं नागालयाय पातालवासिजनाय वदेत् रक्षोवधः प्रकृत इतीति शेषः इतीव इत्यस्मात् कारणादिव स रामः

तदनु नाकलोकभजनाय पुरुहूतेन (ल) समाहूतस्य भगवतः शरभङ्गस्याश्रमपदं रघुपतिरभजत। तत्र,

दशशतनयनेऽपि वीक्ष्यमाणे
दशरथपुत्रसिषेविषैव जाता।
मनसिजशरभङ्गकारिवृत्ते-
र्मनसि मुनेः शरभङ्गनामभाजः ॥७॥

स मुनिराश्रमस्थं काकुत्स्थमातिथ्येन समाराध्य तत्-सान्निध्याच्छुद्धां (व) मन्त्रपूतामाहुतिमिव आत्मनस्तनुं तनूनपाति (श) पातयित्वा शाश्वतं (ष) पदं समाश्रितवान्। ततः सुतीक्ष्णस्य तपसः (स) सुतीक्ष्णस्य तस्य

इषुणा बाणेन प्रहृत भिन्नं तत् वपु श्वभ्रे गर्त्ते अक्षिपत् निखातवानित्यर्थः। वसन्ततिलकं वृत्तम् ॥६॥

(ल) नाकलोकभजनाय स्वर्गप्राप्तये। पुरुहूतेन इन्द्रेण।

दशेति। दशशतनयने सहस्राक्षे इन्द्रे इत्यर्थः वीक्ष्यमाणे साक्षात् क्रियमाणेऽपि मनसिजस्य कामस्य शराणां भङ्गकारिणी वृत्तिर्व्यवहारः यस्य तथाभूतस्य जितेन्द्रियस्येति भावः, शरभङ्ग इति नाम भजते इति तथोक्तस्य मुनेः मनसि दशरथपुत्रस्य रामस्य सिषेविषा सेवनेच्छा जातैव। तपःसिद्धोऽपि शरभङ्गमुनिः राम परिचरितु यत्नमकरोदिति भावः। पुष्पिताग्रावृत्तम् ॥७॥

(व) सान्निध्यात् सन्निधानात्। शुद्धां पूताम्।

(श) तनूनपाति तनूं शरीरं न पातयति जाठररूपेण धारयतीति तनूनपात् अग्निः तस्मिन्।

(ष) शाश्वतं चिरन्तरम् अक्षयं स्वर्गमिति यावत्।

(स) सुतीक्ष्णस्य अतिकठोरस्य तपसः इति सम्बन्धविवक्षया करणे षष्ठी। सुतीक्ष्णेन तपसेत्यर्थः।

निदेशाद्दिशस्तस्मादुच्चलितः (छ) सलिलनिधिपानसम्भावितजीवनाभावशङ्कया शरणाश्रयणाय लम्बमाननीलाम्बुदकुटुम्बसन्देहावहेन नानानोकहनिवहेन पिहिताभोग(ज)मगस्त्याश्रममाससाद। अकथयच्च मैथिलीम्।

तस्येदमाश्रमपदं सरसीरुहाक्षि।
संख्याविहीनमहिमैकनिकेतनस्य।
भर्त्ता समस्तसरितां कुपितस्य यस्य
हस्तारविन्दमकरन्ददशामवाप ॥८॥
इह समदगजेन्द्रन्यस्तहस्तातिभारात्
पथि विनमितशाखः प्लक्षकोटश्च एषः।

---

(छ) उच्चलितः प्रस्थितः।

(ज) सलिलेति सलिलनिधेः समुद्रस्य पानेन सम्भावितस्य अनुमितस्य जीवनाभावस्य प्राणापायस्य शङ्कया विना जलपानं कथं प्राणधारणमिति भावः। शरणाश्रयणाय परित्राणलाभाय लम्बमानाः ये नीलाम्बुदाना नीलमेघाना कुटुम्बाः परिवाराः तेषां सन्देहं भ्रममिति यावत् आवहति जनयतीति तथोक्तेन। नानानोकहनिवहेन बहुविधवृक्षसङ्घातेन। पिहिताभोगम् आवृतपरिसरम्।

तस्येति। हे सरसीरुहाक्षि! कमलनयने! संख्याविहीनस्य असीम इत्यर्थः महिम्नः प्रभावस्य एकम् अद्वितीयं निकेतनं निलयः तथाभूतस्य तस्य अगस्त्यस्य इदम् आश्रमपदं तपोवननिलयः। समस्तसरितां भर्त्ता सर्वनदीपतिरित्यर्थः कुपितस्य यस्य अगस्त्यस्य हस्त एव अरविन्दं पद्मं तस्य दशाम् अवस्थाम् अवाप प्राप। वसन्ततिलकं वृत्तम् ॥८॥

इहेति। इह आश्रमे पथि समदाः मदस्राविणः ये गजेन्द्राः

अभिनयति निकामं सङ्गतोच्छ्रायहानि-
र्मुनिवरकरपाताद्भुग्नविन्ध्याद्रिमुद्राम् ॥९॥
अस्मिन् महापथधिया वदनं विगाह्य
निर्गन्तुमक्षमतया जठरे लुठद्भिः।
वन्यैर्गजैरजगराः पिशिताशनेभ्यो
वातापिदानवदशामुपदेशयन्ति ॥१०॥

---

तैः न्यस्तानाम् उत्क्षिप्तानाम् आकर्षणार्थमिति भावः हस्तानां शुण्डानाम् अतिभारात् विनमिता शाखा यस्य तादृशः अतएव सङ्गता सम्भूतेति यावत् उच्छ्रायस्य औन्नत्यस्य हानिः नाशः यस्य तथोक्तः एषः सल्लकीद्रुमः मुनिवरस्य अगस्त्यस्य करपातवत् करार्पणात् भुग्नस्य विनतस्य विन्ध्याद्रेः मुद्राम् आकृतिं निकामं सम्यक् यथा तथा अभिनयति अनुकरोतीत्यर्थः। उपमालङ्कारः। मालिनीवृत्तम् ॥९॥

अस्मिन्निति। अस्मिन् आश्रमे अजगराः महासर्पविशेषाः महापथधिया महान् पन्था अयमिति बुद्ध्या वदनम् अजगराणामिति भावः विगाह्य प्रविश्य निर्गन्तुं बहिर्गन्तुम् अक्षमतया जठरे अजगराणामिति भावः लुठद्भिः चलद्भिः वन्यैः गजैः करणभूतैः पिशिताशनेभ्यः राक्षसेभ्यः वातापिदानवस्य दशाम् अवस्थाम् उपदेशयन्ति ज्ञापयन्ति। वातापिर्नाम दानव एवम् अगस्त्यमुनेर्जठरे लुठितः सन् पञ्चत्वं प्रापेति कथयन्तीति भावः। पुरा इल्वलवातापी नाम दानवौ वनं विचरन्तौ मुनीन् ब्राह्मणान् भोजनाय निमन्त्र्य भक्षयामासतुः(?)। ततः ज्येष्ठः इल्वलः कनिष्ठं वातापिं मेषरूपिणं कृत्वा निहत्य तन्मांसेन अभ्यागतं मुनिं ब्राह्मणं वा भोजयामास। अथ भुक्तवति तस्मिन् जाताकमतया निद्रामाविष्टे दानवेनानेन वातापे! निष्क्रमेत्युक्त एव स वातापिः भक्षितुस्तस्य उदरं विदार्य निरगच्छत्। ततश्च तावुभौ तस्य मुनेर्ब्राह्मणस्य

तत्र,

चुलकगतसमुद्रास्वादने कुम्भयोने-
रितरकरनिरस्ता मक्षिकोत्सारतीत्या ।
गगनगतिविहीना ये घनाः पल्वलान्तं
विपिनमहिषवेषैः केवलं ते वसन्ति ॥११॥

एवं विपिनविलोकनविस्मितमतिस्तदुटजनिकट(क)-मासाद्य रामः शिष्यैः प्रवेशितः सकललोकवन्द्यमानचरणारविन्दमरविन्दभवमिव (ख) वृन्दारकवृन्दैः (ग) परिवृतं

---

वा मासेन हतौ चक्रतुः। कदाचित् अगस्त्यं मुनिं निमन्त्र्य तथैव वातापिमांसं भोजयामास। तस्मिंश्च महात्मनो निवृत्ते स इल्वलः तथैव भो वातापे! निष्क्रमस्वेत्युक्तवान्। परं तस्य मुनेः घोरेण जठरानलेन स वातापिर्भस्मसात् कृतः न पुनर्निरगच्छत्। ततः क्रुद्धमभिधावन्तं तमिल्वलं स मुनिर्भस्मसादकरोदिति पुराणवार्ता। वसन्ततिलकं वृत्तम् ॥१०॥

चुलकेति। चुलकगतस्य गण्डूषस्थितस्य समुद्रस्य आस्वादने पाने तत्काले इत्यर्थः कालाधिकरणे सप्तमी। ये घनाः मेघाः कुम्भयोनेः अगस्त्यस्य मक्षिकायाम् अनुमतानामिति भावः उत्सारस्य ताड़नस्य रीत्या प्रकारेण इतरेण वामेनेति भावः करेण निरस्ताः निक्षिप्ताः अतएव गगने या गतिः तया विहीना विरहिताः हस्तप्रहारजपीड़या असामर्थ्यादिति भावः। ते केवलं पल्वलान्ते क्षुद्रजलाशयमध्ये विपिनमहिषवेषैः वनमहिषाकारैः वसन्ति सञ्चरन्ति। मालिनीवृत्तम् ॥११॥

(क) तदुटजनिकटं तस्य मुनेः कुटीरसमीपम्।

(ख) अरविन्दभवमिव पद्मयोनिमिव।

(ग) वृन्दारकवृन्दैः देवगणैः।

कोपहुङ्कारनिरहङ्काराय (घ) नहुषाय भुजङ्गभावदूषिता-य(ङ) दत्तभुजङ्गमाय(च) मतिनिरोधकल्पवैपुल्ययो(छ)र्दुर-वगाहमहावनयो(ज)र्विन्ध्यशैलसिन्धुराजयोर्गाधतागाधता-तस्करकरोदर(झ)मुदरजातजातवेदोजितवातापिदानवाव-लेपं (ञ) लोपामुद्रावल्लभं(ट) सकलसरिद्वल्लभनिःशेषीकर-णवाडव (ठ) ब्राह्मणश्रेष्ठमपास्तसमस्ताश(ड)मभ्युगतद्दृचि-

---

(घ) कोपेति कोपेन यः हुङ्कारः तेन निरहङ्काराय चूर्णित-दर्पाय ।

(ङ) भुजङ्गभावेन कामुकवृत्त्या दूषिताय सञ्जातपरावाय ।

(च) दत्तभुजङ्गमाय दत्ता भुजङ्गस्य सर्पस्य माया येन तादृश, भ्रूभ-ङ्गमात्रेण पदाक्रमणेन, प्राभ्रंशयद्यो नहुष प्रमत्तमिति रघुवंशे कालिदासः ।

(छ) मतीति मति अत्यन्तः निरोधकल्पः गगनमार्गसंरोधन-व्यापारः वैपुल्य माहात्म्यञ्च ययो तयोक्तयो. ।

(ज) दुरवगाहेति दुरवगाह दुष्प्रवेश महत् वन काननं जलञ्च ययोः तथाभूतयोः ।

(झ) गाधता क्षिप्रा सूर्यगतिरोधकावलेति यावत् अगाधता अतलस्पर्शता तयोः तस्करौ चोरौ करोदरे हस्तजठरे यस्य तादृश हस्तस्पर्शेन नमितविन्ध्याचलम् उदरेण पीतसमुद्रमिति भाव ।

(ञ) उदरेति उदरजातेन जाठरेण जातवेदसा अग्निना जितः वातापिदानवस्य अवलेप· गर्वः येन तथोक्तम् ।

(ट) लोपामुद्रावल्लभ लोपामुद्रापतिम् ।

(ठ) सकलेति सकलस्य समग्रस्य सरिद्वल्लभस्य निःशेषीकरणे शोषणे वाडव· वडवानलः तम् ।

(ड) अपास्तेति अपास्ता त्यक्ता समस्ता आशा येन तथोक्तम् ।

णाशं (ढ) वृषैकतानजन्मान(ण)मपि कुम्भजन्मानं भगवन्त-मगस्त्यमपश्यन् ।

प्रभामिवार्कीं तमसां निहन्त्रीं
ब्राह्मीं दधानं नियमेन लक्ष्मीम् ।
तपोनिधिं शौर्य्यनिधिः प्रपन्नः
स्वनाम सङ्कीर्त्य ननाम रामः ॥१२॥

ततः परमहर्षेण महर्षिणा प्रणीताभि(त)राशीर्भिः सह सुरशासनं शरासनं (थ) सरसिजासनास्त्रं सौत्रा-मण (द) तूणीरयुग्मं रुक्ममयकोशं (ध) खड्गञ्च प्रगृह्य तदाज्ञया गोदावरीतटप्रकटितां (न) पञ्चवटीमसेवत । तत्र विस्तृतपक्षद्वन्द्वमप्यप्रतिद्वन्द्वशौर्य्यं शौर्य्यावस्थाप्रत्ययाय कृता-

---

(ढ) उपगता आश्रिता दक्षिणाशा दक्षिणा दिक् येन तथोक्तम् ।

(ण) वृषेति वृषे धर्मे एकतानम् एकाग्रं जन्म यस्य तथाभूतं धर्मैकनिष्ठमित्यर्थः ।

प्रभामिति । शौर्य्यनिधिः वीर्य्यैकाश्रयः रामः तमसां तिमि-राणाम् अज्ञानानाञ्च निहन्त्रीं नाशयित्रीम् आर्कीं सौरीं प्रभामिव ब्राह्मीं लक्ष्मीं ब्राह्मं तेज इत्यर्थः. नियमेन सातत्येन दधानं तपो-निधिम् अगस्त्यं प्रपन्नः प्राप्तः सन् स्वनाम निजनामधेयं सङ्कीर्त्य ननाम ववन्दे । उपजातिवृत्तम् । उपमालङ्कारः ॥१२॥

(त) प्रणीताभिः कृताभिः ।

(थ) सुरशासनं सुरनामकदैत्यविनाशनं शरासनं धनुः ।

(द) सरसिजासनास्त्रं ब्रह्मास्त्रम् । सौत्रामणम् ऐन्द्रम् ।

(ध) रुक्ममयकोशं स्वर्णमयखड्गपिधानमित्यर्थः ।

(न) गोदावरीतटे प्रकटितां प्रकाशं गतां ताम् ।

परोक्ष(प)मिव तार्क्ष्यं महामहीध्रकल्पं गृध्रराज(फ)मद्राक्षीत्।

पानेन हीनजलमब्धिमपास्य नून
मैनाक एष मुनिमाश्रयतीति जाताम्।
शङ्कामिमा रघुपतेः कथितात्मवंश-
स्त्वत्तातमित्रमहमित्यहरज्जटायुः ॥१२॥

रामस्तु दशरथमिव तं पश्यन् काश्यपकुलसम्भूतं सम्पातेरनुजम् (ब) अनुजरचितपर्णशालः (भ) पञ्चवट्यां

---

(प) अप्रतिद्वन्द्वम् अप्रतिबलं शौर्यं यस्य तथाभूतम्। शौर्यावस्थायाः प्रत्ययाय विश्वासाय। कृतापरोक्ष कृतसाक्षात्कारम्।

(फ) तार्क्ष्यं गरुडम्। महामहीध्रकल्पं महापर्वतनिभं गृध्रराजं जटायुपक्षिणमिति यावत्।

पानेनेति। जटायुः कथितः वर्णितः आत्मनः वंशः येन तथाभूतः सन् तव तातस्य पितुर्दशरथस्य मित्रं सखाहम् इति उक्त्वेति शेषः पानेन गण्डूषकरणेन हीनजलं शुष्कजलम् अब्धिम् समुद्रम् अपास्य त्यक्त्वा एषः मैनाकः तदाख्यः पर्वतः मुनिम् अगस्त्यं पीताब्धिमिति भावः आश्रयति नूनं निश्चितम् उत्प्रेक्षा वा इति जाताम् इमां रघुपतेः शङ्काम् अहरत् अपनीतवान्। वसन्ततिलक वृत्तम् ॥१२॥

(ब) काश्यपकुलसम्भूतं कश्यपस्य इदं काश्यपं तत् कुलं काश्यपकुलं तस्मात् सम्भूतं कश्यपात् विनतायां जातो गरुडः तद्वत-मित्यर्थः। सम्पातेः तदाख्यस्य गरुडप्रथमपुत्रस्य अनुजं कनिष्ठम्।

(भ) अनुजेति अनुजेन लक्ष्मणेन रचिता निर्मिता पर्णशाला पत्रकुटीरं यस्य तथाभूतः।

कञ्चित्कालं गमयामास। अथ कदाचिदुपचीयमानमनोभववैभवः (म) पाककपिशकलममञ्जुमञ्जरीपुञ्जपिञ्जरीभूतकेदारप्रपञ्चः (य) पञ्चबाणप्रयाणोचितवीरपाणवत्पत्रपुटपातदृश्यावश्यायविन्दुसन्दोहचन्द्रातपे (र) निरानन्दतां चन्दनानुलेपने निर्लोलुपतां (ल) चन्द्रशालायां (व) निराश्रतां चन्द्रकान्तस्थले निरास्थतां वातायनसेवने निरुत्सुकता (श) वापीकूपोपकण्ठे निरुत्कण्ठतां वासरावसाने निरादरतां (ष) वारिविहारे (स) निराकाङ्क्षतामुत्पन्नमा-

---

(म) उपचीयमानेति उपचीयमानं वर्द्धमानं मनोभवस्य कामस्य वैभवं प्रभावः यत्र तथोक्तः।

(य) पाकेति पाकेन परिणत्या कपिशैः पिङ्गलैः कलमानां धान्यानां मञ्जुभिः मनोज्ञैः मञ्जरीपुञ्जैः वल्लरीनिचयैः पिञ्जरीभूता. केदारप्रपञ्चाः क्षेत्रनिचयाः यत्र तादृशः।

(र) पञ्चबाणेति पञ्चबाणस्य कामस्य प्रयाणे युद्धयात्रायाम् उचितम् उपयुक्तं यत् वीरपाणं तद्वत् पत्रपुटान्येव पात्राणि तेषु दृश्याः अवश्यायविन्दूनां शिशिरकणानां सन्दोहः समूहः यत्र तथाविधः। चन्द्रातपे ज्योत्स्नायाम्।

(ल) निर्लोलुपतां लोभराहित्यम्।

(व) चन्द्रशालायाम् उपरितनगृहे, चन्द्रशाला शिरोगृहमित्यमरः।

(श) निरास्थताम् आस्था यत्नः तद्राहित्यं तस्य शैत्यादिति भावः। वातायनसेवने गवाक्षवायुसेवायां निरुत्सुकताम् औत्सुक्यराहित्यम्।

(ष) वासरावसाने रजन्यागमे निरादरताम् आदरशून्यत्वं शीतातिशयादिति भावः।

(स) वारिविहारे जलक्रीडायाम्॥

भाग्यप्रपासन्निवेशस्तालवृन्तविश्रान्तिकरः (छ) कामिनी-स्तनभरगिरिदुर्गसीम्नि निर्भयनिलीननिदाघभावो दिवा-भीतव्रात(ज)स्याप्यनतिभयङ्करदिवाकर(झ)श्चकोरनिकर(ञ)-स्याप्यनतिक्षेमङ्करनिशाकरः (ट) कादम्बकदम्बस्याप्यनति-प्रीतिकरकमलाकरः (ठ) करयुगकृतस्वस्तिकाबन्धनतया नीहारात्मकशङ्कया हृदयकलमिव गोपायन्त(ड)मश्रान्त-

भर्त्तकीनाम् अधरेण दूरीकृतं त्यक्तं वसनस्य रेणुवाहनकार्य्यं यस्मिन् तथाभूत. ।

(छ) प्रक्षीणेति प्रकर्षेण क्षयं गतं तारुण्यं यौवनं यासां तथा-भूता याः पण्याङ्गना वेश्याः तासाम् अकृतव् प्रधानं सौभाग्यम् आदरो यस्य तादृशः प्रपासन्निवेशः पानीयशालायतनं यत्र तथोक्तः । तालवृन्तेति तालवृन्तानां विश्रान्तिकरः व्यवहाररहित इति यावत् ।

(ज) कामिनीति कामिनीनां स्तनभर एव गिरिदुर्गं तस्य सीम्नि सीमायां निर्भयं यथा तथा निलीनः स्थितः निदाघभावः उष्णभावः यत्र तादृशः । दिवाभीतानां पेचकानां व्रातस्य समूहस्य ।

(झ) अनतिभयङ्करः दिवाकरः सूर्य्यः यत्र तथोक्तः तीक्ष्णता-राहित्यादिति भावः ।

(ञ) चकोरनिकरस्य चकोराख्यपक्षिणः ।

(ट) अनतिक्षेमङ्करः नातिसुखदः निशाकरश्चन्द्रः यत्र तथाभूतः ।

(ठ) कादम्बकदम्बस्य कलहंसवृन्दस्य अनतिप्रीतिकरः नाति-सुखदः कमलाकरः सरोवरः यस्मिन् तथोक्तः ।

(ड) करेति करयुगेन हस्तयुगलेन कृतं स्वस्तिकाबन्धनं माङ्ग-लिकबन्धनविशेषः यस्य तस्य भावः तत्ता तया, नीहार एव आत्मकः मृत्युः तस्मात् शङ्कया, हृदयकलं हृदययन्त्रं गोपायन्तमिव रक्षन्तमिव शीतलाघवात् हस्ताभ्यां दृढबद्धत्वच्च स्वलक्ष्मिति भावः ।

दन्तवीणाव्यापारवेपमानाधरपुटतया शीतिकापिशाचि कानिर्हरणाय (ढ) निपुणं मन्त्रजपमिव कुर्वन्तमविरलपुल-कपालीकम्बलितकलेवरतया सकरुणविधिवितीर्णरोम-कम्बलकृताङ्गरक्ष(ण)मिव भिक्षामटन्तं दुर्गतवर्गं नि-र्घृणा (त) कदाचिदपि कमला (थ) नालोकयतीति तस्यै सासूय इव (द) तदीयावासतामरसकोशं (ध) नाशयन्नग-जमतङ्गजकरपुष्करोत्थितशीकरनिकराकारैः(न)रतिपरुषस्प-

---

(ढ) दन्तेति दन्ताः अनवरतं दन्तवीणाया: दशनरूपवीणा-यन्त्रस्य व्यापारेण सञ्चालनेन वेपमानं कम्पमानम् अधरपुटं यस्य तत्तया, शीतिका शीतमेव पिशाचिका दुष्टदेवयोनिविशेषः तस्याः निर्हरणाय निराकरणाय ।

(ण) अविरलेति अविरलाभिः घनाभिः पुलकपालीभिः रोमाञ्च-समूहैः कम्बलितम् आवृतं कलेवरं यस्य तत्तया, सकरुणेन सदयेन विधिना दैवेन वितीर्णैः दत्तैः रोमकम्बलैः लोमरूपैः कम्बलैः कृता अङ्गरक्षा शरीरस्य त्राणं शीतादिति भावः येन तम् ।

(त) निर्घृणा निर्दया ।

(थ) कमला लक्ष्मीः ।

(द) तस्यै कमलायै । सासूय इव सद्वेष इव ।

(ध) तदीय. कमलासम्बन्धी आवासः आश्रयः यत्तामरसकोशः तद्वपद्मकुड्मलं तम् ।

(न) नगजेति नगजानां पर्वतीयानां मतङ्गजानां हस्तिनां कराः हस्ता एव पुष्कराः शुण्डादण्डाः तेभ्यः उत्थितानां शीकरनिकरा-णामिव आकारो येषां तैः ।

खरखरजाततापप्रतप्तगगनाङ्गनाङ्गस्रवत्-खेदबिन्दुसदृक्षै(प)र-क्षीणमहिमहिमप्रसारै(फ)रध्वगान्त:करणानि सीमन्त-यन् (ब) हेमन्तसमयः समुदजृम्भत ।

यत्र कान्ता न पश्यन्ति क्लान्ता विरहवह्निना ।
निशावसानवेलाञ्च वेलाञ्च व्यसनाम्बुधेः ॥१४॥

तत्र (भ) पर्णशालामध्यमध्यासीनं (म) लक्ष्मणाग्रज-मुपससर्प शूर्पणखा ।

---

(प) अतिपरुषेति अतिपरुषेण अतिदारुणेन खरखरेण कामश-रेण जातेन तापेन उष्मणा प्रतप्तायाः सन्तप्तायाः गगनाङ्गनायाः आकाशनार्य्याः अङ्गेभ्यः स्रवन्तः निःसरन्तः ये स्वेदविन्दवः घर्मकणाः तत्सदृक्षैः तन्निभैः ।

(फ) अक्षीणेति अक्षीणः प्रवृद्ध इति यावत् महिमा येषां तथाभूताः ये हिमप्रसाराः तैः ।

(ब) अध्वगान्तःकरणानि पथिकमनांसि सीमन्तयन् विदारयन् व्यथयन्निति यावत् । समुदजृम्भत आविरभूत् ।

यत्रेति । यत्र यस्मिन् काले विरहवह्निना विच्छेदानलेन क्लान्ता व्यथिताः कान्ताः नार्य्यः निशावसानवेलां प्रातःकालञ्च व्यसनाम्बुधेः दुःखसमुद्रस्य वेलाञ्च समयं तटञ्च न पश्यन्ति न विचारयन्तीति यावत् अभिसारस्य समयासमययोरनिर्णयस्य विपत्सम्पदोश्च विचारं न कुर्वन्तीति भावः । अनुष्टुव् वृत्तम् ॥१४॥

(भ) तत्र समये ।

(म) अध्यासीनम् अधितिष्ठन्तम् ।

तस्मिन्नुज्जृम्भितोष्णस्तनतटदयिताहीनसंहारकाले
काले प्रालेयधाराकवचितगगनाभोगदिक्चक्रवाले ।
कामान्धा राक्षसी सा पतिमतिमतनोन्मैथिलीप्राणनाथे
लक्ष्मीलीलारविन्दे नवपिशितधियन्तन्वती श्येनिकेव ॥१५॥

ततस्तेन जानकीजानि(य)रिति जानीहि जनममुं ममानुजमतिमनुजबल(र)मबलावियुक्तं युक्तमाश्रयितुं त्वमिति रामेण प्रत्याख्याता (ल) सौमित्रिमुपेत्य यथामनीषित(व)मभाषत। तेनापि भद्रे! तस्यार्य्यस्य दासोऽहं दासभार्य्यापदमनार्य्यमार्य्यायाः (श) कुलसम्भूतायास्तस्मा-

तस्मिन्निति। उज्जृम्भितं प्रकटितम् उष्णं स्तनतटं यस्याः तथाभूता या दयिता कान्ता तया हीनस्य जनस्य विरहिण इति यावत् संहारं कलयति साधयतीति तस्मिन्, प्रालेयधाराभिः हिमसम्पातैः कवचितं पूरितं गगनाभोगः दिक्चक्रवालं दिङ्मण्डलञ्च यस्मिन् तथोक्ते तस्मिन् काले सा कामान्धा राक्षसी लक्ष्मीलीलारविन्दे कमलाया विलाससरसिजे नवपिशितधियं नूतनमांसबुद्धिं कुर्वती श्येनिकेव श्येनपक्षिणीव मैथिलीप्राणनाथे रामे पतिमतिं पतिबुद्धिम् अतनोत् कृतवती। उपमालङ्कारः। स्रग्धरा वृत्तं, म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति तल्लक्षणात् ॥१५॥

(य) जानकीजानिः जानकी जाया यस्य तथोक्तः।

(र) अनुजं कनिष्ठम्। अतिमनुजबलम् अतिक्रान्तमनुष्यतेजसम्।

(ल) प्रत्याख्याता निराकृता।

(व) यथामनीषितं यथाकामम्।

(श) दासभार्य्यापदं दासीपदमिति यावत् अनार्य्यम् अयोग्यम्। आर्य्यायाः माननीयायाः भवत्या इति शेषः।

त्वमेव भजेथाः। किञ्च, क्रूरसत्वभयानककाननसञ्चारा चतुरां (ष) विहाय वैदेहीं तत्रभवती(स)मेवासौ परिगृह्णीष्यतीति लक्ष्मणेनाभिहिता विहितं (ह) हितमिति तदीयं वचनमम्नुत (च)।

दशरथात्मजयुग्मनिरीक्षण-
क्षणसमाकुलबुद्धिरियं दधौ।
उभयकूलसमुत्थितशाद्वल-
भ्रमगतागतखिन्नगवीदशाम् ॥१६॥

वृषस्यन्ती वृषस्कन्धं राघवं रावणानुजा।
भूयः शूर्पणखा भेजे शूर्पकारातिबाधिता ॥१७॥

---

(ष) क्रूरेति क्रूरैर्निष्ठुरैः सत्त्वैः प्राणिभिः भयानके भीषणे कानने यः सञ्चारः भ्रमणं स्थितिर्वा तत्र अचतुराम् अपटीयसीम्।

(स) तत्रभवतीं मान्यां भवतीम्।

(ह) विहितं कृतम् अभिहितं वा।

(च) अम्नुत बुबुधे।

दशरथेति। दशरथस्य आत्मजयुग्मस्य रामलक्ष्मणयोरित्यर्थः निरीक्षणे अवलोकने क्षणेन समाकुला सम्मोहिता बुद्धिर्यस्याः तथाभूता इयं शूर्पणखा उभयोः कूलयोः समुत्थितस्य सञ्जातस्य शाद्वलस्य नवतृणपूर्णदेशस्य भ्रमेण गतागताभ्यां यातायाताभ्यां खिन्ना क्लान्ता या गवी तस्याः दशाम् अवस्थां दधौ प्राप। अत्रान्यस्य धर्मं कथमन्यो वहत्विति तथाविधधेनोरवस्थामिव अवस्थां दधाविति बिम्बप्रतिबिम्बप्रतीतेर्निदर्शनालङ्कारः। तदुक्तं दर्पणे। सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित्। यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शनेति। द्रुतविलम्बितं वृत्तम् ॥१६॥

वृषस्यन्तीति। वृषस्यन्ती कामुकी रावणानुजा शूर्पणखा शूर्प-

तदनु जनकदुहितुरनितरयुवतियोग्यं (क) भाग्यं रामस्य रामणीयकं निरूप्य (ख) पुनरेवमचिन्तयत्।

लावण्याम्बुनिधेरमुष्य दयितामेनामिवैनं जनं
कस्मान्नासृजदस्मदन्वयगुरोरुत्पत्तिभूः पद्मभूः।
आस्तामेतदरण्यवासरसिके हा कष्टमस्मिन् जने
कान्तिं काननचन्द्रिकासमदशां किं निर्ममे निर्ममे॥१८॥

सीतामाहर्त्तुकामामसुलभविषयप्रार्थनोद्दामकामां
सौमित्रिः शस्त्रपाणिर्दशमुखभगिनीं तामनार्य्यां निवार्य्य।

---

कारेण कामेन अतिबाधिता अतिपीड़िता सती भूयः पुनः उपस्कन्धः उपस्थेव स्कन्धौ यस्य तादृश राघव रामं भेजे प्राप। अनुष्टुव्वृत्तम् ॥१७॥

(क) जनकदुहितुः सीतायाः। अनितरयुवतियोग्यम् अपरकामिनीदुर्लभमिति यावत्।

(ख) रामणीयकं सौन्दर्यं निरूप्य दृष्ट्वा।

लावण्येति। अस्मदन्वयगुरोः अस्माकं कुलगुरोः पूर्वपुरुषस्य उत्पत्तिभूः जनकः पद्मभूः ब्रह्मा लावण्याम्बुनिधेः लावण्यसागरस्य अमुष्य रामस्येति भावः एना नारीमिव एनं जनं स्वात्मनिर्देशः। कान्तां कस्मात् न असृजत् न सृष्टवान्? एतस्य कान्ता अहं कथं न कृता विधात्रेति भावः। एतत् आस्तां तिष्ठतु एतस्य कान्ता मा न करोतु विधातेति भावः हा कष्टम् अरण्यवासरसिके वनवासप्रणयिनि निर्ममे भोगवासनारहिते अस्मिन् जने काननस्य चन्द्रिकायाः समा दशा अवस्था यस्याः तादृशीम् अरण्यचन्द्रिकासमेत्यर्थः कान्तिं लावण्यं किं कथं निर्ममे सृष्टवान् दत्तवानिति यावत्। शार्दूलविक्रीड़ितं वृत्तम् ॥१८॥

कामक्रोधाधिकानामहमहमिकया प्रक्षुतामायतानां
तस्याः श्वासानिलानामकुरुत तरसा मार्गविस्तारकृत्यम् ॥१९॥

ततस्तस्या निकृत्तकर्णनासिकायाः (ग) कनीयस्याः परिभव वदने वचने च दृष्ट्वा श्रुत्वा च जनस्थानवर्त्ती समरमुखमुखरः (घ) खरश्चतुर्दशसहस्रसङ्ख्यं (ङ) चतुर्दशाध्यक्षरक्षितं रक्षोबल (च) रामलक्ष्मणौ जिघृक्षुः प्रेषयामास ।

---

सीतामिति । खड्गं पाणौ यस्य तथाभूत. असिधर इत्यर्थः सौमित्रिः लक्ष्मणः सीताम् आहर्त्तुकामां रामस्कन्धात् चौरयितुकामाम् अतएव अस्य विषयस्य सुरतसुखस्येति भावः प्रार्थने उद्दामः उत्कट· कामोऽभिलाषः यस्यास्तथाभूता ताम् अनार्य्यां दुष्टां दशमुखस्य रावणस्य भगिनीं निवार्य्य निषिध्य तरसा बलेन कामक्रोधाभ्याम् अधिकानाम् अहमहमिकया परस्परस्पर्द्धया प्रक्षुता निःसरताम् आयताना दीर्घाणा तस्या· शूर्पणखायाः श्वासानिलाना निःश्वासमरुता मार्गविस्तारकृत्य वर्त्मविस्तारस्य कार्य्यं नासाच्छेदेनेति भावः। अकुरुत कृतवान्। स्रग्धरावृत्तम् ॥१९॥

(ग) निकृत्तेति निकृत्ता छिन्ना कर्णौ नासिका च यस्यास्तथोक्तायाः ।

(घ) जनस्थानवर्त्ती जनस्थानं नाम दण्डकारण्यान्त·पातिप्रदेशविशेषः तत्र स्थितः। समरमुखमुखरः समरमुखे सङ्ग्रामशिरसि मुखरः अग्रगामी ।

(ङ) चतुर्दशेति चतुर्दशसहस्राणि संख्या यस्य तथोक्तम् ।

(च) चतुर्दशेति चतुर्दशभिरध्यक्षैः रक्षितम् । रक्षोबलं राक्षससैन्यम् ।

अथ दाशरथिर्निरीक्ष्य दिक्षु रक्षोगणमुपसर्पन्तमपसर्पभूतया (छ) तया शूर्पणखया निदर्शितसरणिमरणिमिव मन्थनात् प्रागनाविष्कृततेजःप्रसरं (ज) सीतारक्षणे लक्ष्मणमादिश्य यातुधानवध (झ) तथाविधमतनुत (ञ)। तपोधननिधनकरकरनिकुरम्ब(ट)मिदं परुषभाषणस्पृहयालुतालुजाल(ठ)मिद परदारनिरीक्षणनिरपत्रपनेत्रद्वन्द्व(ड)मिदमिति निशिततरशरशतशकलितनिशिचरावयवानाकृत्य

---

(छ) उपसर्पन्तमापतन्तम्। अपसर्पभूतया चरभूतया, अपसर्पः चरः स्पश इत्यमरः।

(ज) निदर्शितसरणिं प्रदर्शितपथम्। अरणिमिव अग्निमन्थनकाष्ठमिव मन्थनात् प्राक् पूर्वम् अनाविष्कृतः अप्रकटितः तेजसां प्रसरः यस्य तथोक्तम्।

(झ) यातुधानवधं राक्षसवधं, यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी इत्यमरः।

(ञ) अतनुत कृतवान्।

(ट) तपोधनेति तपोधनानां मुनीनां निधनकरं संहारकमित्यर्थः करनिकुरम्बं हस्तसमूहः।

(ठ) परुषेति परुषभाषणे निष्ठुरवाक्योक्तौ स्पृहयालु तत्परमिति यावत् तालुजालं लक्षणया वदनवृन्दम्।

(ड) परदारेति परदाराणां परस्त्रीणां निरीक्षणे अवलोकने निरपत्रपं निर्लज्जं नेत्रद्वन्द्वं नयनसमूहः।

प्रत्युटजं दर्शयद्भि(ढ)स्तपोधनाध्वशुद्धिं विदद्भिः (ण) इति खगराजनिदेशादिव (त) देशान्तरादापतद्भिः पतद्भिः (थ) कङ्कप्राचीकप्रायैरनवकाश(द)मभूदाकाशम्। तत्र निकृत्त-शिरसि त्रिशिरसि विस्रगन्धिना (ध) शरीरस्रुतवसास्रो-तसा प्रेत्यापि (न) क्रियमाणाश्रमदूषणे (प) दूषणे रोष-

(ढ) निशितेति निशिततरेण अतितीक्ष्णेन शरपातेन शकलि-तानां खण्डितानां निशिचराणां राक्षसानाम् अवयवान् अङ्गानि पत्रोत्क्षिप्याणीति शेषः आहृत्य आकृष्य प्रत्युटजं प्रतिकुटीरं दर्श-यद्भिः।

(ण) तपोधनेति तपोधनानाम् अध्वनः पथः राक्षसानां स्रव-शवदूषितस्येति भावः शुद्धिं परिष्कृतिमिति यावत् तत्तन्मांसभक्षणे-नेति भावः विदद्भिः कुर्वद्भिः।

(त) खगराजेति खगराजस्य जटायुषः निदेशादिव आदेशादिव।

(थ) पतद्भिः पक्षिभिः।

(द) कङ्कप्राचीकप्रायैः कङ्कप्राचीकाख्यपक्षिबहुलैरित्यर्थः। अन-वकाशं निरन्तरं पूर्णमिति यावत्।

(ध) निकृत्तशिरसि छिन्नमस्तके। त्रिशिरसि तदाख्यराक्षसे। विस्रगन्धिना आमगन्धवता, विस्रं स्यादामगन्धि यदित्यमरः।

(न) शरीरेति शरीरात् स्रुतानां निर्गलितानां वसानां हृन्मेदसां, हृन्मेदस्तु वपा वसेत्यमरः। स्रोतसा प्रवाहेण। प्रेत्यापि परलोकं गत्वापि।

(प) क्रियमाणेति क्रियमाणम् आश्रमाणां ब्रह्मचर्याद्याश्र दूषणं येन तथोक्ते।

भीषणवीक्षणखरः (फ) खरः राघवमाहवायाह्वयत (ब) । तत्र विपश्चिद्भि(भ)रप्यनिश्चीयमानजयापजयमनिमिषै(म)-रप्यननुसन्धीयमानशरसन्धानमोक्ष(य)मभूदभूतपूर्वं द्वन्द्व-युद्धम् (र) । तत्र खरो गृहीतकोदण्ड(ल)स्त्वसकृदनुभूय-माननमनोन्नमनायासः (व) समरसमापनचतुरश्चतुरानना-स्त्रसन्धानार्हं दाशार्हशरासनं (श) ग्राहयितुकाम इव

(फ) रोषेति रोषेण भीषणं भयङ्करं यत् वीक्षणं दर्शनं तेन खरः उग्रः ।

(ब) आहवाय संग्रामाय । आह्वयत आहूतवान् ।

(भ) विपश्चिद्भिर्विद्वद्भिः, विद्वान् विपश्चिद्दोषज्ञः सन् सुधीः कोविदो बुध इत्यमरः ।

(म) अनिश्चीयमानेति अनिश्चीयमानौ अनिर्णीयमानौ जयापजयौ यत्र तथाभूतम् । अनिमिषैः निमेषरहितैः ।

(य) अननुेति न अनुसन्धीयमानौ न लक्ष्यमाणौ शराणां सन्धानमोक्षौ संयोगत्यागौ यत्र तथाभूतम् ।

(र) अभूतपूर्वं पूर्वमभूतम् । द्वन्द्वयुद्धम् अन्यसाहाय्यं विना द्वयोरेव वीरयोर्यत् परस्परयुद्धं तत् ।

(ल) गृहीतकोदण्डः गृहीतकार्मुकः ।

(व) अनुभूयमानेति अनुभूयमानः अवबुध्यमानः नमनोन्नमनयोः आयासः यस्य तथोक्तः ।

(श) समरेति समरस्य संग्रामस्य समापने चतुरः निपुणः सङ्ग्रामजयकुशल इति यावत् । चतुराननास्त्रसन्धानार्हं ब्रह्मास्त्रसन्धानयोग्यम् । दाशार्हशरासनं नारायणकार्मुकम् ।

रामहस्तात् प्राक्तन (घ) चापं शरैरपजहार। सोऽपि कोपपावकपावकितानन: कुम्भसम्भवदत्त (ङ) धनुराधत्त ।

खरपरुषि शरासने गृहीते
खरकिरणान्वयशेखरेण तेन ।
खररघुवरयो: रणः समाप्तं
खरनखरायुधयोरिव क्षणेन ॥२०॥

खरवधपरिशुद्धे दण्डकारण्यभागे
मुनिभिरभिहितानामाशिषां तादृशीनाम् ।
स्वयमचरमपात्रं स्वैर्गुणैर्मन्थराभूत्
तदनु मनुकुलेन्दु: सानुज: शौर्य्यराशि: ।२१॥

---

(घ) प्राक्तनं पूर्व्वकृत साधारणमिति भाव: ।

(ङ) कोपेति कोपपावकेन क्रोधानलेन पावकितम् अनलायितम् आननं मुखं यस्य तथाभूत: । कुम्भसम्भवदत्तम् अगस्त्यदत्तम् ।

खरेति । खरकिरण: उष्णरश्मि: सूर्य्य इत्यर्थ: तस्य अन्वय: वंश: तस्य शेखरेण शिरोभूषणभूतेन तेन रामेण, खरं पिशिताशि खरपा खरराक्षसघातिनीत्यर्थ: रुट् रोष: यस्य तादृशे शरासने कार्म्मुके गृहीते सति, खरनखरायुधयोरिव उद्भटनखिनोरिव खररघुवरयो: रणः क्षणेन अल्पकालेन समाप्तं नि:शेषतां गतम् । पुष्पिताग्रावृत्तम् ॥२०॥

खरेति । खरस्य वधेन परिशुद्धे विशुद्धिं गते निष्कण्टकीकृते इति भाव: दण्डकारण्यभागे सति मन्थरा कुब्जा कैकयीपरिचारिणी स्वैर्गुणै: रामवनप्रयाणमन्त्रणादानरूपैरिति भाव: मुनिभिरभिहितानाम् उक्तानां तादृशीनाम् आशिषाम् आशीर्वादानां स्वयम् अचरमपात्रं प्रथमभाजनं, साधु कृतं मन्थरया यत् रामो वनं प्रव्रा-

तथाहि,

प्राग् मन्थरेति महिषीति वरद्वयीति
धर्मव्ययव्यथितभूपतिभारतीति।
काकुत्स्थकाननकथेति च सन्ति संज्ञाः
पौलस्त्यभीतभुवनत्रयभाग्यपङ्क्तेः ॥२२॥

अथ शूर्पणखा लङ्कामपि जनस्थानमिव विजनस्थानं(ङ) काकुत्स्थेन कारयितुं दशकण्ठोपकण्ठे (च) कृत्येव (छ) निपत्य रामलक्ष्मणयोर्याथातथ्यं वैदेह्या देहसौन्दर्य्यं च स-

---

र्जित, यत्र वयं निष्कण्टकेऽस्मिन् सुखेन निवसामः, तत् तस्यै मन्थरायै स्वस्ति भूयादित्येवमाशिषां पात्रमिति भावः, बभूव। तदनु मन्थराशीर्वादानन्तरं शौर्य्यराशिः सानुजः सलक्ष्मणः मनुकुलेन्दुः मनुवंशचन्द्रः रामः आशिषां पात्रमभूदित्यन्वयः ॥२१॥

प्रागिति। पौलस्त्यात् रावणात् भीतस्य भुवनत्रयस्य भाग्यपङ्क्तेः भाग्यपरम्परायाः प्राक् पूर्वं मन्थरा इति महिषी कैकयीति वरद्वयी वरयोः रामवनवासभरतराज्यलाभरूपयोः द्वयी इति धर्मव्ययात् सत्यक्षयात् व्यथितस्य अर्दितस्य भूपतेः राज्ञः दशरथस्य भारती इति काकुत्स्थस्य रामस्य काननकथा दण्डकारण्यवासवार्त्ता इति च संज्ञाः अभिधानानि जल्पनानीत्यर्थः सन्ति। वसन्ततिलकं वृत्तम् ॥२२॥

(ङ) विजनस्थानं विगतं जनानां प्राणिनां स्थानं यत्र तादृशं प्राणिशून्यमित्यर्थः।

(च) दशकण्ठोपकण्ठे रावणसमीपे।

(छ) कृत्येव अभिचारिकी क्रियेव।

प्रमुखैः साकमनीकस्य (ख) चतुर्दशसहस्रसंख्यस्य पञ्चता-करणकारणभूतामात्मावज्ञाञ्च (ग) विज्ञापयामास ।

स दण्डकायां कृतदण्डकायां
स्वसारमेना प्रथितस्वसारः ।
निशाम्य रामस्य निशम्य वृत्तं
चक्रे रुषं राक्षसचक्रवर्त्ती ॥२३॥

ततः प्रस्थाप्य जनस्थाने राक्षसानष्टौ नष्टमति(घ)रयं ताड़केयं हाटकमृगं (ङ) पुरस्कृत्य सीताह्वयां (च) हरिणीं ग्रहीतु तस्यावसथ(छ)माससाद । मारीचोऽप्याकर्णितरा-

---

(ख) साकं सह । अनीकस्य सैन्यस्य ।

(ग) पञ्चताकरणकारणभूतां निधनसाधनहेतुभूताम् । आत्मावज्ञाम् आत्मनः स्वस्य अवज्ञाम् अवमाननां नासाकर्णच्छेदरूपामिति भावः ।

स दण्डकायामिति । प्रथितः प्रसिद्धः स्वस्य आत्मनः सारः बलं यस्य तथाभूतः विख्यातमहाबल इत्यर्थः स राक्षसानां चक्रवर्त्ती सम्राट् रावणः दण्डकायां दण्डकारण्ये कृतदण्डः कायो यस्याः तथाभूतां छिन्नकर्णनासिकामिति भावः एनां स्वसारं भगिनीं शूर्पणखां निशाम्य दृष्ट्वा रामस्य वृत्तं चरितं राक्षसोपद्रवरूपमिति भावः निशम्य श्रुत्वा रुषं क्रोधं चक्रे कृतवान् । उपजातिवृत्तम् ॥२३॥

(घ) नष्टमतिः दुर्बुद्धिः ।

(ङ) ताड़केयं ताड़कासुतं मारीचम् । हाटकमृगं स्वर्णमृगम् ।

(च) सीताह्वयां सीतानाम्नीम् ।

(छ) आवसथम् आश्रमम् ।

णमतिः (ज) प्रयत्नशतैरप्यनिवार्य्यमाणे तस्मिन् रावणे सुबाहुमिव(झ) बहुमन्यमानो गत्यन्तराभावात् (ञ) तदभ्यर्थनामभ्युपेत्य जातरूपमयमृगरूपं(ट) गृहीत्वा सीतां वञ्चयितुं पञ्चवटीमगाहत। दशमुखोऽपि जलधरपथस्थापितरथो दाशरथिविघट्टने कृतास्थ(ठ)स्तस्थौ।

विपिनमवजगाहे राक्षसानां करोटी-
रसकृदसकृदाविर्भाव्यमालोक्य शोचन् ।
कृतरुचिरिव वर्त्मन्यङ्कुशानां कुशानां
पथिकचरणलाविन्यङ्कुरे न्यङ्कुरेषः ॥२४॥

(ज) आकर्णितरावणमतिः आकर्णिता श्रुता रावणस्य मतिः आत्माहरणाभिप्रायरूपो भावो येन तथोक्तः।

(झ) सुबाहुमिवेति यो रामहस्तेन प्राक् निहत इति भावः।

(ञ) गत्यन्तराभावात् उपायान्तराभावात्।

(ट) जातरूपमयमृगरूपं काञ्चनमृगरूपमित्यर्थः।

(ठ) जलधरेति जलधरपथे आकाशे स्थापितः रथो येन तथाभूतः। दाशरथिविघट्टने रामस्य आश्रमात् अपसारणे। कृतास्थः कृतप्रयत्नः।

विपिनमिति। एषः राक्षसानां करोटीः शिरःकङ्कालभूताः मारीच...त्वयं न्यङ्कुः मृगविशेषः सन् असकृत् असकृत् पुनः पुनः आलोक्य ...हतो हा ...त्वयं आविर्भाव्यमुदश्रु यथा तथा शोचन् हा ...तोऽस्मीति शोकं कुर्वन् वर्त्मनि पथि अङ्कुशानाम् अङ्कुशाकृतीनां ...भ्यस्थानामिति यावत् कुशानां पथिकचरणलावीनि पान्थपदच्छेद...कारीणि अङ्कुरे कृतरुचिरिव बद्धानुराग इव विपिनं वनम् अवजगाहे प्रविष्टः। मालिनीवृत्तम् ॥२४॥

तदनु जनकपुत्रीयाच्ञया तज्जिघृक्षु-
र्हरिणमनुजगाहे चापमादाय रामः।
समय इति च भेजे पाशमातत्य मृत्युः
कुशिकसुतमखाजौ भ्रष्टमेनं जिघांसुः ॥२५॥
आकृष्य दूरमुटजादथ दर्शिताङ्गः
क्रव्याद एष रघुनाथशरेण विद्धः।
कार्त्तस्वरेण तनुतां विजहौ हतोऽस्मी-
त्यार्त्तस्वरेण सह रामवचोनिभेन ॥२६॥

एतदाकर्ण्य विदीर्णहृदया हृदयदयितप्रेम्णा (ङ)

तदन्विति। तदनु तदनन्तरं रामः जनकपुत्र्याः सीतायाः याच्ञया प्रार्थनया तज्जिघृक्षुः तदुपग्रहणार्थी सन् चापं धनुरादाय हरिणं काञ्चनमयमिति शेषः, अनुजगाहे अनुससार। मृत्युर्यमश्च समय इति धियेति शेषः कुशिकसुतस्य विश्वामित्रस्य मखाजौ यज्ञसमरे भ्रष्टं रामशरात् निष्कृतं पलायितमिति भावः एनं मारीचं जिघांसुः हन्तुमिच्छुः सन् पाशं बन्धनयन्त्रम् आतत्य विस्तृत्य भेजे अनुजगाम च। मालिनी वृत्तम् ॥२५॥

आकृष्येति। अथानन्तरम् एष क्रव्याद् राक्षसः दर्शिताङ्गः अङ्गं दर्शितवानित्यर्थः, उटजात् आश्रमकुटीरात् दूरम् आकृष्य राममिति शेषः कार्त्तस्वरेण सौवर्णेन रघुनाथशरेण रामसायकेन विद्धः सन् रामस्य वचोनिभेन वचसा तुल्येन हतोऽस्मीति आर्त्तस्वरेण करुणनिनादेन सह तनुतां शरीरधर्मं विजहौ तत्याज ममारेति यावत्। वसन्ततिलकं वृत्तम् ॥२६॥

(ङ) हृदयदयितप्रेम्णा प्राणप्रियप्रणयेन।

कर्त्तव्याकर्त्तव्यमजानाना जानकी जानीहि भ्रातरमिति सौमित्रिमादिदेश। ततश्चार्य्येण कार्य्यमिद(ढ)मादिष्टं दिष्टदोषान्मिथ्याप्रतीतिः पराभवति भवतीं (ण) परं त्रिभुवनैकधनुर्धरस्य शौर्य्यराशेः रामार्य्यस्य कः श्रद्दधीत कौणपघुणनिमित्ता (त) विपत्तिमिति प्रणिपत्य प्रत्याचक्षाण (थ) हृदयतोदकारिण्या (द) वाण्या मोहविह्वला सा बह्वतर्जयत्। भूयोऽपि लक्ष्मणः परुषभाषणभाषिणीं प्रजावती(ध)मेवमभाषत।

सुमुखि! मम सुमित्रा सत्यमम्बा यदासीत्
तदभजमवितर्कं मातृसम्पर्कसौख्यम्।
अहह विधिविपाकाद्व्याहरन्ती दुरुक्तिं
त्वमसि विपिनमध्ये मध्यमाम्बा हि जाता ॥२७॥

---

(ढ) इदं कार्य्यं भवत्या रक्षणमिति भावः।

(ण) दिष्टदोषात् भाग्यदोषात् मिथ्याप्रतीतिः मृषावोधः भवतीम् त्वाम्‌ पराभवति व्यथयतीत्यर्थः।

(त) श्रद्दधीत विश्वसेत्? कौणपघुणनिमित्ता कौणपः राक्षस एव घुणः कीटविशेषः तन्निमित्ता तज्जनितामित्यर्थः।

(थ) प्रत्याचक्षाण निराकुर्वन्त भ्रातुरनुसरणे अस्वीकुर्वन्तमिति भावः।

(द) हृदयतोदकारिण्या हृदयं व्यथयन्त्या।

(ध) प्रजावती भ्रातृजाया, भ्रातृजाया प्रजावतीत्यमरः।

सुमुखीति। हे सुमुखि! यदा सत्यं मम सुमित्रा अम्बा आसीत् भवतीति शेषः तत् तदा अवितर्कं वितर्करहितं सत्यमिति

इत्युक्त्वा भ्रातृजाया भ्रातृसमीपगामिनि लक्ष्मणे ततक्षणमेव रन्ध्रान्वेषी (न) दशकन्धर (प) स्यन्दनं विहाय विहायस्थला(फ)दवतीर्य्य निजान्तःकरणेऽप्यमान्तं रागं (ब) वहिः प्रकटयन्निव धृतकाषायपटसंन्यासवेष. (भ, पर्णशालामाससाद ।

रामाश्रमाद् विगतलक्ष्मणसन्निधानात्
सीतां जहार चपल' पिशिताशनेन्द्रः ।
माला महोत्पलमयीं पललभ्रमेण
देवालयादिव निरस्तजनादलर्कः ॥२८॥

---

यावत् मातृसम्पर्कसौख्य मातृवत्वासस्खम् श्रभज प्राप्तवानसीत्यर्थ । अहह खेदे विधिपाकात् दौर्भाग्यात् विपिनमध्ये काननमध्ये दुरुक्ति दुष्टा वाच व्याहरन्ती कथयन्ती त्व मध्यमा अम्बा माता कैकेयीत्यर्थं हि निश्चित जाता असि । मालिनीवृत्तम् ॥२७॥

(न) रन्ध्रान्वेषी छिद्रान्वेषणपर ।

(प) दशकन्धर रावण' ।

(फ) विहायस्थलात् अन्तरीक्षात् ।

(ब) अमान्तम् अपर्य्याप्त प्रभूतमिति यावत् राग प्रणयम् ।

(भ) धृतति धृत गृहीत. काषायपट' कषायरक्तवसन' सन्यासवेष येन तथाभूत ।

रामाश्रमादिति । चपल अधीर पिशिताशनेन्द्र राक्षसपतिः निरस्तजनात् निर्जनात् देवालयात् पललभ्रमेण मांसबुद्ध्या महोत्पलमयीं मालाम् अलर्क इव काक इव, विगत लक्ष्मणस्य सान्निधान स्थिति. यस्मात् तथाभूतात् रामाश्रमात् सीता जहार । वसन्ततिलकं वृत्तम् । उपमालङ्कार ॥२८॥

हा नाथ । क्व चिरायसीति बहुशो व्याक्रुश्य बाष्पाविलं
चक्षुर्दिक्षु विमुञ्चतीं दशरथस्याद्यामवेक्ष्य स्नुषाम् ।
रे रे रावण ! मा वधूं प्रतिरुधामुञ्चेति गृध्राधिपो
रुद्ध्वाध्वानमनल्पकोपमकरोद्दग्रेवण रावणम् ॥२९॥

समभूत्समये तस्मिन् समरः समरंहसोः ।
मिथोमथनसक्रुद्धगृध्रराक्षसराजयोः ॥३०॥

दशमुखरथमाशु ध्वस्तरथ्यं विसूत
शिथिलतरवरूथं शीर्णचक्रं स चक्रे ।
गरुदभिहतशक्तिप्रासबाणासिखड्ग-
त्रिशिखविशिखतूणीपाशकुन्तः शकुन्तः ॥३१॥

---

हा नाथेति । गृध्राणाम् अधिपः जटायुः, हा नाथ ! क्व कुत्र चिरायसि विलम्बसे ? इति बहुशः पुनः पुनः व्याक्रुश्य उच्चैः कथयित्वा दिक्षु बाष्पाविलम् अश्रुकलुषं चक्षुः विमुञ्चती विक्षिपन्ती दशरथस्य आद्या प्रथमा स्नुषा पुत्रवधूम् अवेक्ष्य दृष्ट्वा रे रे रावण ! वधूं जानकीं मा प्रतिरुध हरेत्यर्थः, आमुञ्च सर्वथा परित्यज इत्युक्त्वा अध्वानं पन्थानं रुद्ध्वा अग्रेवणं काननाग्रे रावणम् अनल्पकोपं महाक्रुद्धम् अकरोत् । शार्दूलविक्रीडितं वृत्तम् ॥२९॥

समभूदिति । तस्मिन् समये समरंहसोः तुल्यवेगयोः मिथः परस्परं मथनेन पीडनेनेत्यर्थः सक्रुद्धयोः गृध्रराक्षसराजयोः पक्षिराजराक्षसाधिपयोः समरः संग्रामः समभूत् सम्यक् आवर्त्तत । अनुष्टुब्वृत्तम् ॥३०॥

दशमुखेति । गरुद्भ्यां पक्षाभ्याम् अभिहताः शक्तिः प्रासः बाणः अस्त्रविशेषः, खड्गः प्रसिद्धः त्रिशिखः त्रिशूलं विशिखः शरविशेषः तूणी पाशः कुन्तश्च येन तथाभूतः स शकुन्तः

राक्षसासिक्षतः क्षिप्रं पपात पततां वरः ।
मैथिलीपक्षपातेन पक्षपातमवाप सः ॥२२॥

ततः क्षणमन्यरथाधिरूढेन रावणेन भूयोऽपि नीयमाना जानकी ऋष्यमूकशृङ्गसङ्गलप्लवङ्गपञ्चके पञ्चचूडाधर इव क्ष्माधरकुमारे (म) कस्मिंश्चित् सुग्रीवसात्कृतदशग्रीवप्रतापानलसदृशं वालिविनाशपिशुनं महोल्कापातप्रतिमं (य) रामसाहाय्यप्रोत्साहनाय पुत्रमभि पतत्पतङ्गबिम्बशङ्कावहं (र) कनककपिशकौशेयमयोत्तरीयान्तरितमाभर-

---

पक्षी जटायुः आशु शीघ्रं दशमुखस्य रावणस्य रथं ध्वस्ता नष्टा रथ्या वाहा यस्य तथोक्तं, विसूतं सारथिरहितं शिथिलतर· दुर्बल इति भावः वरूथः रथगुप्तिसाधनकाष्ठविशेषः यस्य तादृशं तथा शीर्णचक्रं भग्नरथाङ्गं चक्रे कृतवान् । मालिनीवृत्तम् ॥२१॥

राक्षसेति । पततां वरः पक्षिराजः जटायुः राक्षसस्य रावणस्य असिना क्षतः ताडितः सन् क्षिप्रं शीघ्रं पपात । स जटायुः मैथिल्याः सीतायाः पक्षपातेन स्नेहेन पक्षपातं पक्षयोरुच्छेदमिति यावत् अवाप प्राप्तवान् । अनुष्टुब्वृत्तम् ॥२२॥

(म) ऋष्यमूकेति ऋष्यमूकाख्यस्य शृङ्गे सङ्गतं मिलितं प्लवङ्गानां वानराणां पञ्चकं यस्य तादृशे अतएव पञ्चचूडाधरे इव पञ्चशृङ्गशालिनीव क्ष्माधरकुमारे पर्वतशावके क्षुद्रपर्वते इति भावः ।

(य) सुग्रीवेति सुग्रीवसात्कृतः सुग्रीवायत्तीकृतः दशग्रीवस्य रावणस्य यः प्रतापानलः तत्सदृशम् वालिविनाशपिशुनं वालिविनाशसूचकं महोल्कापातप्रतिमं महान् उल्कापातः तत्प्रतिरूपम् ।

(र) पुत्रं सुग्रीवमिति भावः अभि सुग्रीवसन्निधावित्यर्थः, अभियोगे द्वितीया पतत[illegible]ङ्गबिम्बस्य सूर्यबिम्बस्य शङ्कां वहतीति तथोक्तम्

आभार(ल)मपातयत् तस्य तनमपि (व) स्वतेज.पतनमिव म
पश्यन् लङ्कालङ्कारभूतामशोकवनिकां मैथिलीमनयद्न-
यज्ञो (श) दशग्रीव'।

अशोकवनिका लेभे राक्षसीपरिवेष्टिताम।
सीता मारुतिबालाग्निस्तम्भनार्हामिवौषधिम् ॥३३॥
काकुत्स्थोऽप्यथ रक्षसामधिपतेर्वाग्वागुरावेष्टिते
कृत्वा हाटकताडकेयहरिणे शार्दूलविक्रीडितम्।
आगच्छन्ननुजेन तत्र गदितामाकर्ण्य वार्त्तान्ततः
सीतासङ्गमलालसस्तदुटज राम. प्रतस्थे द्रुतम् ॥३४॥

---

(ल) कनकेति कनकवत् कपिशेन पिङ्गलेन कौशेयमयेन कृमिको-
शोत्थविरचितेन उत्तरीयेण अन्तरितम् आवृतम् आभरणभारम्
अलङ्कारजातम्।

(व) तत्पतन तस्य अलङ्कारजातस्य पतनम्।

(श) अनयज्ञ दुर्नयपर'।

अशोकेति। अशोकवनिका राक्षसीपरिवेष्टिता सीता मारुते-
र्हनुमत' बालाग्नि पुच्छाग्नि तस्य स्तम्भनार्हां शमयित्रीमिति
भाव: औषधीमिव लताविशेषमिव लेभे प्राप। सीतासन्निधानात्
लङ्कादाहे अशोकवनिकाया न काचित् दाहपीडाभूदिति भाव' ॥३३॥

काकुत्स्थ इति। अथ सौवर्णमृगवधानन्तर काकुत्स्थ रामो-
ऽपि रक्षसामधिपते रावणस्य, वागेव मया सह रामप्रतारणार्थं
गच्छेत्येव वचनमेव वागुरा पाश तया वेष्टिते आवृते ततो निस्त-
र्तुमशक्ते इति भाव' हाटकताडकेयहरिणे काञ्चनमृगरूप-
मारीचे इत्यर्थ' शार्दूलविक्रीडित व्याघ्रवदाचारमित्यर्थ' कृत्वा त
विनाश्येति भाव: आगच्छन् तत्र पथीति शेष: अनुजेन लक्ष्मणेन

अथ कथं स्यादिति वाष्पगर्भ-
मालोक्यमानो वनदेवताभिः।
विलोकयन् केवलपर्णशालां
विलीनचेता विललाप रामः ॥२५॥

हा कष्टमत्र न हि सा किमिदं प्रवृत्त-
मालोकयामि चटुलामिह पादमुद्राम्।
सा वीक्ष्य नूनमगृहीतमृगं सुहृत्तं-
मन्तर्हिता तरुषु रोषवतीव सीता ॥२६॥

---

गदिताम् उक्तां वार्त्ताम् आकर्ण्य श्रुत्वा ततः सीतासङ्गमलालसः सीतादर्शनार्थी सन् तत् उटजं कुटीरं द्रुतं शीघ्रं प्रतस्थे चचाल। शार्दूलविक्रीडितं वृत्तं, सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितमिति तल्लक्षणात् ॥२४॥

अयमिति। अयं रामः कथं स्यात् किमाचारो भवेत्? इति वनदेवताभिः वाष्पगर्भम् उद्गतनयनवारि यथा तथा आलोक्यमानः दृश्यमानः रामः केवलां सीतारहितां पर्णशालां विलोकयन् विलीनचेता विलुप्तचित्तः सन् विललाप परिदेवितवान्। उपजातिवृत्तम् ॥२५॥

हा कष्टमिति। हा कष्ट सा सीता अत्र अस्मिन् प्रदेशे न हि नैव अस्तीति शेषः। इदं किं प्रवृत्तं किमुपस्थितम्? इह चटुलां चञ्चलां रावणकर्त्तृकहरणसमये इतस्ततः सञ्चारादिति भावः पादमुद्रां चरणविन्यासचिह्नम् आलोकयामि पश्यामि, सीता सा अगृहीतमृगं वीक्ष्य दृष्ट्वा सुहृत्तं रोषवतीव क्रुद्धेव तरुषु अन्तर्हिता तिरोधानं गता इति नूनम् उत्प्रेक्षे। वसन्ततिलकं वृत्तम् ॥२६॥

त्वदभिलषितपूर्त्यै वञ्चितः पञ्चवट्या-
मचरमचरमोऽहं मोहभाजां प्रजानाम् ।
तदिह सरलबुद्धे ! नैष रोषस्य कालः
सुमुखि ! मम सुखं किं सोढसीतावियोगम् ॥३७॥

यद्यस्ति कौतुकमपूर्वमृगे मृगाक्षि !
चान्द्रं हरामि हरिणं मम सन्निधेहि ।
यावन्न मुञ्चसि मया हृतमेणमेनं
तावद्दधातु तव वक्त्रतुलां मृगाङ्कः ॥३८॥

---

त्वदभिलषितेति । हे सुमुखि ! मोहभाजां मुग्धानां प्रजानाम्, प्रजा स्यात् सन्ततौ जने इत्यमरः । अचरमः प्रथमः अग्रणीरित्यर्थः अतिमूढ इति भावः अहं तव अभिलषितस्य सौवर्णमृगचर्म-[illegible]विषयस्येति भावः पूर्त्यै पूरणाय वञ्चितः प्रतारितः सन् पञ्चवट्याम् अचरं विचरितवान् । हे सरलबुद्धे ! अकुटिलमते ! तत् तस्मात् इह मयीति शेषः एषः रोषस्य क्रोधस्य कालः समयः न मम सुखं [illegible]नयनमित्यर्थं सोढः सीताया वियोगः येन तादृशं किम् ? नैव कदाचित् सीतावियोगं सोढवानस्मीति भावः । वसन्ततिलकं वृत्तम् ॥३७॥

यद्यस्तीति । हे मृगाक्षि ! यदि अपूर्वमृगे कौतुकम् अस्ति तवेति शेषः, तदा अहं चान्द्रं चन्द्रसम्बन्धिनं हरिणं हरामि, मम सन्निधेहि [illegible]मागच्छ । मया हृतम् एनम् एणं मृगं चान्द्रमिति [illegible] न त्यजसि, तावत् मृगाङ्कः चन्द्रः अकलङ्क इति [illegible] सन् [illegible] तुला मुखसादृश्यं दधातु प्राप्नोतु । वसन्त-[illegible]

सप्राणा चेज्जनकतनया किन्न तिष्ठेत मह्यं
हिंस्रैः सत्त्वैर्न किल विहता रक्तसिक्ता न भूमिः।
गोदावर्य्याः पुलिनविहृतिं रामशून्या न कुर्य्याद्
युक्ता नक्तञ्चरकवलनात् संस्थिता सर्वथा सा॥३९॥

लोकान्तरप्रणयिनं श्वशुरं प्रणन्तु-
मासन्नकालमतिलङ्घ्य यदि प्रयासि।
विज्ञाप्य मामपि समाह्वय साध्वि! तस्मै
सौमित्रिरेव भरते निदधातु राज्यम्॥४०॥

---

सप्राणेति। चेत् यदि जनकतनया सीता सप्राणा जीवितेत्यर्थः तदा किं कथं मह्यं न तिष्ठेत न मत्समीपे स्वाभिलाषं प्रकाशयेत्? जीविता अवश्यमेव मत्समीपमागत्य मां तोषयेदिति भावः। हिंस्रैः सत्त्वैः प्राणिभिः न किल विहता नैव नाशिता, यतः भूमिः रक्तसिक्ता न, रामशून्या सती गोदावर्य्याः पुलिने सैकते विहृतिं विहारं न कुर्य्यात्, तस्मात् नक्तञ्चरस्य निशाचरस्य कवलनात् भक्षणात् सा सर्वथा सर्वैः प्रकारैः संस्थिता मृता इति युक्तं स्थितम्। मन्दाक्रान्ता वृत्तं, मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्ममिति तल्लक्षणात्॥३९॥

लोकान्तरेति। यदि आसन्नकालम् आदेशसमयं ममेति शेषः अतिलङ्घ्य अतिक्रम्य लोकान्तरप्रणयिनं स्वर्गस्थं श्वशुरं प्रणन्तुम् अभिवन्दितुं प्रयासि गच्छसि, हे साध्वि! तदा तस्मै श्वशुराय विज्ञाप्य मामपि समाह्वय तत्र नयेत्यर्थः। सौमित्रिरेव लक्ष्मण एव भरते राज्यं निदधातु अर्पयतु। वसन्ततिलकं वृत्तम्॥४०॥

इत्थं विलप्य दयिता विपिने विचिन्वन्
रामो न तत्र धृतिमान् न च लक्ष्मणोऽपि ।
तादृग्विधामपि दशां कथयन् स्ववाचा
वल्मीकजन्ममुनिरेव कठोरचेताः ॥४१॥

तत्र (घ) प्रारभमाणप्रयाणान् (ङ) प्राणानवष्टभ्य (च) जटायुः क्रियमाणसीतान्वेषणं सलक्ष्मणं राममालक्ष्य (छ) अवोचत । आयुष्मन् ! मां खड्गविक्षतपक्षतिं (ज) क्षितितले निक्षिप्य क्षिप्रतरं (झ) जहार मैथिलीं रावण इति ।

---

इत्थमिति । इत्थं विलप्य रामः तत्र विपिने वने दयितां कान्तां विचिन्वन् अन्विष्यन् न धृतिमान्, लक्ष्मणोऽपि न च धृतिमान् धैर्यशाली आसीदिति शेषः । तादृग्विधां दशामवस्थां स्ववाचा कथयन् वल्मीकात् जन्म यस्य तथोक्तो मुनिरेव का कथाऽन्येषामिति भावः कठोरचेताः निष्ठुरचित्तः पाषाणहृदय इति भावः आसीदिति शेषः, तादृशकठिनहृदयस्यैव तदवस्थावर्णने वाक्प्रसरसम्भवादिति भावः । वसन्ततिलकं वृत्तम् ॥४१॥

(घ) तत्र अरण्ये ।

(ङ) प्रारभमाणं प्रक्रस्यमाणं प्रयाणं निर्गमनं यैः तथाविधान् ।

(च) अवष्टभ्य किञ्चित् स्थिरीकृत्येत्यर्थः ।

(छ) आलक्षयन् पश्यन् ।

(ज) खड्गेति खड्गेन विक्षते विलूने पक्षती पक्षमूले यस्य तथाभूतम् ।

(झ) क्षिप्रतरम् अतिद्रुतं त्वत्तो भयादिति भावः ।

स्वयमपि शरभङ्गश्रीकृतां भङ्गहीनां
सपदि गतिमवाप्तः संहृतायुर्जटायुः ।
नयनसलिलमिश्रं रामहस्तेन दत्तं
दशरथदुरवापं प्राप नैवापमम्भः ॥४२॥

अथ दक्षिणारण्यानीं प्रस्थिते काकुत्स्थे राक्षसी काचिदयोमुखी नाम सौमित्रिमभिभूय तदीयेन (ग) शस्त्रेण शूर्पणखासिद्धिमभजत (घ)। तदनु क्रौञ्चारण्यसरण्या (ङ) प्रयाताविती महर्षेः स्थूलशिरसः शापात् कौणपतां प्रपन्नः (च) पन्नगपतिभोगभीषणाभ्यां (छ) भुजाभ्यां बबन्ध यथार्थ-

---

स्वयमिति। स्वयमपि आत्मनैवेत्यर्थः सीतारक्षार्थमिति भावः संहृतं नाशितम् आयुः जीवनकालः येन तथोक्तः जटायुः सपदि शरभङ्गेन तदाख्येन मुनिना श्रीकृता लब्धा भङ्गहीनाम् अक्षयामित्यर्थः गतिं स्वर्गवासमिति भावः अवाप्तः प्राप्तः सन् दशरथदुरवापं दशरथदुर्लभं नयनसलिलमिश्रं सवाष्पं रामहस्तेन दत्तं नैवापं पितृलोकदेयम् अम्भः तर्पणजलमिति यावत् प्राप। मालिनीवृत्तम् ॥४२॥

(ग) तदीयेन सौमित्रिसम्बन्धिना।

(घ) शूर्पणखासिद्धिं शूर्पणखेव नासाकर्णच्छेदमिति भावः। अभजत प्राप।

(ङ) तदनु तदनन्तरं क्रौञ्चारण्यसरण्या क्रौञ्चपर्वतीयकाननमार्गेण।

(च) कौणपता राक्षसत्वं प्रपन्नः प्राप्तः।

(छ) पन्नगेति पन्नगपतिर्वासुकिः तस्य भोग इव देह इव भीषणाभ्याम्।

नामा कबन्धः (ज)। तदनन्तरमनश्रुपातेषु (झ) राक्षसो- त्तमेषु सदोत्पादितवारिभ्यां (ञ) तरवारिभ्यां रामलक्ष्म- णयोः कबन्धबाहुयुगलं कदलीलावमिवालूयत (ट)।

तदनु दनुकबन्धेनादरादर्थितौ तौ
गिरितटभुवि देहं देहतुस्तस्य भीमम्।
अकथयदथ शापापायतुष्टः स रामं
तपनतनयमैत्र्या मैथिलीं प्राप्नुहीति ॥४२॥

तस्मिन्(ठ)नृष्यमूकमार्गमुपदिश्य स्वर्गं गते मतङ्गाश्रम- वासिन्या शबर्या कृतां सपर्यां (ड) रामः परिगृह्य तदनु-

---

(ज) यथार्थनामा अन्वर्थनामा। कबन्धः तदाख्यः, कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरमित्यमरः।

(झ) अनश्रुपातेषु अश्रुपातरहितेष्वित्यर्थः।

(ञ) सदेति सदा सततम् उत्पादितं जनितं वारि जलं याभ्यां तयोक्ताभ्यां तासां पतिपुत्रादीनां वधादिति भावः।

(ट) कदलीलावमिव कदलीच्छेदमिव अलूयत छिन्नम्।

तदन्विति। तदनु तस्य बाहुच्छेदनादनन्तरमित्यर्थः दनुकबन्धेन दनुनामकेन कबन्धेन आदरात् अर्थितौ प्रार्थितौ तौ रामलक्ष्मणौ गिरेः पर्वतस्य तटभुवि तटदेशे तस्य भीमं देहं देहतुः भस्मीकृत- वन्तौ। अथ देहदाहानन्तरं शापस्य अपायेन मोचनेन तुष्टः स दनुः रामं तपनतनयेन सूर्यपुत्रेण सुग्रीवेणेत्यर्थः सह मैत्र्या सङ्गत्या मैथिलीं सीतां प्राप्नुहि लभस्व इति अकथयत्। मालिनीवृत्तम् ॥४२॥

(ठ) तस्मिन् दनौ।

(ड) मतङ्गाश्रम मतङ्गस्य तदाख्यस्य मुनेः आश्रमवासिन्या आश्रम- स्थितया शबर्या रामभक्तया। सपर्यां पूजाम्।

अथ मनोज्ञकूजितविहङ्गमृगगणविहारमनोहरं गहन-
पदमवगाह्य (ढ) व्याकोशकुशेशयपरिचयकषायैर्वनदेवता-
लतादोलानुकूलैः (ण) कूलायतलीलापरवशवशावल्लभम-
दाम्बुचुम्बिभिः (त) शम्बरारातिशरधिसदृशतटसहकारशि-
खरविसरदासवासारसीकरशेखरैः (थ) विविधलतालासिका-
लास्योपदेशदेशिकायमानैः (द) कायमानसमानाभोगलता-
गृहकेलिलुब्ध-लुब्धकपुरन्ध्रीशिथिलधम्मिल्ल-मल्लिकागन्धमांस-

---

(ढ) गहनपदं वनभूमिम्। अवगाह्य प्रविश्य।

(ण) व्याकोशेति व्याकोशानि विकचानि, व्याकोशविकचस्फुटा इत्यमरः। कुशेशयानि पद्मानि तेषां परिचयेन सम्पर्केण कषायैः सुरभिभिः। वनदेवतेति वनदेवतानां लतासु दोले दोलने अनुकूलाः सहायाः तैः।

(त) कूलायतेति कूलेषु तटेषु आयता विस्तृता या लीला क्रीडा तस्याः परवशानां परतन्त्राणां तदासक्तानामिति यावत् वशावल्लभानां करेणुपतीनां मदाम्बूनि मदजलानि चुम्बन्ति स्पृशन्तीति तथोक्तैः।

(थ) शम्बरेति शम्बरारातेः कामस्य शरधेः तूणीरस्य सदृशं यत् तटसहकारस्य तटस्थितचूतस्य शिखरात् मञ्जर्य्या इति भावः विसरन् विस्तारं गच्छन् यः आसवासारः मकरन्दसम्पातः तस्य सीकरः कणः शेखरं शिरोभूषणभूतं येषां तादृशैः।

(द) विविधेति विविधा नानाप्रकारा लता एव लासिका नर्त्तक्यः। तासां लास्योपदेशे नृत्यशिक्षायां देशिकायमानैः आचार्य्यायमाणैः

सै(ध)र्मल्लिकाक्षपक्षविक्षोभक्षोदीभूतपाथःपाथेयैस्तटवनपवनै(न)रनुकम्प्यमानः पम्पामभजत् ।

इति श्रीमद्विदर्भराजविरचिते चम्पूरामायणे
श्रीमदरण्यकाण्डः समाप्तः ।

---

(ध) कायेति कायस्य देहस्य यत् मानं परिमाणं तत्समानः आभोगः विस्तारः येषां तादृशेषु लतागृहेषु केलिलुब्धानां क्रीडालालसानां लुब्धकपुरन्ध्रीणां व्याधपत्नीनां शिथिलेषु क्रीडावशात् विस्रस्तेषु धम्मिल्लेषु संयतकेशेषु, धम्मिल्लाः संयताः कचा इत्यमरः । या मल्लिकाः तदाख्यपुष्पाणि तासां गन्धेन मांसलैः स्थूलैः परिपुष्टैरिति भावः ।

(न) मल्लिकाक्षेति मल्लिकाक्षाख्याः हंसविशेषाः, राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः । मलिनैर्मल्लिकाक्षास्ते धार्त्तराष्ट्राः सितेतरैरित्यमरः । पक्षयोर्विक्षोभेन सञ्चालनेन क्षोदीभूतानि पाथांसि जलानि पाथेयानि सम्बलानि येषां तैः तत्सम्पृक्तैरिति भावः ।

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण कृता चम्पू-
रामायणारण्यकाण्डव्याख्या समाप्ता ।

ऽथ मनोज्ञकूजितविहङ्गमृगगणविहारमनोहरं गहन-पदमवगाह्य (ढ) व्याकोशकुशेशयपरिचयकषायैर्वनदेवता-लतादोलानुकूलैः (ण) कूलायतलीलापरवशवशावल्लभम-दाम्बुचुम्बिभिः (त) शम्बरारातिशरधिसदृशतटसहकारशि-खरविसरदासवासारसीकरशेखरै(थ)र्विविधलतालासिका-लास्योपदेशदेशिकायमानै (द) र्कायमानसमानाभोगलता-गृहकेलिलुब्ध-लुब्धकपुरन्ध्रीशिथिलधम्मिल्ल-मल्लिकागन्धमास-

---

(ढ) गहनपदं वनभूमिम्। अवगाह्य प्रविश्य।

(ण) व्याकोशेति व्याकोशानि विकचानि, व्याकोशविकचस्फुटा इत्यमरः। कुशेशयानि पद्मानि तेषां परिचयेन सम्पर्केण कषायैः सुरभिभिः। वनदेवतेति वनदेवतानां लतासु दोले दोलने अनुकूलाः सहायाः तैः।

(त) कूलायतेति कूलेषु तटेषु आयता विस्तृता या लीला क्रीडा तस्याः परवशानां परतन्त्राणां तदासक्तानामिति यावत् वशावल्लभानां करेणुपतीनां मदाम्बूनि मदजलानि चुम्बन्ति स्पृश-न्तीति तथोक्तैः।

(थ) शम्बरेति शम्बराराते: कामस्य शरधेः तूणीरस्य सदृशं यत् तटसहकारस्य तटस्थितचूतस्य शिखरात् मञ्जर्य्या इति भावः विस-रन् विस्तारं गच्छन् यः आसवासारः मकरन्दस्तस्मात् तस्य सीकरः कणः शेखरं शिरोभूषणभूतं येषां तादृशैः।

(द) विविधेति विविधा नानाप्रकारा लता एव लासिका नर्त्तक्यः। तासां लास्योपदेशे नृत्यशिक्षायां देशिकायमानैः आचार्य्यायमाणैः

ञ्चितसञ्चारपथिकप्रपञ्चा (घ) प्रमदचञ्चलचञ्चरीककुलकञ्चुकितमाधवी (ङ) माधवी भूतिरुदजृम्भत (च)।

यत्र कान्तैर्वियुक्तानां युक्तानामपि सुभ्रुवाम्।
दोलाकर्म वितन्वन्ति मनांसि च वपूंषि च ॥२॥

करतलैरुपचायमशेषणै-
रुपचयश्च वनेषु जनेषु च।
सुमनसां मनसामपि यद्दिने
विरचयन्ति विलोलविलोचनाः ॥३॥

---

(घ) सन्ततेति सन्ततं निरन्तरम् आकुञ्चितम् आनमित पञ्चशरस्य कामस्य यत् शरासन धनुः तस्य शरासारेण शरवर्षणेन वञ्चितः स्थगित इति यावत् सञ्चारो गतिर्येषां तथाभूताः पथिकप्रपञ्चाः पान्थसङ्घाः यस्यां तथोक्ता।

(ङ) प्रमदेति प्रमदेन उल्लासेन चञ्चलम् अस्थिर यत् चञ्चरीककुल भ्रमरवृन्द तेन कञ्चुकिता आवृता माधवी लताविशेषः यस्यां तादृशी।

(च) माधवी मधोर्वसन्तस्य इयं माधवी वासन्तीत्यर्थः भूतिः श्रीः शोभेति यावत् उदजृम्भत आविरभूत्।

यत्रेति। यत्र वसन्ते कान्तैः वियुक्तानां विरहितानां युक्तानां सङ्गतानामपि सुभ्रुवां नारीणां मनांसि च वपूंषि शरीराणि च दोलाकर्म दोलनकार्यं वितन्वन्ति विस्तारयन्ति यथाक्रममिति भावः। तथाच कान्तविरहिण्यः मनसि किं कर्त्तव्यं कथमिदानीं स्थास्यामि कुलानुसारिणी अथच किं कुलेन पुरुषान्तरमाश्रयामीत्येवमान्दोलनं कुर्वन्ति। अविरहिण्यस्तु कान्तैः दोलायन्त्रमधिरुह्य अङ्गानि आन्दोलयन्तीति भावः। अनुष्टुब्वृत्तम् ॥२॥

करतलैरिति। अथ किञ्च यद्दिने यस्य वसन्तस्य दिने विलोल-

असमशरसमरसमये (छ) पम्पां समन्तात् पर्य्यटन् आकुलहृदयो हृदयदयितां हृदि लक्षयन् लक्ष्मणमिद-मभाषत ।

आधौ सिद्धौषधिरिव हिता केलिकाले वयस्या
पत्नी त्रेता यजनसमये क्षत्रियाण्येव युद्धे ।
शिष्या देवद्विजपितृसमाराधने बन्धुरार्त्तौ
सीता सा मे शिशिरितमहाकानने का न जाता ॥४॥

मलयगिरिचरोऽयं मन्मथाधोरणाज्ञा-
मथितपथिकवर्गो मारुतव्याजहस्ती ।

---

विलोचनाः चञ्चलनयना. नार्य्यः वनेषु करतलैः सुमनसां पुष्पाणाम् उपचयं चयन जनेषु च ईक्षणैः नयनैः अपचयं मनसो विचलनं विरचयन्ति । द्रुतविलम्बितं वृत्तम् ॥३॥

(छ) असमशरेति असमशरस्य कामस्य समरसमये युद्धकाले ।

आधाविति । सा सीता शिशिरितं स्वसन्निधानादिति भावः महत् काननं तस्मिन् मे मम का न जाता ? तथाहि आधौ मनः-पीडायां हिता हितकारिणी आधिनाशिनीति भावः सिद्धौषधि-रिव सिद्धा प्रसिद्धिं गता औषधिरिव, केलिकाले क्रीडाया वयस्या सखी, त्रेता अग्नित्रयं, गार्हपत्यो दक्षिणाग्निराहवनीयस्त्रयोऽग्नयः । अग्नित्रयमिदं त्रेतेत्यमरः । तथा यजनसमये यज्ञकाले पत्नी सह-धर्म्मचारिणी सस्त्रीको धर्म्ममाचरेदिति शास्त्रात् युद्धे क्षत्रियाणी एव वीराचारवतीति भावः । देवानां द्विजानां पितृणां समाराधने शिष्या अन्तेवासिनी, आर्त्तौ विपदि बन्धुः । शार्दूलविक्रीडितं वृत्तम् ॥३॥

मलयेति । अयं मलयगिरिचरः मलयपर्वतसञ्चारी मन्मथः काम एव आधोरणः हस्तिपकः, आधोरणा हस्तिपका इत्यमरः । तस्य

विरचयति मदीये शैत्यसौरभ्यमान्द्य-
त्रिविधमदसमृद्धो मानसे वप्रलीलाम् ॥५॥

एवं दुःसहविरहकृशानुकृशानुभावं (ज) भावसन्धुक्षण-विचक्षणलक्ष्मणवचनधार्य्यमाणधैर्य्यं (झ) राघवमग्रतः सुग्रीवो विलोक्य वालिप्रणिहितापसर्पधिया (ञ) सुदूरमपससर्प (ट)। स तु समन्त्रमन्त्रिभिस्तयोराशयमवजिगमिषुराञ्जनेयं प्रभञ्जनसञ्जातं (ठ) प्राहिणोत्।

---

आशया मथितः सम्पीडितः पान्थवर्गो येन तथोक्तः, शैत्यं सौरभ्यं मान्द्यञ्च तत् शैत्यसौरभ्यमान्द्यं तेन त्रिविधेन मदेन समृद्धः समुत्तेजितः मारुतव्याजहस्ती पवनरूपमातङ्गः मदीये मानसे वप्रलीलाम् उत्खातकेलिम्, उत्खातकेलिः शृङ्गाद्यैर्वप्रक्रीडा निगद्यते इति। विरचयति करोति। मम मानसं नितरां व्यथयतीति यावत्। अत्र प्रकृतस्य मलयमारुतस्य प्रतिषेधेन हस्तिस्थापनात् अपह्नुतिरलङ्कारः। तदुक्तं दर्पणे। प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिरिति। मालिनीवृत्तम् ॥५॥

(ज) दुःसहेति दुःसहेन सोढुमशक्येन विरहकृशानुना विच्छेदानलेन कृशः क्षीणः अनुभावः प्रभावः यस्य तादृशः तम्।

(झ) भावेति भावस्य आशयस्य सन्धुक्षणेन समुत्तेजनेन विचक्षणलक्ष्मणस्य वचनेन धार्य्यमाणं धैर्य्यं यस्य तथोक्तम्।

(ञ) वालीति वालिना वानरराजेन प्रणिहितः प्रेरितः अपसर्पः चरः तस्य धीः तया हेतुना।

(ट) अपससर्प पलायितः।

(ठ) तयोः रामलक्ष्मणयोः आशयं भावम्। अवजिगमिषुः जिज्ञासुः। आञ्जनेयम् अञ्जनासुतं प्रभञ्जनसञ्जातं, वायुजातं हनूमन्तमित्यर्थः।

तपनपवनयोर्यः प्राप्तवान् पुत्रभावं
शतमखकृतत्राणो विद्यया जन्मना च ।
स तु दशमुखकीर्त्तिस्तोमसोमस्य पक्ष
श्चरम इव तनूमान् प्राप राम हनूमान् ॥६॥

स एव स्वीकृतभिक्षुकवेषः सविनयमेतौ आबभाषे । भवन्तौ कतरौ कान्ताकारौ (ड) कान्तार कथमिदमवातरतां (ढ) विचित्रतरजिष्णुकोदण्डमण्डितावपि (ण) दिनस्यास्य सुदिनत्वाद्भवन्तौ न जीमूतौ (त) जटावल्कलयुतावपि जङ्गमत्वाद्भवन्तौ न कल्पवृक्षौ तमोपहालोकललितावपि (थ) यौगपद्यभास्करसान्निध्याद्भवन्तौ न पुष्पवन्तौ(द) ।

---

तपनेति । य विद्यया जन्मना च तपनपवनयोः सूर्य्यमरुतोः पुत्रभाव पुत्रत्व प्राप्तवान् सूर्य्यसकाशात् शिक्षितविद्यः पवनात्मजश्चेत्यर्थः शतमखेन इन्द्रेण कृत दत्त इति यावत् त्राण अस्त्रविद्येति भावः यस्य तथाभूत, स तु दशमुखस्य रावणस्य कीर्त्तिस्तोमः यशोराशिरेव सोमश्चन्द्रः तस्य तनूमान् शरीरी चरमः पक्ष इव कृष्णपक्ष इव रावणयशोविच्छेत्तेति भावः हनूमान् राम प्राप । मालिनीवृत्तम् ॥६॥

(ड) कान्ताकारौ मनोहराकृती ।

(ढ) अवातरता प्राविशताम् ।

(ण) विचित्रेति विचित्रतराभ्याम् अतिविचित्राभ्यां जिष्णुभ्यां जयसाधनाभ्यां कोदण्डाभ्यां धनुर्भ्यां मण्डितौ अलङ्कृतौ ।

(त) जीमूतौ मेघौ ।

(थ) तमोपहेति तमोपहेन ध्वान्तविध्वंसिना आलोकेन तेजसा ललितौ सुन्दरौ ।

(द) यौगपद्येति यौगपद्येन समकालत्वेन भास्करयोः सूर्य्ययोः

कुशस्तम्बेऽपि सम्भूतं सौरभ्यमिव भासते ।
तपोवेषेऽपि सौन्दर्यं युवयोर्युवयोगिनोः ॥७॥
युष्मद्वार्त्तासुधास्वादलुब्धयोः श्रोत्रयोः सुखम् ।
स्वयमेव ग्रहीतुं मे जिह्वा प्रह्वा प्रवर्त्तते ॥८॥

कश्चिदस्ति समस्तवानरपतिः सुग्रीव इति तेन भ्रातृभयादृष्यमूकमुपाश्रितेन युवाभ्यां सह सख्यमिच्छता प्रेषितं हनुमदभिधानं दधानं भिक्षुरूपप्रतिच्छन्नं (ध) वानरमिमम् आञ्जनेयं प्रभञ्जनसञ्जातं जानीतमिति । ततस्तदीयं वचनमाकर्ण्य कर्णयुगलसुधावर्षि देवर्षिप्रतिमो (न) दाशरथिस्तद्दर्शितेन पथा तमुपाश्रित्य विरचितभुवनसौख्यं सख्यं तपनतनयेन साकं (प) मग्निसाक्षिमकरोत् ।

---

साक्षिध्यात् सन्निधानात् सन्निधानदर्शनादिति भावः पुष्पवन्तौ मिलितौ दिवाकरनिशाकरौ ।

कुशेति । युवानौ योगिनौ तयोः युवयोः तपोवेषेऽपि सौन्दर्यं कुशस्तम्बेऽपि सम्भूतं सौरभ्यमिव भासते राजते । कुशस्तम्बे सौरभ्यस्य सर्वथैवासम्भव इव तापसस्य सौन्दर्यासम्भवेऽपि युवयोस्तत्सम्भव इति महद् वैचित्र्यमिति भावः । अनुष्टुब्वृत्तम् ॥७॥

युष्मदिति । मे मम जिह्वा युष्माकं वार्त्ता वृत्तान्त एव सुधा अमृतं तस्या आस्वादे लुब्धयोः लोलुपयोः श्रोत्रयोः कर्णयोः सुखं स्वयमेव ग्रहीतुं प्रह्वा नम्रा तत्परेति यावत् प्रवर्त्तते । युष्मद्वार्त्ताश्रवणे मम स्वत एव प्रवृत्तिर्भवतीति भावः ॥८॥

(ध) हनुमदभिधानं हनुमन्नाम दधानं धारयन्तम् । भिक्षुरूपप्रतिच्छन्नं भिक्षुकवेषम् ।

(न) देवर्षिप्रतिमः देव ऋषिः देवर्षिः तत्प्रतिमः तत्सदृशः ।

(प) तपनतनयेन सूर्यसुतेन सुग्रीवेणेत्यर्थः, साकं सह ।

योगं वितन्वति हनूमति राघवस्य
वैवस्वतेन हरिणा समवर्त्तिना च ।
मेने विधिर्घटयितुं हरिमिन्द्रपुत्रं
वैवस्वतेन हरिणा समवर्त्तिना च ॥९॥

ततस्तत्क्षणं सम्भूतविस्रम्भाय (फ) प्रतिश्रुतबालिबधाय कथितनिजदशाय दाशरथये सुग्रीवो दशग्रीवनीयमानसीतापातितानि कानिचिदाभरणान्यदर्शयत् ।

प्रत्यर्पितानां कपिपुङ्गवेन
रामः स्वकान्ताधृतभूषणानाम् ।
संस्काररहान्या परिधूसराणां
प्रक्षालनं वाष्पजलैश्चकार ॥१०॥

---

योगमिति । हनूमति वैवस्वतेन सूर्य्यपुत्रेण समवर्त्तिना सदाचारवतेत्यर्थः हरिणा वानरेण सुग्रीवेणेत्यर्थः योगं सख्यं वितन्वति विस्तारयति सति विधि विधाता इन्द्रपुत्रं हरिं वानरं बालिनमित्यर्थः समवर्त्तिना अपक्षपातिना वैवस्वतेन सूर्य्यतनयेन हरिणा यमेन घटयितुं सङ्गमयितुं मेने इच्छति स्मेत्यर्थः । वसन्ततिलक वृत्तम् ॥९॥

(फ) सम्भूतविस्रम्भाय सञ्जातप्रत्ययाय ।

प्रत्यर्पितानामिति । रामः कपिपुङ्गवेन वानरराजेन प्रत्यर्पितानां संस्काररहान्या संस्करणाभावेन परिधूसराणां मलिनानां स्वकान्तया धृतानां भूषणानां वाष्पजलैः प्रक्षालनं चकार । इन्द्रवज्रावृत्तम् ॥१०॥

ततः सौमित्रिभणितनिर्बन्धसन्धुक्षितधैर्य्येण (व) रामेणानुयुक्तो (भ) वालिवैरकारणं भानुसूनु(म)रित्थमकथयत्। पुरा खलु निखिलरिपुकुलतिमिरनिचयमरीचिमालिनं (य) वालिनं मायावी नाम दानवः कश्चन दुन्दुभे(र)र्भ्राता रुद्ध्वा (ल) तद्बलचकितधृतिरुरगनगरकुहरमगाहत (व)। तदनुगाहमानेन मानशालिना (श) वालिना विलमुखपालनाय निहितस्तस्योत्थानवेलां प्रतिपालयन्निह (ष)

---

(व) सौमित्रीति सौमित्रिणा लक्ष्मणेन भणितेन उक्तेन निर्बन्धेन आग्रहवद्वचनेन सन्धुक्षित सन्दीपितं धैर्य्यं यस्य तादृशेन।

(भ) अनुयुक्तः पृष्टः।

(म) भानुसूनुः सुग्रीवः।

(य) निखिलेति निखिलानि समस्तानि रिपुकुलानि शत्रुकुलानि एव तिमिरनिचयाः अन्धकारसमूहाः तेषां मरीचिमाली सूर्य्यः तं सर्वशत्रुघातिनमिति यावत्।

(र) दुन्दुभेः तदाख्यदानवस्य।

(ल) रुद्ध्वा अनुरुध्य आहूयेति यावत्।

(व) तद्बलेति तस्य वालिनः बलेन चकिता शङ्किता धृतिः धैर्य्यं यस्य तथाभूतः। उरगनगरकुहरं पातालम्। अगाहत प्रविष्टवानित्यर्थः।

(श) तदनुगाहमानेन तदनुसारिणा। मानशालिना अतिमानिना।

(ष) विलमुखपालनाय विलस्य गह्वरस्य मुखं विलमुखं तस्य पालनाय रक्षणाय यदि विलमुखात् पुनः स पलायते इति तत्पर्य्यवेक्षणायेति भावः। निहितः स्थापितः। तस्य वालिनः।

चिरकालेऽप्यतीते फेनस्यान मांसनिःसृतमसृक्पूर(ज)मवेक्ष्य भ्राता मे निहत इति निरचिनवम् (झ)। तदनु विपुलोपलपटलपिहितबिलमुखः सबलीमुखबलस्तस्मै (ञ) दत्त्वा स्वयमुदस्रुरुदकनैवापमवापं (क) शोकान्धः किष्किन्धाम्। अथ विदितवृत्तान्तैरमात्यैरभिषेचिते मयि मायाविनं निहत्य खरतरभुजपरिघविघट्टितबिलवदनपिधानस्तरसा (ख) रसातलात् पुरं प्रविष्टोऽतीव रुष्टः प्रभ्रष्टाशयः (ग) बहुशः प्रणिपतन्तं प्रतिपादितयाथातथ्यं (घ) मां नगरा-

---

उत्थानवेला शत्रुजयानन्तर प्रत्यावर्त्तनसमयम्। प्रतिपालयन् प्रतीक्षमाणः।

(ज) फेनस्यान फेननिचितम्। मांसनिःसृतं मांसनिर्गलितम् असृक्पूरं शोणितप्रवाहम्।

(झ) निरचिनवं निश्चितवानस्मि।

(ञ) तदनु तदनन्तरम्। विपुलेति विपुलेन महता उपलपटलेन प्रस्तरसङ्घेन पिहितम् आच्छादितं बिलस्य मुखं येन तथोक्तः। सबलीमुखबलः वानरसैन्यसमेत। तस्मै बालिने।

(क) उदस्रु उद्वाष्पः। उदकनैवापं तर्पणाञ्जलिमिति यावत् अवापं प्राप्तवानस्मि।

(ख) खरतरेति खरतरेण तीक्ष्णतरेण भुजपरिघेण बाहुदण्डेन विघट्टितं दूरीकृतं बिलवदनस्य गह्वरमुखस्य पिधानम् आच्छादनं येन तथाभूतः। तरसा बलेन।

(ग) प्रभ्रष्टाशय. प्रभ्रष्टः आशयः मनसो भावः यस्य तादृशः भिन्नमना इत्यर्थः।

(घ) प्रतिपादितेति प्रतिपादितं बोधितं याथातथ्यं तत्त्वं येन तादृशम्।

न्निरागसमपि (ङ) निरकासयत्। तदनु तदनुधावनात् क्कान्दिशीकस्य (च) मम पर्वतेऽस्मि(छ)न्नकुतोभयसञ्चारकारणमाकर्ण्य तां पुरैकदा बालिनमतुलभुजबलमखिलकुलाचलचलनचतुर (ज) चतुरर्णवलङ्घनजङ्घाल (झ) दुन्दुभिर्नाम वृन्दारकारिर्लुलायकायः (ञ) परिभूय समरे समतिष्ठत। निहतस्य तस्य (ट) शवं बाहुबलावलेपेन बाली सकललोक-विलयविलोलदनिल-बलचलितलघुतूललीलया मतङ्गाश्रमक्षितौ (ठ) क्षिप्रमक्षिपत्।

---

(ङ) निरागसं निरपराधम्।

(च) तदनुधावनात् तस्य बालिनः पश्चादभिद्रवणात्। कान्दिशीकस्य कस्यां दिशि गन्तव्यमिति अजानत इत्यर्थः।

(छ) पर्वतेऽस्मिन् ऋष्यमूके इत्यर्थः।

(ज) अखिलेति अखिलानां सर्वेषां कुलाचलानां, महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः। विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वता इत्युक्तानां सप्तानां पर्वतानां चलने कम्पने चतुरः शक्त इति यावत् तम्।

(झ) चतुरर्णवेति चतुर्णाम् अर्णवानां समुद्राणां लङ्घने जङ्घालं प्रशस्तजङ्घाशालिनम् अर्णवलङ्घनक्षममिति यावत्।

(ञ) वृन्दारकारिः देवशत्रुः। लुलायकायः महिषाकृतिः।

(ट) तस्य दुन्दुभेः।

(ठ) सकलेति सकलानां लोकानां विलये विध्वंसे विलोलन् वहन् यः अनिलः वायुः तस्य बलेन चलितस्य लघोः तूलस्य लीलया आनुरूप्येणेति भावः। मतङ्गेति मतङ्गस्य तदाख्यस्य मुनेः आश्रमक्षितौ आश्रमदेशे।

तत्र बालिकरनुन्ननिष्पतद्-
दुन्दुभिप्रसृतरक्तबिन्दुभिः।
पाटलं तदभवन्मुनेर्वनं
तस्य वक्त्रमपि रोषपाटलम् ॥११॥

ततो मतङ्गशापबलादबालिवश्यमृष्यमूकं विमृश्या(ङ)-
स्मिन् विस्मृतपुरनिवाससुखे सुचिरं निवसति सति मयि।

अयमसुखयदेव देव। धीमान् हनूमान्
रिपुरिति भवतोऽपि त्रस्तमस्तौजसं माम्।
दवहुतवहधूमस्तोम इत्यम्बुवाहा-
च्चकितमिव मयूरं मारुतो वारिशीतः ॥१२॥

---

तत्रेति। तत्र क्षितौ बालिनः करेण नुन्नात् निक्षिप्तात् निष्पततः दुन्दुभेः दुन्दुभिशवादित्यर्थः प्रसृतैः निर्गलितैः रक्तबिन्दुभिः तत् मुनेः वनं पाटलं रक्तं, तस्य मुनेः वक्त्रमपि वदनमपि रोषेण क्रोधेन पाटलं रक्तं अभवत्। रथोद्धतावृत्तं, रात् परैर्नरलगैरथोद्धतेति तल्लक्षणात् ॥११॥

(ङ) मतङ्गेति मतङ्गस्य शापः, येन मे आश्रमक्षेत्रमेवं रक्तदूषितं कृतं सोऽत्रागत एव छिन्नशिराः पतेदित्येवंरूपः, तस्य बलात् प्रभावात्। अबालिवश्यं बालिना आगन्तुमशक्यमिति भावः। विमृश्य विविच्य।

अयमिति। हे देव! अयं धीमान् सुबुद्धिर्हनूमान् दवहुतवहधूमस्तोमः दावाग्निधूमराशिः इति शियेति शेषः अम्बुवाहात् मेघात् चकितं भीतं मयूरं वारिशीतः जलशीतलः मारुतः वायुरिव रिपुः शत्रुरिति धियेति शेषः भवतोऽपि त्रस्तं शङ्कितम् अस्तौजसं दुर्बलं माम् एव इत्थं तव सङ्गमनेनेति भावः असुखयत् सुखीचकार। उपमालङ्कारः। मालिनीवृत्तम् ॥१२॥

श्रुत्वाथ रामः शोकोदग्रां सुग्रीवगिरं यथेवं महाभाग ! मा भैषी(ढ)र्मम शिलीमुख(ण) एव बलीमुखस्य (त) तस्यासून् कालक्षेपमपास्य (थ) पास्यतीत्युक्त्वा तत्प्रत्ययार्थं (द) पादाङ्गुष्ठेन प्रेरितदुन्दुभिकलेवरस्तत्कर्मणाप्यतृप्तस्य सुग्रीवस्य (ध) प्रार्थनया सप्तभुवनभवनस्तम्भसम्भावनया किल सप्तधा धात्रा वर्ध्यमानपरिणाहरोहान् (न) सप्तसालानप्यविधेययातुधानकुलविविधवधविधायकेन सायकेन (प) विव्याध। सोऽय सायको निकटगिरिकटकमपि पाटयामास (फ)।

---

(ढ) मा भैषीः भयं मा कुरु।

(ण) शिलीमुखः शरः।

(त) बलीमुखस्य वानरस्य।

(थ) कालक्षेपं कालविलम्बम् अपास्य अकृत्वा शीघ्रमित्यर्थः।

(द) तत्प्रत्ययार्थं तस्य विश्वासार्थम्।

(ध) प्रेरितेति प्रेरितं निःक्षिप्तं दुन्दुभेः कलेवरं येन तथोक्तः। तत्कर्मणापि दुन्दुभिप्रक्षेपेणापि। अतृप्तस्य वालिवधे पारकतां प्रति अविश्वस्तस्येति भावः।

(न) सप्तेति सप्तानां भुवनानां भूरादीनां स्तम्भा एते भवन्त्विति सम्भावनया मननेन वर्ध्यमानः वृद्धिं नीयमानः परिणाहरोहः विशालताविस्तारः येषां तान्।

(प) अविधेयेति अविधेयानाम् अवश्यानां दुर्विनीतानामिति यावत् यातुधानानां राक्षसानां कुलस्य विविधः नानाप्रकारः यो वधः हत्या तस्य विधायकेन साधकेन। सायकेन शरेण।

(फ) निकटगिरिकटकं सन्निहितपर्वतनितम्बम्। पाटयामास बिभेद।

निर्भिन्नसालकटकोऽस्मि यथा तथा त्वं
पौलस्त्यसालकटकं युधि पाटयेति ।
ऊचे शिलादलनजातरवेण नूनं
तस्मै बलीमुखवराय शिलीमुखः सः ॥१३॥

ततस्तत्प्रत्याहूतेन पुरुहूततनुजेन (व) सार्द्धं तस्य तलातलयुद्धे (भ) प्रवृत्ते सति सज्जनदुर्जनयोर्भेदं रूपतो(म)ऽपि विवेक्तुमक्षमतया मनसि विचारयन् सदसि वाचं-यमतामुपेत इव (य) वाग्मी तयो(र)रप्येकवेषकर्मणो-

---

निर्भिन्नेति । स शिलीमुखः शरः अस्मि अहं यथा निर्भिन्नं पाटितं सालकटकं वृक्षमण्डलं येन तथाभूतः, तथा त्वं युधि पौलस्त्यस्य सालकटकं प्राकारदुर्गं, प्राकारो वरणः सालः इत्यमरः । पाटय खण्डय इति शिलादलनजातरवेण पर्वतभेदनसञ्जातध्वनिना तस्मै बलीमुखवराय सुग्रीवाय ऊचे अब्रवीत् इति नूनम् उत्प्रेक्षे । वसन्ततिलकं वृत्तम् । उत्प्रेक्षालङ्कारः ॥१३॥

(व) तत्प्रत्याहूतेन तेन सुग्रीवेण प्रत्याहूतः प्रातिकूल्येन युद्धार्थमिति भावः आहूतः तेन । पुरुहूततनुजेन इन्द्रतनयेन बालिनेत्यर्थः ।

(भ) तस्य सुग्रीवस्य । तलातलेति तलैश्च तलैश्च प्रहृत्य यत् वृत्तं तत् तलातलं तच्च तत् युद्धञ्चेति तस्मिन् ।

(म) रूपतः आकृतेः ।

(य) सदसि सभायाम् । वाचंयमतां तूष्णीम्भावम् उपेत इव प्राप्त इव ।

(र) तयोर्बालिसुग्रीवयोः ।

र्भेदमनवगच्छन्नमुक्तशरो(ल)ऽभूद्दाशरथिः। सुग्रीवस्तु वालि-बलासहनतया लब्धदैन्यो वदान्य इव मार्गणापातमार्गे (व) सदा चक्षुर्विक्षिपन्नपगतधृति(श)रतिदूरमपासरत्। तमे-न(ष)मृष्यमूके मूकवत्त्रपया निषस्स (स) विषस्सहृदय दया-लुरालोक्य त्रैलोक्यैकधन्वी रामस्तद्भेद(ह)मवगन्तुकामः काममभिज्ञानमाला (क्ष) सुग्रीवग्रीवाया बाणनिवारण-निपुणां (क) सिद्धौषधिमिव बद्धा भूयोऽपि वालिनमाह्वा-यायाह्वयेति तमादिदेश। पुनरप्यवाप्य किष्किन्धां पर्जन्य इव (ख) गर्जति तस्मिन्(ग) सुत्रामपुत्रस्ताराभिहितां हि-

---

(ल) अनवगच्छन् अजानन्। अमुक्तशरः अनिक्षिप्तशरः।

(व) लब्धदैन्यः प्राप्तदारिद्र्यः। वदान्य इव दातेव। मार्गणस्य शरस्य आपातमार्गे आगमनपथे।

(श) अपगतधृतिः विगतधैर्य्यः।

(ष) तम् एन सुग्रीवम्।

(स) त्रपया लज्जया निषस्सं क्षुब्धम्।

(ह) तद्भेद तयोर्वालिसुग्रीवयोर्भेदम्।

(क्ष) अभिज्ञानमालाम् अभिज्ञायते अनेनेति अभिज्ञान सोऽय-मिति प्रत्यायक चिह्नं माला ताम्।

(क) बाणनिवारणनिपुणा शरापातनिवारणीमिति यावत्।

(ख) पर्जन्य इव मेघ इव।

(ग) तस्मिन् सुग्रीवे।

तोक्ति(घ)मतिक्रम्य दुरतिक्रमतया नियतेः (ङ) समारब्ध-समरो दाशरथिशरशकलीकृतवक्षःस्थलः (च) क्षितितले सहसा पपात। अथ विदितवृत्तान्ता सन्तताश्रुनिष्यन्द-कलुषिततारा (छ) तारानगरान्निर्गत्य वारिवारितं (ज) वारणयूथपतिमिव सुग्रीवनिर्भयनिरीक्ष्यमाण(झ)मुन्नतग्रीव-मुत्थातुमक्षमतया क्ष्मातलार्पितकूर्परयुगलं (ञ) गलगल-दस्रकपूरशारशरीरं (ट) शरासनशिखरनिन्यस्तहस्तेन सन्नि-

---

(घ) इन्द्रात्मपुत्रः इन्द्रात्मजः बालीत्यर्थः। ताराभिहिता तारया स्वमहिष्या अभिहिता उक्ता, मा युद्धाय गच्छ अशुभलक्षणा इत्येवमुक्तामिति यावत्। हितोक्तिं हितवाक्यम्।

(ङ) नियतेर्दैवस्य।

(च) दाशरथीति दाशरथेः शरेण शकलीकृतं विदीर्णं वक्षःस्थलं यस्य तथाभूतः।

(छ) सन्ततेति सन्ततानाम् अविच्छिन्नानाम् अश्रूणां निष्यन्देन पातेन कलुषिता आविलिता तारा नेत्रकनीनिका, तारकाक्ष्णः कनीनिकेत्यमरः। यस्याः तथाविधा।

(ज) वारिवारितं वारिर्गजबन्धनी तया वारितं प्रतिबद्धसामर्थ्य-मिति यावत्, वारी तु गजबन्धनीत्यमरः। वार्य्यर्गलाभङ्ग इव प्रवृत्त इति रघुवंशे कालिदासः।

(झ) सुग्रीवेति सुग्रीवेण निर्भयं यथा तथा निरीक्ष्यमाणं निहतत्वादिति भावः।

(ञ) क्ष्मातलेति क्ष्मातले भूमौ अर्पितं पातितं कूर्परयुगलं कफोणिद्वयं येन तथोक्तम्।

(ट) गलेति गलात् कण्ठात् गलता स्रवता अस्रकपूरेण रक्त-प्रवाहेण शारं शबलं शरीरं यस्य तथोक्तम्।

कर्षस्थितेन (ठ) काकुत्स्थेन कृतसल्लापमपेताडम्बर(ड)मि-
वाम्बुधिमस्तोन्मुखमिव मयूखमालिन (ढ) वालिनमा-
लिङ्ग्य स्वाङ्कोत्तसिततदुत्तमाङ्गा (ण) रघुनाथमित्यमक-
थयत् ।

कारुण्यं निरवधि यत्तव प्रसिद्धं
शीतांशोः सहजमिवार्त्तिहारि शैत्यम् ।
तत्सर्वं मनुकुलनाथ ! रम्यकीर्त्ते !
मत्पापात्कथय कथं त्वया निरस्तम् ॥१४॥

---

(ठ) शरासनेति शरासनस्य धनुषः शिखरे विन्यस्तः अर्पितः हस्तो येन तथोक्तः तेन । सन्निकर्षस्थितेन समीपवर्त्तिना ।

(ड) कृतसल्लापं कृतशिष्टालापम् । अपेताडम्बरम् आडम्बर-हीनम् ।

(ढ) अस्तोन्मुखम् अस्ताचलगमनोन्मुखं मयूखमालिनं सूर्य्यम् ।

(ण) स्वाङ्केति स्वस्य अङ्केन क्रोडेन उत्तंसित गृहीत तस्य वालिनः उत्तमाङ्गं शिरः यया तादृशी ।

कारुण्यमिति । हे मनुकुलनाथ ! मनुवंशपते ! हे रम्यकीर्त्ते ! शीतांशोश्चन्द्रस्य सहज स्वाभाविकम् आर्त्तिहारि सन्तापहारक शैत्यमिव तव निरवधि अशेषं कारुण्यं कृपालुत्व प्रसिद्ध विख्या-तम् । तत् सर्वं मत्पापात् मदीयभाग्यदोषात् त्वया कथं निरस्तं त्यक्तं कथय । प्रहर्षिणीवृत्तं, त्र्याशाभिर्मनजरगाः प्रहर्षिणीयमिति तल्लक्षणात् ॥१४॥

एवंविधे प्रियतमेऽप्यनपेतजीवां
मां राक्षसीति रघुपुङ्गव ! साधु बुद्ध्वा ।
बाणं विमुञ्च मयि सम्प्रति ताड़कारे !
श्रेयो भवेद्दयितसङ्गमकारिणस्ते ॥१५॥

साधारणी क्षितिभुजां मृगयेति पूर्व-
मुक्तं त्वयैव जनसंसदि सत्यवादिन् !
शाखामृगीं तदिह मारय मां शरेण
को नाम राम ! मृगयुर्दयते मृगीणाम् ॥१६॥

---

एवमिति । हे रघुपुङ्गव ! रघुकुलवृषभ ! एतेन वृषतुल्यबुद्धे-स्तव किमकार्य्यमिति भावः । हे ताड़कारे ! एतेन स्त्रीहत्यायामपि तव घृणा नास्तीति सूचितम् । प्रियतमे प्राणेश्वरे एवंविधे एवमवस्थां गते इत्यर्थः अपि अनपेतजीवाम् अगतप्राणां मां राक्षसीति साधु सम्यक् बुद्ध्वा विज्ञाय सम्प्रति मयि बाणं शरं विमुञ्च त्यज, एवं सति दयितसङ्गमकारिणः कान्तसङ्गविधायिनस्ते तव श्रेयः शुभं भवेत् । वसन्ततिलकं वृत्तम् ॥१५॥

साधारणीति । हे सत्यवादिन् ! त्वयैव पूर्वं जनसंसदि लोकसमाजे मृगया मृगलीकारः क्षितिभुजां राज्ञां साधारणी सामान्यधर्म इति यावत् उक्तं कथितं, तत् तस्मात् हे राम ! शाखामृगीं वानरीं माम् इह अस्मिन् स्थाने मारय जहि, को मृगयुः व्याधः मृगीणां दयते अनुकम्पते ? न कोऽपीत्यर्थः नाम सम्भावनायाम् । मृगयोर्मृगीं प्रति दयाकरणे सम्भावनापि नास्तीति निष्कर्षः । वसन्ततिलकं वृत्तम् । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । तदुक्तं दर्पणे । सामान्यं वा विशेषेण विशेषस्तेन वा यदि । कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते । साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः इति ॥१६॥

सन्त्रस्य पूर्वमसुतस्तव बन्धुरेष
भेजे यथाद्रिमकुतोभयमृष्यमूकम् ।
भर्त्ता ममायमपि राम शरैरभेद्यं
प्राप्तो मदीयहृदयस्थलमद्रिदुर्गम् ॥१७॥
नाहं सुकेतुतनया न च सप्तसाली
बाली च त्रिभुवनप्रथितप्रभावः ।
तारास्मि वज्रहृदया विशिखैरभेद्या
धन्वी कथं भवसि राघव मामविद्ध्वा ॥१८॥
क्षितिपतितनयानां हन्त गर्भेश्वराणां
किमु निरवधिमौग्ध्यं शौर्य्यवज्जन्मसिद्धम् ।

---

सन्त्रस्येति । हे राम ! एष तव बन्धु सुग्रीवः पूर्वम् असुतः असुमात् वालिनः सन्त्रस्य सम्यक् भीत्वा यथा अकुतोभयम् ऋष्यमूकं भेजे, तथा अयमपि मम भर्त्ता बाली शरैरभेद्यं भेत्तुमशक्यं मदीयं हृदयस्थलम् अद्रिदुर्गं पर्वतरूपं शत्रुदुष्प्रवेशस्थानं प्राप्तः । वसन्ततिलकं वृत्तम् ॥१७॥

नाहमिति । अहं सुकेतुतनया ताडका न, सप्तसाली सप्तानां सालानां समाहारः सप्तसाली न च, त्रिभुवने प्रथितः विख्यातः प्रभावः यस्य तथाभूतः बाली न च । हे राघव ! अहं वज्रहृदया अतिकठिनहृदयेति भावः अतएव विशिखैः शरैः अभेद्या भेत्तुमशक्या तारा अस्मि, माम् अविद्ध्वा कथं धन्वी धनुष्मान् भवसि ? नैव धनुष्मानिति त्वां गणयामीति भावः ॥१८॥

क्षितीति । हन्त खेदे । हे रघुवर ! गर्भेश्वराणाम् आजन्मप्रभूणां क्षितिपतितनयानां राजपुत्राणां मौग्ध्यं मूढत्वं शौर्य्यवत् वीर्य्यवत् निरवधि अपारं तथा जन्मसिद्धं किमु ? जन्मावधि

मम हृदि निरपाये वर्त्तमाने कपीन्द्रे
रघुवर! यदमुष्मै तिष्ठसे चापपाणिः ॥१८॥

एव विलपन्त्या हारायिताश्रुधारायाः (त) तारायाः परिदेवनरवैर्वाष्पाम्बुकणाभ्युक्षणैरक्षीणश्वासानिलैश्च (थ) कृताश्वास इव लब्धसंज्ञो वाली निजनन्दनमिक्ष्वाकुनन्दने (द) समर्प्याङ्गदमङ्गसङ्गिनीं काञ्चन काञ्चनमालां (ध) शोकावनतग्रीवाय (न) सुग्रीवाय दत्त्वा निजभुजबलप्रशा-न्तासुरः प्रशान्तासु(प)रभूत्। तत्र हा सकलभुवनबहुमत!

---

एते शौर्यशालिनः रूढास्चेति भावः, यत यतः मम हृदये वर्त्तमाने अतएव निरपाये अलये कपीन्द्रे वानरराजे सति अमुष्मै अमुष्य हृदयस्थितस्य कपीन्द्रस्य बधार्थमिति भाव, क्रियया यमभिप्रैतीत्य-नेनामुष्मै इत्यस्य सम्प्रदानत्वम्। चापपाणिः धनुष्पाणिः सन् तिष्ठसे। मम प्राणेश्वरं बहिःस्थित हतवानसि, हृदयस्थं न कथ-मपि हन्तुं शक्ष्यसीति कथ तव इदानीमपि धनुर्धारणमिति भावः। मालिनीवृत्तम् ॥१८॥

(त) हारायितेति हारायिता हारवदाचरिता अश्रुधारा यस्याः तथाभूतायाः।

(थ) वाष्पेति वाष्पाम्बूनाम् अश्रूणां कणाः तेषाम् अभ्युक्षणैः सेकैः। अक्षीणश्वासानिलैः दीर्घनिःश्वासमारुतैः।

(द) निजनन्दनं स्वपुत्रम्। इक्ष्वाकुनन्दने रामे।

(ध) अङ्गसङ्गिनीं शरीरस्थितां काञ्चन कामपि काञ्चनमालां सौवर्णहारम्।

(न) शोकेति शोकेन अवनता ग्रीवा यस्य तथोक्ताय।

(प) निजेति निजेन भुजबलेन प्रशान्ता निर्जिता इति यावत् असुरा येन तथाभूतः। प्रशान्तासुः गतासुः मृत इत्यर्थः।

बाहुबलानलशलभायिताहितबल। ललितगन्धर्व। गन्धसिन्धुरपञ्चताकरणपञ्चानन। दशमुखभुजभुजङ्गभोगनिरोधायाहितुण्डिकायिबालवलय। (फ) वालिन्! विलय कथ गतोऽसीति वाष्पाविलमुखा (ब) वलीमुखास्तस्य राजाज्ञया यथाभिप्रेत प्रेतकृत्यं सर्वं निर्वर्त्तयामासुः।

अभिषिक्ते तु सुग्रीवे रामश्यामपयोमुचा।
अभिषेक्तु स्थिता मेघास्तन्महीं महिषीमिव ॥२०॥
आर्य्यार्य्यान्वेषणा कार्य्या शरदीत्युक्तसंविदा।
कपीन्द्रेणार्थितो रामः किष्किन्धावर्त्तनं प्रति ॥२१॥

---

(फ) बाहुबलेति बाहुबलमेव अनलः अग्निः तत्र शलभायितं शलभवत् आचरितम् अहितबलं येन तथोक्तः तत्सम्बुद्धौ। ललितगन्धर्व! चारुकृग! गन्धेति गन्धसिन्धुराणां गन्धगजानां पञ्चताकरणे विनाशने पञ्चाननः सिंहः तत्सम्बुद्धौ। दशमुखेति दशमुखस्य भुजा बाहव एव भुजङ्गभोगाः पन्नगदेहाः तेषां निरोधाय बन्धनाय आहितुण्डिकायितम् आचरितं बालवलयं पुच्छमण्डलं यस्य तथाविधः तत्सम्बुद्धौ।

(ब) वाष्पाविलमुखाः अश्रुपूर्णवदनाः।

अभिषिक्ते इति राम एव श्यामपयोमुक् नीलजलधरः तेन सुग्रीवे अभिषिक्ते सिंहासनाधिरूढे (?) तु मेघाः महिषीं राजपत्नीमिव तन्महीं किष्किन्धाभूमिम् अभिषेक्तुं स्थिताः आविर्भूताः। वर्षाकालः समुपस्थित इति भावः। अनुष्टुब्वृत्तम् ॥२०॥

आर्य्येति। हे आर्य्य ... सखे इति यावत् शरदि शरत्काले आर्य्यायाः सीतायाः अन्वेषणा कार्य्या इति उक्तसंविदा कथितप्रतिज्ञेन कपीन्द्रेण सुग्रीवेण रामः किष्किन्धायां वर्त्तनं स्थितिं प्रति अर्थितः याचितः अनुरुद्ध इति भावः ॥२१॥

न योग्या नगरप्राप्तिरित्युक्तवति राघवे।
सुग्रीवप्रार्थनाप्यासीद्भरतप्रार्थना समा ॥२२॥
दत्तार्जुनविकासेन धार्त्तराष्ट्रान्निरस्यता।
तेन जीमूतकालेन देवकीनन्दनायितम् ॥२३॥

तत्र,

आस्माकीं रूपलक्ष्मीमसकृदपहरत्यात्मकान्त्या तदास्तां भर्त्तारं नः सुरेन्द्रं किमपि न गणयन् बालिनं द्राग्जघान इत्थं मत्वेव वैरं झटिति घनघटा राघवस्याहवोत्थामाशामाशास्य रुद्ध्वा स्तनितमिषमहासिंहनादं ततान ॥२४॥

---

नेति। राघवे रामे नगरप्राप्तिः नगरवासः न योग्या नोचिता चतुर्दशवर्षीयवनवासप्रतिज्ञाभङ्गभयादिति भावः, इति उक्तवति सति सुग्रीवस्य प्रार्थनापि भरतस्य प्रार्थनया समा तुल्या आसीत् ॥२२॥

दत्तेति। दत्तः अर्जुनस्य वृक्षविशेषस्य तृतीयपाण्डवस्य च विकासो येन तथाभूतेन धार्त्तराष्ट्रान् हंसविशेषान् दुर्य्योधनादींश्च निरस्यता दूरीकुर्वता वर्षाकाले हंसा भूतलं त्यक्त्वा मानसं सरो यान्तीति प्रसिद्धिः। तेन जीमूतकालेन वर्षाकालेन देवकीनन्दनायितं देवकीनन्दनः कृष्णः तद्वदाचरितम्। यथा देवकीनन्दनः अर्जुनस्य जयं दुर्य्योधनस्य च पराजयं सम्पादयामास, तथा वर्षाकालः अर्जुनवृक्षं विकासयति हंसांश्च दूरीकरोतीति भावः ॥२३॥

आस्माकीमिति। आस्माकीम् अस्मत्सम्बन्धिनीं रूपलक्ष्मीम् आकृतिश्रियम् आत्मकान्त्या निजदेहप्रभया असकृत् पुनः पुनः अपहरति एष इति शेषः, तत् अपहरणम् आस्तां तिष्ठतु, नः अस्माकं भर्त्तारं स्वामिनं सुरेन्द्रं देवराजं किमपि न गणयन् द्राक् झटिति बालिनं तत्पुत्रं जघान हतवान्, इत्थं वैरं निर्द्धार्य [illegible] घनघटा मेघवृन्दं झटिति राघवस्य रामस्य आहवोत्थाम् आशां [illegible] युद्धेच्छाम्

उपचितजीवनधारासत्पथभाजो निरस्तसन्तापाः ।
भूपा इव नवमेघाः पौलस्त्यमहाबलाकुलिताः ॥२५॥

तेन किल रघुपतिरतिमात्रप्रवृद्धमन्युः (भ) शतमन्युशरासनशारशारिततारापथां (म) घनतरघनरवमुखरितहरिन्मुखाभोगां (य) कदम्बवनपवनाकम्पननिराडम्बरकादम्ब-

---

उच्चैः उदितास आशास् आशासु दिशासु रुद्ध्वा आवृत्य आच्छाद्येत्यर्थः स्तनितमिव गर्जितव्याजं महासिंहनाद ततान विस्तृतवान् अनवरतं गर्जितवानित्यर्थः । स्रग्धरावृत्तम् ॥२४॥

उपचितेति । उपचितानि परिपुष्टानि प्रभूतानीत्यर्थः जीवनानि जलानि धारयन्तीति तथोक्ताः सत्पथभाजः प्रशस्तमार्गवर्त्तिनः आकाशसञ्चारिणश्चेति भावः, तथाविधाः पक्षे उपचिताभिः परिपुष्टाभिः जीवनधाराभिः जीवनावस्थाभिरिति भावः सत्पथं शिष्टाचारं भजन्ते इति तथोक्ताः, निरस्तसन्तापाः निरस्तः निवारितः सन्तापः ग्रीष्मजनितः दुःखजनितश्च लोकानामिति भावः यैः तथाविधाः नवमेघाः भूपा इव राजान इव पौलस्त्यस्य पूर्वदिग्भवस्य वायोरिति भावः महाबलेन पक्षे पौलस्त्यस्य रावणस्य महाबलेन आकुलिताः सञ्चालिताः विक्षुभिताश्च । यमकादौ भवेदैक्य डलोर्वबोर्लरोस्तथेति नयेनात्र पौरस्त्येत्यस्य स्थाने पौलस्त्येति पठितं श्लेषानुरोधादिति बोध्यम । आर्य्यावृत्तं, यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये पञ्चदश चतुर्थके सार्य्येति तल्लक्षणात् ॥२५॥

(भ) अतिमात्रेति अतिमात्रं प्रवृद्धः मन्युः शोकः सीताविरहजनित इति भावः यस्य तथोक्तः ।

(म) शतमन्येति शतमन्योरिन्द्रस्य शरासनेन धनुषा शारितं चित्रितं तारापथम् अन्तरीक्षं यस्यां तथाभूताम् ।

(य) घनतरेति घनतरेण गभीरेण घनरवेण मेघनिनादेन मुख-

कुटुम्बा(र)मम्बुदकदम्बकवलिताम्बरां (ल) शिलीन्ध्रसम्बन्ध-बन्धुरवसुन्धरां (व) विकचकुटजनिचयकचचितमहारण्यां प्रावृषेण्यां प्रक्रियां (श) प्रेक्षमाणो लक्ष्मणमिदमभाषत।

अयं कालः कालप्रमथनगलाभैरभिनवै-
रहयूना यूनामपहरति धैर्य्यं जलधरैः।
स्मराधारा धारापरिचयजड़ा वान्ति सहसा
नभस्वन्तः स्वन्तः कथमिव वियोगः परिणमेत् ॥२६॥

---

रित· शब्दित· पूरित इति यावत् हरिन्मुखानां दिङ्मुखानाम् आभोगः विस्तारः यस्या तथोक्ताम्।

(र) कदम्बेति कदम्बवनानां पवनस्य आकम्पनेन निराडम्बरः निरुत्सवः कादम्बकुटुम्बः कलहंसपरिवारः यस्यां तथाविधाम्।

(ल) अम्बुदेति अम्बुदानां मेघानां कदम्बेन समूहेन कवलितं ग्रस्तम् अम्बरमाकाशं यस्या तादृशीम्।

(व) शिलीन्ध्रेति शिलीन्ध्राणां भूमिकदलीविशेषाणां सम्बन्धेन सम्पर्केण प्ररोहेणेत्यर्थः बन्धुरा उन्नतानता वसुन्धरा भूमिः यस्यां ताम्।

(श) विकचेति विकचेन प्रस्फुटितेन कुटजनिचयेन कुटजसमूहेन कचचितम् आवृतं महारण्यं यस्या तथोक्तां प्रावृषेण्यां वार्षिकीं प्रक्रियां व्यापारम्।

अयमिति। अयं कालः वर्षाकालः काले प्रमथ्नाति संहरतीति कालप्रमथनः हरः तस्य गलाभैः नीलैरित्यर्थः अभिनवैः जलधरैः अहयूनाम् अहङ्कारवतां यूनां तरुणानां धैर्य्यम् अपहरति नाशयति। स्मराधाराः कामोद्दीपिनः धाराणां जलसम्पातानां परिचयेन सम्पर्केण जडाः शीतलाः घना वा नभस्वन्तः वायवः सहसा वान्ति वहन्ति, वियोगः स्वन्तः शोभनावसानः सन् कथमिव परिणमेत् परि-

महासमरसूचकः प्रतिदिशं मनोजन्मनो
मयूरगलकाहलीकलकलः समुज्जृम्भते ।
पयोदमलिने दिने परुषविप्रयोगव्यथां
नरेषु वनितासु वा दधति हन्त केका इमाः ॥२७॥

अम्भोधरोदरविनिर्गतवारिधारा-
सम्मर्दमांसलसमीरसमीर्यमाणैः ।
आमोदवीचिनिचयैः कुटजप्रसूनै-
राकाशमेतदवकाशविहीनमासीत् ॥२८॥

---

पाकं गच्छेत्? कथ वियोगमतिवाहयामीति भावः । शिखरिणीवृत्तं, रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणीति तल्लक्षणात् ॥२६॥

महेति । मनोजन्मनः मनसिजस्य महासमरसूचकः महासंग्रामव्यञ्जकः मयूराणां गलाः कण्ठा एव काहल्यः वादित्रविशेषाः तासां कलकलः प्रतिदिशं समुज्जृम्भते समुल्लसति हन्त खेदे । पयोदमलिने मेघावृते दिने नरेषु वनितासु नारीषु वा मध्ये के नराः का नार्यः इति केकाः मयूरनादाश्च परुषां दारुणां विप्रयोगव्यथां विरहपीडां दधति धारयन्ति जनयन्ति च । केका वाणी मयूरस्येत्यमरः । पृथ्वीवृत्तं, जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुरिति तल्लक्षणात् ॥२७॥

अम्भोधरेति । अम्भोधराणां मेघानाम् उदरेभ्यः विनिर्गतानां वारिधाराणां सम्मर्देन मांसलाः परिपुष्टाः ये समीराः वाताः तैः समीर्यमाणैः प्रेर्यमाणैः विस्तारं नीयमानैरित्यर्थः, आमोदाः सौरभाण्येव वीचिनिचयाः तरङ्गसमूहाः तैः, उपलक्षणे तृतीया । कुटजप्रसूनैः कुटजपुष्पैः एतत् आकाशम् अवकाशविहीनं निरवकाशं समाकीर्णमिति भावः आसीत् । वसन्ततिलकं वृत्तम् ॥२८॥

घनश्यामलपत्रस्य व्योमन्यग्रोधशाखिनः ।
प्ररोहा इव लक्ष्यन्ते वारिधारा धरां गताः ॥२९॥

अम्भोधिपाने सलिलेन साक-
मापीतमौर्वाग्निशिखाकलापम् ।
तप्तोदरा वारिधरा वमन्ति
विद्युल्लतोन्मेषमिषेण नूनम् ॥३०॥

इत्थं प्रवृत्तेषु घनदिनेषु (ष) दाशरथिना कथमपि नीतेषु तदाकारकान्तिविजितमिव (स) शनैःशनैर्मेघमण्डलं पाण्डुर(ह)मभूत् । तस्य चापस्य व्यापारवेलायां (क्ष) न

---

घनेति । धरां गताः भूतलप्राप्ताः वारिधाराः, घना मेघा एव श्यामलानि पत्राणि यस्य तथोक्तस्य व्योमन्यग्रोधशाखिनः आकाशवटतरोः प्ररोहा इव लम्बमाना सन्ताना इव लक्ष्यन्ते । उत्प्रेक्षालङ्कारः । अनुष्टुब्वृत्तम् ॥२९॥

अम्भोधीति । वारिधरा मेघाः विद्युल्लतायाः सौदामिन्या उन्मेषमिषेण विकासव्याजेन अम्भोधिपाने समुद्रजलपानसमये सलिलेन साकं सह आपीतम् और्वाग्निशिखाकलापं वाडवानलशिखापुञ्जम् अतएव तप्तोदरा सन्तप्तजठरा वमन्ति उद्गिरन्ति नूनमुत्प्रेक्षे । अत्रापह्नुत्यानुप्राणितोत्प्रेक्षालङ्कारः । इन्द्रवज्रावृत्तम् ॥३०॥

(ष) घनदिनेषु मेघदिवसेषु ।

(स) तदिति तस्य दाशरथेः आकारस्य या कान्तिः श्यामलतेति भावः तया विजितमिव ।

(ह) पाण्डुरं पाण्डुवर्णं विजितस्य तेजोहान्या शरीरस्य पाण्डुता जायते इति भावः ।

(क्ष) तस्य दाशरथेः । चापस्य धनुषः । व्यापारवेलायां प्रकटनसमये ।

सन्निधातव्य(क)मित्यन्तरिक्षान्तरादन्तर्हितं किल पाक-
शासनशरासनम् (ख)।

रघुपतिचापघोषसमयो भवितेति भिया-
ऽप्युपरतमुद्भट घनघटाजनितं स्तनितम्।
श्वसितमरुद्भिरस्य विजित. किल शान्तिमगात्
करिचितकेतकीकुटजनीपवन: पवन: ॥२१॥

तापोपशान्तिनटनात् कृतलोकहर्षा
वर्षानटी गगनरङ्गतलात् प्रयाता।
अम्भोदवाद्यमचिरेण शशाम सर्वं
निर्वापिताश्च सहसैव तडित्प्रदीपा: ॥२२॥

---

(क) सन्निधातव्य न समुपस्थातव्य पराजयभयादिति भाव:।

(ख) पाकशासनशरासनम् इन्द्रधनु। शरत्काल: प्रवृत्त इति भाव।

रघुपतीति। रघुपते रामस्य चापस्य धनुष: घोषसमय निनादकाल: भविता इति भिया भयेन घनघटाभिर्मेघवृन्दै: जनित स्तनितं गर्जितम् उद्भटमपि उत्कटमपि उपरतं निवृत्तम्। परिचितं सम्पृक्तं केतकीना कुटजाना नीपाना कदम्बानाञ्च वन येन तथाभूत· केतकी-कुटजनीपसम्पर्कवानित्यर्थ· पवन· अस्य रघुपते. श्वसितमरुद्भि: नि:श्वासवायुभि: विजित किल शान्तिम् अगात् शशाम। नर्दटकं वृत्तं, यदि भवतो नजौ भजजला गुरुनर्दटकमिति तल्लक्षणात् ॥२१॥

तापोपशान्तीति। तापस्य घोष्मजनितस्येति भाव· उपशान्ति: उपशमन तस्य नटनात् सम्पादनात् तापोपशान्तिजनकनर्त्तनाच्च कृत: लोकाना जगतां दर्शकानाञ्च हर्ष· आनन्द: यया तथोक्ता वर्षा-नटी वर्षारूपनर्त्तकी गगनमेव रङ्गतल न्रत्यस्थल तस्मात् प्रयाता

क्रमेण वाहिनीजातं (ग) समलं भाविनीं वानरवाहिनीपूर्त्ति(घ)मसहमानमिव तनिमान(ङ)मभजत। दुर्दिनापाये (च) लङ्कायामपि राजहंसनिःशङ्कसञ्चार (छ) सम्भविष्यतीति मत्वा किल भूम्यामपि समजनि राजहंसनिःशङ्कसञ्चारः (ज)। एवं प्रोषितायामपि प्रोषितजनप्रमुषीमुषि (झ) प्रावृषि।

---

ध्वनिता। अचिरेण तत्क्षणमेव सर्वम् अम्भोदवाद्यं घनगर्जनमिति भावः प्रशाम निवृत्तम्। सहसैव तडित्प्रदीपाः विद्युत एव दीपाः निर्वापिताश्च निर्वाणं नीताश्च। रूपकमलङ्कारः। वसन्ततिलकं वृत्तम् ॥२२॥

(ग) वाहिनीजातं नदीसमूहः।

(घ) भाविनीं भविष्यन्तीं वानरवाहिनीपूर्त्तिं कपिसेनाप्रवाहम्।

(ङ) तनिमानं क्षीणताम्।

(च) दुर्दिनेति दुर्दिनस्य मेघाच्छन्नदिवसस्य दुःसमयस्य च अपाये अवसाने शरदागमे इत्यर्थः पक्षे राक्षसकुलावसाने इत्यर्थः।

(छ) राजहंसस्य राजश्रेष्ठस्य रामस्येत्यर्थः अथच राजहंसानां राजश्रेष्ठानां रावणपराजितानामिति भावः निःशङ्कसञ्चारः निर्भयविचरणम्।

(ज) राजहंसेति राजहंसानां वर्षासु मानसं गतानामिति भावः निःशङ्कसञ्चारः वार्षिककलुषितजलपानशङ्कारहितं जलविचरणमिति यावत्।

(झ) प्रोषितायां निर्गमितायाम् अवसितायामिति यावत्। प्रोषितेति प्रोषितानां प्रवासिनां विरहिणामिति भावः प्रेत्यामुषि प्रमाहारिण्यां विमोहजनन्यामिति भावः।

कामच्छिन्नपृषत्कभिन्नहृदयच्छिद्रप्रणालीगल-
न्मैत्रीसारलघौ प्रतिश्रुतगिरन्निर्वोढुमप्यक्षमे।
सुग्रीवे चिरसञ्चितां प्रशमयितुं रागान्धतां तादृशीं
किष्किन्धां द्रुतमाप कोपकलुषो रामाज्ञया लक्ष्मणः ॥२२॥

तत्र सौमित्रिरतीवरुष्टः प्रविष्ट इत्यङ्गदेन विज्ञापितो ऽप्यनङ्गसङ्गरसङ्गतपरिश्रमादजातजागरः (ञ) सुग्रीवस्तद्दर्शनत्राससङ्कलितसकलप्लवङ्गकुलकिलकिलायितेन प्रबुद्धः(ट)

---

कामेति। कोपकलुषः कथं सुग्रीवः गतेष्वपि घनकालेषु अस्माकं वार्त्तामपि न नयतीति क्रोधेनाविलचेताः लक्ष्मणः रामस्य आज्ञया आदेशेन, कामच्छिन्नेन मदनप्रेरितेन पृषत्केन शरेण भिन्नं विदीर्णं यत् छिद्रं तदेव प्रणाली तस्याः गलता निर्गच्छता मैत्रीसारेण सख्यरूपसारवस्तुना लघु महत्त्वरहितः तस्मिन् अतएव प्रतिश्रुता वर्षान्ते भवत्कार्य्यार्थं प्रवर्त्तिष्ये इत्येवरूपा गिरं वाचं निर्वोढुं धारयितुमपि अथच प्रतिपालयितुमपि अक्षमे अशक्ते सुग्रीवे चिरसञ्चितां दीर्घकालप्रियाविरहेण सञ्चितामिति यावत् तादृशीं रागान्धतां प्रेमातिशयेन निर्विवेकतामिति भावः प्रशमयितुं निवारयितुं द्रुतं शीघ्रं किष्किन्धां प्राप। शार्दूलविक्रीड़ितं वृत्तम् ॥२२॥

(ञ) अनङ्गेति अनङ्गसङ्गरेण मदनरणेन सङ्गतः सञ्जातः यः परिश्रमः खेदः तस्मात्। अजातजागरः न जातः जागरः प्रबोधः यस्य तथाभूतः सुरतातिशयश्रमसुप्त इत्यर्थः।

(ट) तद्दर्शनेति तस्य लक्ष्मणस्य दर्शनात् यस्त्रासः भयं तेन सङ्कलितस्य सक्षुब्धस्य सकलप्लवङ्गकुलस्य समस्तवानरवृन्दस्य किलकिलायितेन किलकिलेति शब्देनेत्यर्थः। प्रबुद्धः जागरितः।

सचिवयोः प्लवप्रभावनाम्नोः प्रभावेण (ठ) प्रकृतिं (ड) प्रपेदे। ततस्तस्मिन् सुग्रीवे राघवरोषस्य कारणं निरूपयति (ढ) सति मुखरितहरिन्मुखो(ण)ऽभूल्लक्ष्मणज्याघोषः।

तत्रासनं द्रुतमपास्य पतिः कपीनां
तस्थौ स नम्रवदनो घनचापघोषात्।
सन्तोषपोषमिव भूरि भजन् भुजङ्गः
सन्तोषनाशपिशुनात्तरुणाम्बुघोषात्॥३४॥

ततः प्रतिश्रुतकार्य्यस्य प्रोत्साहनाय प्रणयकुपितेन भ्रात्रा प्रेषित एष इति मारुतिना (त) धार्य्यमाणधैर्य्यः सुग्रीवः सौमित्रिं सान्त्वयितुं तारां प्रेषितवान्।

---

(ठ) प्रभावेण प्रकृष्टबोधनेनेति भावः।

(ड) प्रकृतिं स्वास्थ्यम्।

(ढ) निरूपयति विचारयति कथं राघवो मयि रुष्ट इति पृच्छतीति भावः।

(ण) मुखरितेति मुखरितं ध्वनितं हरिन्मुखं दिङ्मुखं येन तथाभूतः दिशो ध्वनयन्नित्यर्थः।

तत्रेति। तत्र किष्किन्धायां कपीनां पतिः सुग्रीवः द्रुतम् आसनम् अपास्य त्यक्त्वा आसनादुत्थायेत्यर्थः भूरि प्रभूतं यथा तथा सन्तोषपोषं सन्तोषातिशयं भजन् भुञ्जानः पूर्व्वमिति भावः भुजङ्गः सन्तोषनाशस्य पिशुनात् सूचकात् तरुणाम्बुघोषात् नवमेघगर्जनादिव घनचापघोषात् अतिगम्भीरधनुर्निनादात् नम्रवदनः नताननः सन् तस्थौ विभयाञ्चकार। उपमालङ्कारः। वसन्ततिलकं वृत्तम्॥३४॥

(त) मारुतिना हनूमता।

द्राग्वारुणीभजननिह्नुतराजतेजो
निष्क्रान्ततारमुपशान्ततमोविकारम् ।
पूर्वाशया विशति सत्पथभाजि मित्रे
सत्यं निशान्तसममस्य निशान्तमासीत् ॥२५॥
सा तु रामा (थ) रामानुज(द)मासाद्य चैवमवोचत् ।

---

द्रागिति । पूर्वाशया पूर्वप्रतिश्रुतप्रतिपालनमनेन कार्य्यमित्याशया सत्पथभाजि सदाचारसम्पन्ने मित्रे लक्ष्मणे विशति प्रविशति पक्षे पूर्वाशया प्राच्या दिशा प्राच्या दिशि उदयेनेति यावत् सत्पथभाजि सन् प्रशस्तः पन्थाः सत्पथमाकाशमित्यर्थः तत् भजते इति तथोक्ते गगनतलसञ्चारिणीति यावत् मित्रे सूर्य्ये विशति उदयं गच्छतीति भावः । अस्य सुग्रीवस्य निशान्तं गृहं, निशान्तं गृहशान्तयोरित्यमरः । द्राक् झटिति वारुणीभजनेन मद्यपानेन निह्नुतम् अपनीतं अपचितमिति यावत् राजतेजः राज्ञः अस्य तेजः प्रभावः विवेकसामर्थ्यमिति भावः पक्षे वारुणी वरुणाधिष्ठिता प्रतीचीदिगित्यर्थः तस्याः भजनेन संश्रयेण निह्नुतं विगतं राजचन्द्रस्य तेजः दीप्तिः यस्मिन् तथाभूतं परनारीसम्भोगेन पुरुषस्य मानहानिर्जायते इति च ध्वन्यते । निष्क्रान्ता अन्तःपुरात् निर्गता लक्ष्मणसान्त्वनार्थमिति भावः तारा वालिपत्नी पक्षे निष्क्रान्ता विनष्टा अदर्शनं गता इति यावत् ताराः नक्षत्राणि यस्मात् तादृशम् । उपशान्तः शान्तिं नीतः तमसः मोहस्य रामकार्य्यसाधने विस्मृतिरूपस्येति भावः पक्षे तमसः अन्धकारस्य विकारः प्रसरः यत्र तथाविधम् अतएव सत्यं सत्यतः निशान्तसमं निशान्तेन निशावसानेन समम् आसीत् । श्लेषानुप्राणितोपमालङ्कारः । वसन्ततिलकं वृत्तम् ॥२५॥

(थ) रामा नारी ।

(द) रामानुजं लक्ष्मणम् ।

प्राचीनं व्यसनं सुरेन्द्रतनयाज्जातं वने भ्राम्यतः
सुग्रीवस्य निराकृतं खररिपोर्बाणेन सालच्छिदा ।
अद्यास्य व्यसनन्तु पञ्चविशिखादासीदुपेन्द्रात्मजात्
सौमित्रे ! तदपि प्रशान्तमभवज्ज्याघोषमात्रेण ते ॥२६॥

तदनन्तर तारासान्त्वनप्रशान्तकोपेन सौमित्रिणा साक तपनतनयः सविनयमाश्रित्य दाशरथिं प्राञ्जलिर्व्यजिज्ञपत, देव । कपिबलमखिलमखिलकुलाचलनिलय(ध)मनिलतनये(न)नाहृतं पुरुहूत इव पुलोमजापहारिणं बलाभिधानमनुह्लादं (प) रावणं रणे हनिष्यतीति । ततः,

ककुभि कुलिशपाणेर्मैथिलीं तां विचेतुं
विनतमथ दिशायां मारुति प्रेतभर्त्तुः ।

---

प्राचीनमिति । हे सौमित्रे ! सालच्छिदा सप्ततालभेदिना खररिपोः रामस्य बाणेन वने भ्राम्यतः पर्य्यटतः सुग्रीवस्य सुरेन्द्रतनयात् इन्द्रसुतात् बालिन इत्यर्थः जातं समुद्भूतं प्राचीनं पूर्व्वतनं व्यसनं विपदित्यर्थः निराकृतं खण्डितं बालिवधेनेति भावः । अद्य तु उपेन्द्रात्मजात् कृष्णपुत्रात् पञ्चविशिखात् पञ्चशरात् कामादित्यर्थः यत् व्यसनं कान्तासु समासक्तिरूपमिति भावः आसीत्, तदपि व्यसनम् अद्य ते तव ज्याघोषमात्रेण धनुर्निनादमात्रेण प्रशान्तं निवृत्तम् अभवत् । शार्द्दूलविक्रीडितं वृत्तम् ॥२६॥

(ध) अखिलेति अखिलाः समग्राः कुलाचलाः महेन्द्रादयः सप्त पर्व्वताः निलयाः आवासाः यस्य तथोक्तम् ।

(न) अनिलतनयेन वायुपुत्रेण हनुमतेत्यर्थः ।

(प) पुरुहूत इव इन्द्र इव पुलोमजापहारिणं शचीहारकं बलाभिधानं बलनामकम् अनुह्लादं प्रह्लादकनिष्ठभ्रातरमित्यर्थः ।

वरुणादिशि सुषेण यक्षराजाञ्चितायां
हरिति शतबलिं च प्राहिणोद् वानरेन्द्रः ॥२७॥

तदनु (फ) दिनेषु केषुचिद् गतेषु मासातिपातनासहो(ब) नियतमुदग्रदण्डः(भ) सुग्रीव इति सत्वरमितरेषु(म) दिगन्तरप्रेषितेषु निवृत्तेषु प्लवङ्गबलेषु पितृपतिहरिति(य) प्रेषिता मारुतिजाम्बवदङ्गदनलनीलप्रभृतयोऽप्यलब्धसीतोपलब्धयस्तनयनाशकुपितकण्वशापनिःशेषित चराचरमपरिचितचारप्रान्तरं कान्तारं नीत्वा (र) कान्तारे कस्मिंश्चिदसु-

---

ककुभीति । वानरेन्द्र सुग्रीव ता मैथिली विचेतुम् अन्वेष्टुं कुलिशपाणे इन्द्रस्य ककुभि दिशि पूर्वस्यामिति भावः विनतं तदाख्य वानरम्, अथानन्तरं प्रेतभर्तुः यमस्य दिशायां दक्षिणस्यामिति भावः मारुतिं हनुमन्तं, वरुणादिशि प्रतीच्यामिति भावः सुषेणं, यक्षराजेन कुबेरेण अञ्चितायाम् अलङ्कृतायां हरिति दिशि उत्तरस्यामिति भावः शतबलिं नाम वानरञ्च प्राहिणोत् प्रेरयामास ॥२७॥

(फ) तदनु तदनन्तरम् ।

(ब) मासातिपातनासहः मासस्य अतिपातनम् अतिक्रमं न सहते इति तथोक्तः मासमध्ये युष्माभिः सीतामन्विष्य निवर्त्तितव्यं नोचेत् वधिष्यामि युष्मानिति प्रागादेशादिति भावः ।

(भ) उदग्रदण्डः तीक्ष्णदण्डः ।

(म) इतरेषु विनतादिषु ।

(य) पितृपतिहरिति दक्षिणस्यां दिशि ।

(र) अलब्धेति अलब्धा अप्राप्ता सीतायाः उपलब्धिरधिगमः यैः तथोक्ताः । तनयेति तनयस्य पुत्रस्य नाशेन कुपितस्य कण्वस्य तदाख्यस्य महर्षेरित्यर्थः शापेन निःशेषिता विनाशं गता, चराः जन्तवः अचराः

ऋक्षीकं निरीक्ष्य रक्षःपतिरिति (ल) बुद्ध्या युद्धाय सन्नद्धा (व) बभूवुः ।

निशिचरपतिरित्यवेक्ष्य रोषा-
दशनिनिपातनिभेन ताड़नेन ।
असुरहितममुं प्रहृत्य दैत्यं
सुरहितमेव चकार बालिपुत्रः ॥२८॥

ततस्तारेयवचनात् (श) तत इतो विचित्य निकट-गिरिसानुशयाः (ष) सानुशयाः सलिलाशया (स) जलचर-

---

श्चाद्यस्य यस्य तादृशं सद्भूतमिति भावः । अपरचितेति अपर-चितः विरहितः चारः सञ्चारः जनानामिति भावः यत्र तादृशं प्रान्तरम् अभ्यन्तरभागः यस्य तथाविधम् । कान्तारं दुर्गमवर्त्म, कान्तारो वर्त्म दुर्गममित्यमरः । तीर्त्त्वा अतिक्रम्य ।

(ल) रक्षःपतिः राक्षसराजः रावण इति यावत् ।

(व) सन्नद्धाः समुद्यताः ।

निशिचरेति । बालिपुत्रः अङ्गदः निशिचरपतिः रावणः अय-मिति शेषः इति अवेक्ष्य दृष्ट्वा रोषात् क्रोधात् अशनिनिपातनिभेन वज्रपातसदृशेन ताड़नेन चपेटप्रहारेणेति यावत् असुराणां हितम् अमुं दैत्यं प्रहृत्य सुराणां देवानां हितमेव चकार । पुष्पिताग्रा-वृत्तम् ॥२८॥

(श) तारेयवचनात् तारायाः अपत्यं पुमान् तारेयः अङ्गदः तस्य वचनात् ।

(ष) विचित्य अन्विष्य । निकटेति निकटस्य सन्निहितस्य गिरेः पर्वतस्य सानुषु प्रस्थेषु शेरते इति तथोक्ताः ।

(स) सलिलाशया जलपानाभिलाषेण ।

पतङ्गपतनोत्पतनानुमीयमानपल्वलोपशल्यं (छ) किमपि विलकुहरमवगाह्य(च) कञ्चन काञ्चनमयं मायानिर्मितं(क) पिहिताशानभोभागं (ख) विहिततपोभङ्गायै(ग) सुराङ्गनायै हेमायै (घ) द्रुहिणेन वितीर्णं (ङ) मेरुसावर्णिदुहिता स्वयम्प्रभया कृतावनं (च) वनोद्देशमविशन्। ततः कृताति-

---

(छ) जलचरेति जलचराणां पतङ्गानां पक्षिणां हंससारस-प्रभृतीनामिति यावत् पतनोत्पतनाभ्याम् अनुमीयमानं पल्वलं क्षुद्रसरः उपशल्ये प्रान्ते यस्य तथोक्तं, ग्रामान्त उपशल्यं स्यादित्यमरः।

(च) विलकुहर गह्वरान्तरम्। अवगाह्य प्रविश्य।

(क) मायानिर्मित मायया रचितम्।

(ख) पिहितेति पिहितः आच्छादितः आशानां दिशां नभसः आकाशस्य च भागः येन तथाविधम्।

(ग) विहितेति विहित कृतः तपसः भङ्गः यया तथाभूतायै।

(घ) हेमायै तदाख्यायै।

(ङ) द्रुहिणेन ब्रह्मणा वितीर्णं दत्तम्।

(च) मेरुसावर्णीति मेरुसावर्णेः दुहिता कन्यया हेमागर्भसम्भूतयेति भावः स्वयम्प्रभया तदाख्यया कयाचित् कामिन्या कृतम् अवनं रक्षणं यस्य तादृशम्। पुरा मेरुसावर्णिर्नाम कश्चित् घोरं तपश्चचार। तेन च भीतेन ब्रह्मणा तत्तपोभङ्गार्थं हेमानाम्नी काचित् सुरसुन्दरी प्रेषिता। सा च मेरुसावर्णिं तथा पर्य्यचरत् यथा तस्या तस्मात् स्वयम्प्रभा नाम कन्यका जाता। ब्रह्मा च परितुष्टस्तस्यै हेमायै तत् वनं प्रददौ। तया च कन्यायै स्वयम्प्रभायै दत्तमिति पुराणवार्त्ता।

ध्यायाः (छ) स्वयंप्रभायाः प्रभावेण विलादुत्तीर्णानां समयातिपातेन (ज) पतिष्यति सुग्रीवदण्ड इति विकृति(झ)मुपेत्य सङ्कतमनोगदे(ञ)नाङ्गदेन पवनतनयवचनप्रत्ययप्रत्यानीतप्रकृतिना (ट) सह प्रायोपवेशमुपेयुषां (ठ) प्लवङ्गपुङ्गवानां परिदेवनकथाप्रसङ्गेन (ड) जटायुषो निधनं निशम्य विन्ध्यरन्ध्राद्विहितसम्पातः (ढ) सम्पातिर्नाम गृध्रराजस्तानेवमवादीत् ।

के यूयमक्षयबलेऽप्यभिधाय पापं
वत्से जटायुषि मम श्वसो दहन्तः ।

---

(छ) कृतातिथ्यायाः कृतम् आतिथ्यं यया तथाभूतायाः ।

(ज) समयातिपातेन समयो निर्धारितो कालः तस्य अतिपातेन अतिक्रमणेन ।

(झ) विकृतिं विषादम् ।

(ञ) सङ्कतेति सङ्कतः सम्प्राप्तः मनसः गदः रोगः सन्तापः इति यावत् यस्य तथाभूतेन ।

(ट) पवनेति पवनतनयस्य हनुमतः वचनप्रत्ययेन अवश्यमेव सीतायाः उपलब्ध्या यतो मम दक्षिणाक्षि स्फुरति इत्येवं वचोविश्वासेन प्रत्यानीता प्रकृतिः यस्य तथाविधेन आश्वस्तचित्तेनेति भावः ।

(ठ) प्रायोपवेशं प्रायः अनशनेन मरणं तदर्थम् उपवेशः तम् । उपेयुषाम् प्राप्तवताम् ।

(ड) परिदेवनस्य विलापस्य कथाप्रसङ्गेन ।

(ढ) विन्ध्यरन्ध्रात् विन्ध्यगिरिगह्वरात् । विहितसम्पातः कृतनिर्गमनः ।

के इत्यादि अक्षयं बलं यस्य तथाभूतेऽपि वत्से जटायुषि

तस्मात् पुरा किरणदाहितपक्षयुग्मं
तिग्मांशुमुष्णवचसा शिशिरीकुरुध्वे ॥२८॥

ततस्तैः प्रश्राविततवृत्तान्तः (ण) सम्पातिः प्रोषिता-युषे (त) जटायुषे निवापाञ्जलिं निर्वृत्य (थ) पुरा कदा-चिदामिषान्वेषणाय (द) प्रेषितेन निजसुतेन सुपार्श्वनाम्ना समाम्नात (ध) महेन्द्रमहीध्ररन्ध्रनिर्गतः (न) दग्धवदनतो-

---

पापम् अमङ्गलं तन्निधनमिति भावः आभषाय उक्ता मम श्रवसी कर्णौ दहन्वः यूय के ? पुरा पूर्वं तस्मात् जटायुषः सदृशाणाद्धेतो-रिति भाव. किरणेन स्वमयूखेन दाहितं पक्षयुग्मं पक्षद्वयं येन तथाभूत तिग्मांशुम् उष्णरश्मिम् उष्णवचसा शिशिरीकुरुध्वे शीतली-कुरुथ उष्णरश्मिसम्बन्धि युष्माक वचसा उष्णत्वम् अनुभूयते इति भावः। पुरा गरुडतनयौ सम्पातिजटायुषौ आवयो: क· सूर्य्य-मतिबल्लित शक्त इति कृतप्रतिज्ञौ अन्तरीक्षमुदपतताम्। क्रमेण सूर्य्यसकाश प्राप्नयोस्तयोः जटायुस्तत्तेज. सोढुमशक्त ज्येष्ठं भ्रातरं शरण गतः। सोऽपि भ्रातृवात्सल्येन कातरं भ्रातर पक्षाभ्यामा-च्छाद्य दग्धपक्ष एव विन्ध्यगिरौ पपात। तेन च जटायुषः पक्ष-हानिर्न जाता, सम्पातिस्तु निर्दग्धपक्ष एव उत्पतनशक्तिहीनः तत्रैव तस्थाविति पुराणम्। वसन्ततिलक वृत्तम् ॥२८॥

(ण) प्रश्राविततेति प्रश्रावितः वृत्तान्त. भ्रातृनिधनवार्त्ता यस्मै तथाभूतः।

(त) प्रोषितायुषे गतजीविताय।

(थ) निवापाञ्जलिं तोयाञ्जलिम्। निर्वृत्य दत्त्वा।

(द) आमिषान्वेषणाय भक्ष्यवस्त्वाहरणाय।

(ध) समाम्नात कथितम्।

(न) महेन्द्रेति महेन्द्रमहीध्रस्य महेन्द्रगिरेः रन्ध्रात् गह्वरात् निर्गतः सन्।

यमामजानकीपरिदेवनं जानानः सूक्ष्मचक्षुः (प) पुन-रेवमवोचत्। अलङ्कातर्य्येण (फ) लङ्काभिधानां यातुधान-राजधानीमधिवसति सीता दशवदननीता। तत्र गच्छन्तु भवन्तः। किञ्च,

दिवाकरप्लोषभवां ममार्त्तिं
निशाकरो नाम मुनिर्निरस्यन्।
जगाद वः कार्य्यमहार्य्यधैर्य्याः।
क्षणेन तां द्रक्ष्यथ राजपत्नीम् ॥४०॥

इति ब्रुवाणं कृतसौहृदं तं
सम्पातिमापृच्छ्य परापरज्ञम्।
प्रवृद्धहर्षाः प्रथितप्रभावाः
प्रतस्थिरे वानरयूथनाथाः ॥४१॥

---

(प) सूक्ष्मचक्षुः सूक्ष्मदर्शी।

(फ) कातर्य्येण विषादेन अलं विषादं मा कुरुत।

दिवाकरेति। हे अहार्य्यधैर्य्याः! अतिधीरा इत्यर्थः निशाकरो नाम मुनिः दिवाकरस्य सूर्य्यस्य प्लोषभवा दाहजनिता मम आर्त्तिं व्यथां निरस्यन् निराकुर्व्वन् वः युष्माकं कार्य्यं जगाद उक्तवान्। यदा रामदूताः सीतान्वेषणार्थं त्वत्सकाशमागत्य तद्वृत्तान्तमा-ख्यास्यन्ति तदा तेषु स्ववृत्तान्तमाख्याय स्वस्थपक्षो भवितेति कथित-वानित्यर्थः। अतः क्षणेन तां राजपत्नीं सीतां द्रक्ष्यथ। उपेन्द्रवज्रा-वृत्तम् ॥४०॥

इतीति। इतीत्थं ब्रुवाणं कथयन्तं कृतसौहृदं सम्पादितमित्र-कृत्यं परापरज्ञं पूर्व्वापरवार्त्ताभिज्ञं तं सम्पातिम् आपृच्छ्य साधु

पर्य्याप्तं प्रमदमुपेयुषां कपीनां
पान्थानां दशमुखमार्गमार्गणाय ।
पाथेयीकृतकपिराजशासनानां
पाथोधिर्नयनपथातिथिर्बभूव ॥४२॥

सूत्रामपुत्रारिशिलीमुखानां
स्मृत्वा गणस्तत्र बलीमुखानाम् ।
अपामपारस्य निधेश्च पश्यन्
अवाङ्मुखो वक्तुमवाङ्मुखोऽभूत् ॥४३॥

---

याम इति सम्भाष्य प्रथितप्रभावाः विख्यातमाहात्म्याः वानरयूथ-नाथाः कपिसेनापतयः प्रहृष्टहर्षाः सन्तः प्रतस्थिरे चलिताः । उप-जातिवृत्तम् ॥४१॥

पर्य्याप्तमिति । पर्य्याप्तं प्रभूतं प्रमदं हर्षं सम्पातिदर्शनादिति भावः उपेयुषां प्राप्तवतां दशमुखस्य रावणस्य मार्गमार्गणाय वर्त्मा-न्वेषणाय पान्थानाम् अध्वगानां पाथेयीकृतं सम्बलीकृतं कपिराजस्य शासनम् आदेशः यैः सुग्रीवादेशवर्त्तिनामित्यर्थः कपीनां वानराणां पाथोधिः समुद्रः नयनपथातिथिः दृष्टिपथपतितः बभूव । प्रहृ-र्षिणीवृत्तं, म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयमिति तल्लक्षणात् ॥४२॥

सूत्रामपुत्रेति । तत्र समुद्रतीरे बलीमुखानां वानराणां गणः सूत्राम्न इन्द्रस्य पुत्रः वाली तस्य अरिः शत्रुः रामः तस्य शिलीमु-खानां शराणां स्मृत्वा कर्मणि षष्ठी अपारस्य अशक्यपारगमनस्य अपां निधेः समुद्रस्य च पश्यन् अत्रापि कर्मणि षष्ठी वक्तुम् अवाक् वाक्यरहितं मुखं यस्य तथाभूतः अतएव अवाङ्मुखः अधोमुखः अभूत् । उपजातिवृत्तम् ॥४३॥

यमामजानकीपरिदेवनं जानानः सूक्ष्मचक्षुः (प) पुन-रेवमवोचत्। अलङ्कातर्य्येण (फ) लङ्काभिधानां यातुधान-राजधानीमधिवसति सीता दशवदननीता। तत्र गच्छन्तु भवन्तः। किञ्च,

दिवाकरप्लोषभवां ममार्त्तिं
निशाकरो नाम मुनिर्निरस्यन्।
जगाद वः कार्य्यमहार्य्यधैर्य्याः।
क्षणेन तां द्रक्ष्यथ राजपत्नीम्॥४०॥

इति ब्रुवाणं कृतसौहृदं तं
सम्पातिमापृच्छ्य परापरज्ञम्।
प्रवृद्धहर्षाः प्रथितप्रभावाः
प्रतस्थिरे वानरयूथनाथाः॥४१॥

---

(प) सूक्ष्मचक्षुः सूक्ष्मदर्शी।

(फ) कातर्य्येण विषादेन अलं विषादं मा कुरुत।

दिवाकरेति। हे अहार्य्यधैर्य्याः! अतिधीरा इत्यर्थः निशाकरो नाम मुनिः दिवाकरस्य सूर्य्यस्य प्लोषभवा दाहजनिता मम आर्त्तिं व्यथा निरस्यन् निराकुर्वन् वः युष्माकं कार्य्यं जगाद उक्तवान्। यदा रामदूताः सीतान्वेषणार्थं त्वत्समकाशमागत्य तद्वृत्तान्तमा-ख्यास्यन्ति तदा तेषु वृत्तान्तमाख्याय सपक्षो भवितेति कथित-वानित्यर्थः। अत क्षणेन तां राजपत्नीं सीतां द्रक्ष्यथ। उपेन्द्रवज्रा-वृत्तम्॥४०॥

इतीति। इतीत्थं ब्रुवाणं कथयन्तं कृतसौहृदं सम्पादितमित्र-त्वं परापरज्ञं पूर्वापरवार्त्ताभिज्ञं तं सम्पातिम् आपृच्छ्य साधु

हे वीरा यूथनाथाः। परिणतिपरुषः कोऽयमासीद्विषादः
कस्मादस्माकमेतज्जलनिधितरणे शक्तिरेतावतीति।
स्मृत्वा राज्ञः प्रतिज्ञामयमनिलसुतो लङ्घनायोन्मुखश्चे-
द्भेदः प्रादुर्भवेत् किं कथयत पयसामास्पदे गोष्पदे वा ॥४५॥

उदपतदुपभोक्तुं मण्डलं चण्डभानोः
परिणतफलबुद्ध्या बालभावेऽपि सोऽयम्।
तदनु कुलिशपातक्षुण्णगण्डाय तस्मै
वरमदिशदमेयं वायुतुष्ट्यै विधाता ॥४६॥

---

हे वीरा इति। हे यूथनाथा वीराः। परिणतिपरुषः परिणामविरसः एतस्य जलनिधेः तरणे एतावती शक्तिः कस्मात् भवेदिति शेषः इति कोऽयम् अस्माकं विषादः आसीत्? राज्ञः सुग्रीवस्य प्रतिज्ञां मासातिक्रमेण प्राणदण्डङ्कुर्यामिति भावः स्मृत्वा अयम् अनिलसुतः वायुपुत्रः हनुमानित्यर्थः चेत् यदि लङ्घनाय उन्मुखः तत्परो भवेदिति शेषः तदा पयसाम् आस्पदे आधारे पयोधावित्यर्थः गोष्पदे वा भेदः विशेषः अस्तीति शेषः किं प्रादुर्भवेत्? नैवेत्यर्थः कथयत। वायुपुत्रस्य पयोधिलङ्घनं गोष्पदलङ्घनमिव तद् यद्ययं गन्तुमुन्मुखो भवेत् तदास्माकं को विषाद इति भावः। स्रग्धरावृत्तम् ॥४५॥

उदपतदिति। सोऽयं हनूमान् बालभावेऽपि शैशवेऽपि परिणतफलबुद्ध्या परिपक्वं फलमेतदिति बोधेन चण्डभानोः उष्णरश्मेः मण्डलम् उपभोक्तुं भक्षयितुम् उदपतत् अन्तरीक्षमुत्पपात। तदनु तदनन्तरं कुलिशपातेन वज्रप्रहारेण क्षुण्णः भग्नः गण्डो यस्य यथाभूताय तस्मै हनूमते विधाता ब्रह्मा वायोरस्य पितुरिति भावः तुष्ट्यै सन्तोषाय अमेयं परिमातुमशक्यं वरम् अदिशत् दत्तवान्। पुरा शैशवे मातृक्रोडात् सूर्यबिम्बं पक्वफलमिति मत्वा तत् ग्रहीतुं

इत्थं जाम्बवता परापरविदा सम्भुच्चितप्राभवः
कृत्वा वृद्धिमुपेयुषा स्ववपुषा त्रैविक्रमं प्रक्रमम्।
आरुह्याद्रितटं यथोचितमसौ सम्मान्य सेनाधिपान्
आसन्नानथ सन्नगाह तरितुं वारां निधिं मारुतिः ॥४७॥
इति श्रीविदर्भराजविरचिते चम्पूरामायणे
किष्किन्धाकाण्डः समाप्तः।

---

उत्पतन्तं हनुमन्तं राहुरयमकाले सूर्य्यमभिधावतीति मन्वानो देवराजस्तस्मै वज्रं निचिक्षेप। स तु वज्राहत्या भग्नहनुमाद्रि-रन्तिक एव पपात। तदवलोक्य माताऽस्य अञ्जना स्वयमार्त्ता वायु-मकथयत्। वायुः पुत्रं तादृशं दृष्ट्वा शोकार्त्तः नाहं जगतः कार्य्यं करोमीति निश्चलस्तस्थौ। अथ देवा वायुसञ्चाराभावेन सर्वं जगत् विनश्यदवलोकयन्तः ब्रह्माणं शरणं ययुः। ब्रह्मा तु तत्सर्वमाकर्ण्य देवगणैः सह वायुमुपेत्य तत्पुत्रम् अचलशरीरं विधाय विविधान् वरान् दत्त्वा वायुमतोषयदिति पुराणवार्त्ता। मालिनीवृत्तम् ॥४६॥

इत्थमिति। इत्थम् अनेन प्रकारेण परापरविदा पूर्वापरवार्त्ता-भिज्ञेन जाम्बवता सम्भुच्चितः समुत्तेजितः प्राभवः प्रभावः इत्यर्थः यस्य तथोक्तः असौ मारुतिः हनूमान् वृद्धिमुपेयुषा प्राप्तवता स्ववपुषा निजशरीरेण त्रैविक्रमं त्रिविक्रमः वामनः तस्य अयं त्रैविक्रमः तं प्रक्रमम् उद्योगं त्रिभुवनव्यापनसन्नाहमिति भावः कृत्वा अद्रितटं पर्वततटम् आरुह्य आसन्नान् सन्निहितान् सेनाधिपान् सेनापतीन् यथोचितं सम्मान्य सत्कृत्य वारां निधिं समुद्रं तरीतुं सन्नगाह सज्जते। शार्दूलविक्रीडितं वृत्तम् ॥४७॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण कृता
चम्पूरामायणकिष्किन्धाकाण्ड-
व्याख्या समाप्ता।

---

# अथ सुन्दरकाण्डः ।



ततो हनूमान् दशकण्ठनीतां
सीतां विचेतुं पथि चारणानाम् ।
महेन्द्रशैलस्य खगेन्द्रवेगः
प्रस्थादुदस्थात् प्रथमानमानः ॥१॥

तदानीमुदन्वदुल्लङ्घनदृढतरनिहितचरणनिष्पीडनं (क) सोढुमक्षमः क्ष्माभृदेष निःशेषनिःसरन्निर्झरौघतया निरन्तरनिष्पतद्बाष्पपूर इव (ख) इतस्ततो विततजीमूतवृन्दस्यन्दतया परिस्रस्तशिथिलधम्मिल्ल इव (ग) सन्त्रस्यमानकु-

---

तत इति । ततः अनन्तरं खगेन्द्रवेगः गरुडवेगधरः, प्रथमानः विस्तारं गच्छन् मानः गौरवं यस्य तथाभूतः, हनूमान् दशकण्ठेन रावणेन नीतां सीतां विचेतुम् अन्वेष्टुं महेन्द्रशैलस्य प्रस्थात् तटात् चारणानां खेचराणां पथि आकाशे उदस्थात् उत्पपात । उपजातिवृत्तम् ॥१॥

(क) उदन्वतः समुद्रस्य उल्लङ्घनाय दृढतरं यथा तथा निहिताभ्याम् अर्पिताभ्यां चरणाभ्यां निष्पीडनम् ।

(ख) क्ष्माभृत् पर्वतः एषः महेन्द्रः । निःशेषेति निःशेषं यथा तथा निःसरन् निर्गच्छन् यः निर्झरौघः प्रस्रवणप्रवाहः यस्मात् तत्तया । निरन्तरेति निरन्तरं निष्पतन् बाष्पपूरः नयनजलधारा यस्य तथाभूत इव ।

(ग) विततेति विततानां विस्तृतानां जीमूतवृन्दानां मेघसमूहानां

ञ्जरयूथतया सञ्जातश्वयथुरिव (घ) ससाध्वसतया धावमान-हरिणीगणचरणकोटिपाटनोद्भूतधातुधूलिपटलितविकटक-टकतया क्षरितशोणित इव (ङ) तत्क्षणप्रबुद्धकण्ठोरवक-ण्ठरवमुखरितकन्दरतया (च) कृताक्रन्द इव (छ) परिसर-गह्वरनिविरसन्निःसृतसरीसृपतया (ज) निर्गलितान्त्रमाल इव (झ) घूर्णमानतरुविटपकोटिताडितजलदवृन्दस्यन्दित-

---

स्पन्दः स्रवणं यस्य तत्तया। पारिप्लवश्चपलः शिथिलः धम्मिल्लः केशचयः यस्य तथाभूत इव।

(घ) सन्त्रस्यमानेति सन्त्रस्यमानं सम्यक् त्रासं गच्छत् कुञ्जरयूथं हस्तिवृन्दं यस्मिन् तत्तथा। सञ्जातश्वयथुरिव समुद्भूतशोथरोग इव।

(ङ) ससाध्वसतया सभयतया धावमानानां हरिणीगणानां चरणकोटिभिः चरणाग्रैः पाटनेन कुट्टनेन उद्भूतानाम् उत्क्षिप्तानां धातुधूलीनां गैरिकादिचूर्णानां पटलितं संछितं विकटम् उत्कटं कटकं नितम्बः यस्य तत्तया। क्षरितं निःसृतं शोणितं रक्तं यस्य तथाभूत इव।

(च) तत्क्षणेति तस्मिन् क्षणे मारुतेरुत्पतनसमये इत्यर्थः प्रबुद्धानां भग्ननिद्राणां कण्ठोरवाणां सिंहानां मत्तगजानां वा कण्ठरवेण निःस्वनेन मुखरितः शब्दितः कन्दरः गुहा यस्य तत्तया।

(छ) कृताक्रन्द इव रुदन्निव।

(ज) परिसरेति परिसरगह्वरेभ्यः तटगर्त्तेभ्यः निविरसन्तः स्वनन्तः गर्जन्तः निःसृताः सरीसृपाः पन्नगाः यस्य तत्तया।

(झ) निर्गलिता निर्गता अन्त्राणां कुक्षिस्थशिराविशेषाणां माला श्रेणी यस्य तथाभूत इव।

शीकरनिकरकोरकिताकारतया समुपजातखेद इव (ञ) स्फुटिततटोपलपतनदलितकीचकसुषिरसंमूर्च्छत्पवनफुत्कारपरिपूरितगगनतया प्रवर्द्धमानोर्द्ध्वश्वास इव (ट) वचसामविषय दौःस्थ्य (ठ) अभजत।

कृत्वा मारुतिलङ्घनोत्थितरयात्तत्रानुयात्रा ततः
पर्य्यायात्पतता महेन्द्रगहनक्षोणीरुहाणां ततिः।
मध्येवारिनिधिप्रकाशितशिखा सेतोः कृते भाविनः
सूत्रन्यासनिखातशङ्कुनिवहभ्रान्तिं पयोधौ दधौ ॥२॥

---

(ञ) घूर्णमानेति घूर्णमानानां तरूणां वृक्षाणां विटपकोटिभिः शाखाग्रैः ताडितात् मुखात् जलदवृन्दात् मेघसङ्घात् स्यन्दितेन निःसृतेन शीकरनिकरेण अम्बुकणनिचयेन कोरकितः सञ्जातकलिकः आकारः यस्य तत्तया। समुपजातखेद इव सञ्जातघर्म इव।

(ट) स्फुटितेति स्फुटितस्य मारुतेश्चरणस्य निर्भरन्यासात् प्रच्युतस्य तटोपलस्य तटशिलायाः पतनेन दलितस्य छिद्रितस्येति यावत् कीचकस्य वंशविशेषस्य, वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धता इति कोषः। सुषिरे विवरे संमूर्च्छतः पवनस्य फुत्कारेण परिपूरित गगनं यस्य तत्तया। प्रवर्द्धमानः प्रकर्षेण वृद्धिं गच्छन् ऊर्द्ध्वश्वासः यस्य तथाविध इव।

(ठ) वचसामविषय वक्तुमशक्यमिति यावत्। दौःस्थ्यं दुःस्थता दुःखेनावस्थानमित्यर्थः।

कृत्वेति। ततः अनन्तरं तत्र पर्वते मारुतेर्हनूमतः लङ्घनेन उत्थितः उद्भूतः यो रयः वेगः तस्मात् अनुयात्राम् अनुगमनं कृत्वा पर्य्यायात् क्रमेण पतता महेन्द्रगहनक्षोणीरुहाणां महेन्द्रपर्वतीयवनवृक्षाणां ततिः समूहः मध्येवारिनिधि मध्येसमुद्रं प्रकाशिताः शिखाः अग्राणि यस्याः तथाभूता सती भाविनः भवि

पक्षाभिघातरयरेचितवीचिमालः
पाथोनिधेः पवननन्दनविश्रमाय।
उत्तुङ्गशृङ्गकुलकीलितनाकलोको
मैनाकभूभृदुदजृम्भत सम्भ्रमेण ॥३॥

तत्र यात्राप्रत्यूहः प्रत्युद्भूत (ड) इति वचसा त(ढ)मधः पातयित्वा प्रयातमेनं सान्त्वयन् हिरण्यनाभो (ण) बभाषे।

सागरेण कृतज्ञेन तवाध्वश्रमशान्तये।
मारुते! प्रेरितोऽस्म्यत्र सौम्य! विश्रम्य गम्यताम् ॥४॥

---

ष्यतः लङ्कागमनार्थमिति भावः सेतोः कृते निमित्त पयोधौ सूत्रन्यासाय सेतुनिर्माणे सूत्रपाताय निखातस्य प्रोथितस्य शङ्कुनिवहस्य कीलवृन्दस्य भ्रान्तिं भ्रमं दधौ जनयामास लोकानामिति शेषः। मारुतेर्वेगेन उत्पत्य अनुसृतानां समुद्रपतितानां वृक्षाणां-श्रेणिं भाविसेतुबन्धार्थं सूत्रपातार्थं निखाता शङ्कव इव लक्ष्यन्ते इति भावः। शार्दूलविक्रीडितं वृत्तम् ॥२॥

पक्षेति। पक्षाभ्याम् अभिघातेन यो रयः वेगः तेन रेचिता रिक्तीकृता विक्षेपिता इति यावत् वीचिमाला तरङ्गश्रेणी येन तथोक्तः, उत्तुङ्गेन उन्नतेन शृङ्गकुलेन शिखरसमूहेन कीलितः विद्धः नाकलोकः स्वर्गः येन तथाभूतः अभ्रङ्कष इति भावः, मैनाकभूभृत् मैनाकाचलः पवननन्दनस्य हनूमतः विश्रमाय पाथोनिधेः समुद्रात् सम्भ्रमेण त्वरया उदजृम्भत उत्तस्थौ। वसन्ततिलकं वृत्तम् ॥३॥

(ड) तत्र समुद्रमध्ये इत्यर्थः। यात्राप्रत्यूहः प्रयाणविघ्नः। प्रत्युद्भूतः सञ्जातः।

(ढ) तं मैनाकम्।

(ण) हिरण्यनाभः हिरण्यं नाभौ यस्य तथोक्तः, सुवर्णखनिमध्यत्वादियं संज्ञा बोध्या। मैनाकः।

सागरेणेति। हे सौम्य! मारुते! हनूमन्! मतङ्गेन कृत-

तव पित्रा परित्रातः पूर्वं पर्वतभेदिनः ।
तस्मान्नास्ति विपक्षोऽत्र सपक्ष इति मां भज ॥५॥

एवं प्रार्थ्यमानमेनं सम्मान्य कार्यगत्या गते सति हनूमति ।

अवलोक्य हिरण्यनाभमब्धौ
बलमानं बलमानमायिवज्रः ।
अतमन्युरपेतमन्युरासीत्
पवमानात्मजसेवनादमुष्मिन् ॥६॥

---

अत्र ॥ [illegible] रामदूतस्य साहाय्ये कृते रामपूर्व-पुरुषस्य [illegible] उपकारिणः सतो भविष्यतीति निश्चित्येति भावः, तव [illegible] शान्तये [illegible] अत्र [illegible] उत्थापितः अस्मि, ततु [illegible] ॥४॥

तवेति । पूर्वं तव पित्रा [illegible] पर्वतभेदिनः गोत्र-भिदः इन्द्रात् पक्षच्छेदोद्यमादिति यावत् परित्रातः रक्षितः अस्मीति शेषः । तस्मात् अत्र समुद्रे विपक्षः शत्रुः नास्तीति शेषः यद्वा अत्र मयि विपक्षः शत्रुः [illegible] इति शेषः, नास्ति, सपक्षः पक्षवान् [illegible] इति मत्वेति शेषः मां भज आश्रय । एतेन ममापि [illegible] इति भावः ।

[illegible] । [illegible] बलमानकस्य दैत्यस्य मानं गौरवं सम्यक् [illegible] वज्रेण बलसूदन इत्यर्थः, [illegible] अस्य मम [illegible] उत्पतनमित्यर्थः [illegible] भावः, हिरण्यनाभं मैनाकम् अवलोक्य दृष्ट्वा [illegible] सेवनात् विश्रामदानादिति यावत् अमुष्मिन् [illegible] आसीत् ॥६॥

तदनु यथा पुरं (त) लङ्कापुरं प्रतिधावतो हनूमतः सरणिमरुणदरुणसारथेः पदवीं (थ) विन्ध्य इव वदनं व्यादाय द्विरसनजननी रंहसा (द) सुरसा ।

उज्जृम्भितस्य तरसा सुरसां विजेतुं
पादौ पयोधिकलितौ पवमानसूनोः ।
तस्योत्तमाङ्गमभवद्गगनस्रवन्ती-
वीचिव्रजस्खलितशीकरमालभारि ॥७॥

तनुं तनूकृत्य तदा हनूमान्
कृत्वावगाहं जठरे तदीये ।

---

(त) यथा पुरं पुरमिव ।

(थ) सरणिं पन्थानम् । अरुणत् रुरोध । अरुणसारथेः सूर्य्यस्य । पदवीं मार्गम् ।

(द) व्यादाय विस्तार्य्य । द्विरसनजननी द्विजिह्वमाता । रंहसा जवेन वेगेन वा ।

उज्जृम्भितस्येति । तरसा बलेन सुरसां विजेतुम् उज्जृम्भितस्य वर्द्धमानस्य पवमानसूनोः तस्य हनूमतः पादौ चरणौ पयोधिकलितौ समुद्रस्थितौ । तथा उत्तमाङ्गं शिरः गगनस्रवन्त्याः स्वर्गङ्गायाः वीचिव्रजात् तरङ्गनिवहात् स्खलितानां विच्युतानां शीकराणां जलकणानां मालां तत् गगनस्रवन्तीवीचिव्रजस्खलितशीकरमालं बिभर्त्तीति तद्भारि तद्धारकम् अभवत् । हनूमान् महाकायोऽभवदिति भावः । वसन्ततिलकं वृत्तम् ॥७॥

तनुमिति । स हनूमान् तदा यदा सुरसा तादृशमपि हनूमन्तं ग्रसितुं [illegible] असमर्थाऽभवदिति भावः, तनुं स्वदेहं तनूकृत्य क्षुद्रीकृत्य तदीये जठरे कुक्षौ अवगाहं प्रवेशं कृत्वा ततः उदरात् निष्क्र-

ततो विनिष्क्रम्य स चक्रपाणे-
स्त्रिविक्रमस्य क्रममेव चक्रे ॥८॥

भूयोऽपि सोऽयं रघुनाथदूत-
श्चिच्छेद गच्छन्नखरैः खराग्रैः ।
नृसिंहरंहाः पथि सिंहिकाङ्ग-
च्छायानिरोधादुपपन्नमन्युः ॥९॥

तदनु पारावारस्य (ध) पारे लम्बमानशिखरिणि लम्बमानतनु(न)र्लङ्कापुरद्वारमासाद्य नितान्तचिन्तातन्तुसन्दानितान्तःकरणो(प)ऽभूत् । वानरसेना कथन्तरेदिममन्तरायं वितन्वन्तमुदन्वन्तन्तरतु नाम(फ) । कथमुपयातु यातुधान-

---

क्रमस्य त्रिविक्रमस्य त्रिषु लोकेषु विक्रमवतः पदं निदधत इति यावत् चक्रपाणेः वामनरूपिणः नारायणस्य क्रममेव पद्धतिमेव चक्रे अनुससारेत्यर्थः । उपजातिवृत्तम् ॥८॥

भूय इति । सोऽयं रघुनाथस्य दूतः नृसिंहरंहाः नृसिंह-समवेग इत्यर्थः. पथि आकाशमार्गे गच्छन् छायानिरोधात् छाया-क्रमणात् उपपन्नमन्युः जातक्रोधः सन् खराग्रैः तीक्ष्णाग्रैः नखरैः सिंहिकायाः राहुजनन्याः अङ्गं चिच्छेद । उपजाति-वृत्तम् ॥९॥

(ध) पारावारस्य समुद्रस्य ।

(न) लम्बमानशिखरिणि तिष्ठति पर्वते लम्बमानतनुः अवतर-च्छरीरः ।

(प) नितान्तेति नितान्तम् अत्यर्थं चिन्तातन्तुभिः चिन्तासूत्रैः सन्दानितं जडितम् अन्तःकरणं यस्य तथाभूतः किंकर्तव्यानवधारणा-दिति भावः ।

(फ) अन्तरायं विघ्नं क्षुधादिजनितमिति भावः वितन्वन्तं

राजधानीमिमां सर्वथा वितथमनोरथो(ब) दाशरथिर्मोघी-
कृतार्णवलङ्घनः (भ) केवलमहमभवम्। जीवति वा न वेति
न जानामि जानकीमिति। ततस्तत्रभवतीं (म) सीता-
मवजिगमिषुराञ्जनेयः (य) प्रच्छन्नसञ्चारहेतोरस्तमय (र)
गभस्तिमालिनः (ल) केवलमभिललाष। तदनु शातमखस्य
निक्षेपचापस्य प्रत्यासीदति प्रयोजनवेलेति (व) प्रचेतसे
कथयितुमिव प्रतीचीं (श) दिशं प्रविशति भगवति भास्व-
ति (ष) गगनतलमिदमपरमहीधरकटककान्तारसमुद्भव-

---

विस्तारयन्तम् उद्न्वन्तं समुद्रम्। तरतु नाम कथञ्चित् पारं गच्छतु नाम सम्भावनाया सर्वथा तेषां ममाधिक्यादिति भावः।

(ब) वितथमनोरथः विफलाशः।

(भ) मोघीकृतेति मोघीकृतं विफलीकृतम् अर्णवलङ्घनं येन तथाभूतः।

(म) तत्रभवतीं पूज्याम्।

(य) आञ्जनेयः अञ्जनासुतः हनूमान्।

(र) अस्तमयम् अस्ताचलगमनम्।

(ल) गभस्तिमालिनः सूर्य्यस्य।

(व) शातमखस्य ऐन्द्रस्य निक्षेपचापस्य न्यासभूतस्य धनुषः। प्रयोजनवेला प्रयोजनसमयः प्रत्यासीदति उपतिष्ठते राक्षसवधार्थमिति भावः।

(श) प्रचेतसे वरुणाय पश्चिमदिगधिपतये इति भावः। प्रतीचीं पश्चिमाम्। इन्द्रेण प्रचेतसे न धनुर्न्यस्तं, तस्य इदानीं प्रयोजनं राक्षसवधरूपं वर्त्तते, तत्प्रत्यर्पणाय तं प्रचेतसं कथयितुमिव वक्तुमिवेति निष्कर्षः।

(ष) भास्वति सूर्य्ये।

दावपावकशिखाश्रेणिभि (स) किमिह शोणितम् (ह)। अथवा समीपसमापतत्पतङ्गरश्मिदृढतरवेष्टननिष्ठ्यूतानल-तटतपनोपलजालसमुल्लसज्ज्वालापटलैः (च) किमापाट-लम् (क)। आहोस्वि(ख)दागताय मित्राय(ग) महार्घमर्घ्यं प्रदातुं प्रमुदितचेतसा प्रचेतसा तूर्णमर्णवोद्गीर्य्यमाणमाणि-क्यकिरणैः(घ) किमरुणितम्। आहोस्वित्तारापथतरङ्गिणी-सलिल(ङ)मपि ग्रसितुमुज्जृम्भितस्य चरमसागरौर्वाग्नेरर्चिः-

---

(स) अपरेति अपरमहीधरस्य पश्चिमाचलस्य कटककान्तारात् नितम्बकाननात् समुद्भवतीति तथोक्तः यः दावपावकः दावाग्निः तस्य शिखाश्रेणिभि ज्वालासमूहैः।

(ह) शोणितं रक्तम्।

(च) समीपेति समीपे समापततः पतङ्गस्य सूर्य्यस्य, पतङ्गौ पक्षिसूर्य्यौ चेत्यमरः। रश्मिभिः किरणैः दृढतरं यत् वेष्टन तेन निष्ठ्यूतः निःसृतः अनलः अग्निः येभ्यः तथाभूतानां तटतपनोप-लानां तटवर्त्तिनां सूर्य्यकान्तमणीनां जालात् समूहात् समुल्ल-सद्भिः ज्वालापटलैः शिखासमूहैः।

(क) आपाटलं सम्यक् रक्तम्।

(ख) आहोस्वित् अथवा।

(ग) मित्राय सूर्य्याय, सुहृदे इति ध्वनिः।

(घ) अर्णवेति अर्णवात् समुद्रात् उद्गीर्य्यमाणानाम् उत्क्षिप्य-माणानां माणिक्यानां किरणैः मयूखैः।

(ङ) तारापथस्य अन्तरीक्षस्य तरङ्गिणी मन्दाकिनी तस्याः सलिलं जलम्।

पुञ्जेन (च) किमिह रञ्जितमिति सकलजनस्य सन्देह-सन्दोहं (छ) सन्दधाने सन्ध्यारागे समुदञ्चिते (ज) सरसी-रुहश्रेणिषु पत्रपुटकपाटपिधानासु (झ) प्रतिकुमुदवन मकरन्दभिचामटत्सु (ञ) मधुव्रतद्विजेषु विकचकुवलयकलि-काकर्षणकषायेषु(ट) सायवायुषु तत इतः सञ्चरत्सु तिमि रेषु कालागरुधूमस्तोमश्यामलितेषु दिक्पालपुरगोपुरव्य-हेषु (ठ) प्रतिकमलाकर (ड) प्रेङ्खितविश्लेषवेदनापूर्वरङ्गे

---

(च) उज्जृम्भितस्य उत्थितस्य चरमसागरौर्वाग्नेः पश्चिमसमुद्रीय-वाड़वानलस्य। अर्चिः पुञ्जेन तेजोराशिना।

(छ) सन्देहसन्दोहं संशयसमूहम्।

(ज) समुदञ्चिते समुज्जृम्भिते।

(झ) पत्रेति पत्रपुटान्येव कपाटपिधानानि कवाटरूपाणि आच्छादनानि यासां तासु।

(ञ) मकरन्दभिचां पुष्परसयाच्ञाम् अटत्सु कुर्वत्स्विति यावत्।

(ट) मधुव्रतेति मधुव्रता भ्रमरा एव द्विजाः विप्राः तेषु। विक-चेति विकचानां प्रस्फुटितानां कुवलयानां नीलोत्पलानां कर्षणेन सम्पर्केण कषायेषु सुगन्धेषु।

(ठ) कालागुर्विति कालागुरूणां कृष्णवर्णानाम् अगुरूणां गन्धद्रव्यविशेषाणां धूमस्तोमेन धूमनिचयेन श्यामलितेषु श्यामवर्णतां गमितेषु। दिक्पालेति दिक्पालानां दिगधिपतीनां पुरगोपुर-व्यूहेषु नगरद्वारसमूहेषु।

(ड) प्रतिकमलाकरं प्रतिसरोवरम्।

रथाङ्गविहङ्गानां दीनक्रेङ्कारे नक्षत्रमालालङ्कृते गगनमतङ्गजे (ढ)।

आविर्बभूव पूर्वाद्रेः शृङ्गे शृङ्गारजीवितम्।
तमस्तमालकान्तारकुठारः शशलाञ्छनः ॥१०॥

तत्करास्तमसा रुद्धा रेजिरे गगनाजिरे।
शैवालचयसंछन्नाः सरसीव बिसाङ्कुराः ॥११॥

तस्मिन् प्रदोषसमये सहसा हनूमान्
कीर्तिच्छटाजवनिकामपनीय शत्रोः।

---

(ढ) प्रेङ्खितेति प्रेङ्खिता प्रसृता या विश्लेषवेदना विरहव्यथा सा एव पूर्वरङ्गः प्रथमाभिनयव्यापारः तस्मिन्। रथाङ्गविहङ्गानां चक्रवाकपक्षिणाम्। दीनक्रेङ्कारे करुणध्वनिविशेषे। नक्षत्रमालेति नक्षत्रमालाभिः तारामण्डलैः पक्षे नक्षत्रमालया सप्तविंशतिमौक्तिकरचितहारेण अलङ्कृतः तस्मिन्। गगनेति गगनमेव मतङ्गजः हस्ती तस्मिन्।

आविरिति। पूर्वाद्रेः उदयाचलस्य शृङ्गे शिखरे शृङ्गारस्य तदाख्यरसविशेषस्य जीवितं जीवनस्वरूप इत्यर्थः उद्दीपकत्वादिति भावः तमः अन्धकार एव तमालकान्तारः तमालवनं तस्य कुठारः छेदक इति भावः शशलाञ्छनः चन्द्रः आविर्बभूव। निरङ्गरूपकमलङ्कारः। तदुक्तं दर्पणे। निरङ्गं केवलस्यैव रूपणं यत्तदेव तदिति। अनुष्टुव्वृत्तम् ॥१०॥

तत्करा इति। तमसा अन्धकारेण रुद्धाः शबलिताः, तस्य कराः किरणाः गगनाजिरे अन्तरीक्षचत्वरे सरसि सरोवरे शैवालचयेन शैवालसमूहेन सञ्छन्नाः समावृताः बिसाङ्कुरा इव मृणालप्ररोहा इव रेजिरे शुशुभिरे। उपमालङ्कारः ॥११॥

तस्मिन्निति। तस्मिन् प्रदोषसमये रजनीमुखे, लङ्कायां प्रवेश एव

आविर्बभूव सुमनःपरितोषणाय
लङ्काप्रवेशनवनाटकसूत्रधारः ॥१२॥

तत्काले लङ्काधिदेवता(ण)मात्मना सह विग्रहं विधातु गृहीतयुवतिविग्रहा (त) मार्गस्यार्गलीभूय भूयसा (थ) तर्जयन्तीं निर्जित्य तया (द) वानररचितावज्ञोपज्ञं निजविलय (ध) सरसिजासनशासनादावेदयन्त्या (न) विहितानुमति(प)र्मारुतिर्लङ्कायामविकलमेव (फ) मैथिलीं वि-

---

नवनाटकं तस्य सूत्रधारः मुख्याभिनेतृपुरुषविशेष हनूमान् यतो रावणस्य कीर्त्तिच्छटा कीर्त्तिविस्तार एव जवनिका ताम् अपनीय निरस्य सुमनसां साधूनां परितोषणाय सहसा आविर्बभूव लङ्कां प्रविवेशेति भाव । रूपकमलङ्कारः । वसन्ततिलकं वृत्तम् ॥१२॥

(ण) लङ्काधिदेवता लङ्काधिष्ठात्रीं देवीम् ।

(त) गृहीतेति गृहीतः अवलम्बितः युवत्या विग्रहः यया ताम् ।

(थ) अर्गलीभूयेति अर्गलं कपाटरोधदण्डविशेषः तत् भूत्वा मार्गरोधिनी भूत्वेत्यर्थः । भूयसा अतिशयेन ।

(द) तया लङ्काधिदेवतया ।

(ध) वानरेति वानरेण रचिता कृता अवज्ञा अपमानना पराजयरूपेति भाव, उपज्ञा आद्यं ज्ञानं यस्य तथाभूतं निजविलयं निजध्वंसम् ।

(न) सरसिजासनशासनात् ब्रह्मण आदेशात् । आवेदयन्त्या यदा वानरेण केनचित् तव अवमानना करिष्यते तदैव ते ध्वंसो भविष्यति इति ब्रह्मशासनं विज्ञापयन्त्या इति भावः ।

(प) विहितानुमतिः कृतलङ्काप्रवेशानुज्ञः ।

(फ) अविकलमेव सम्यगेव ।

चिन्वन्नैर्ऋतचक्रवर्त्तिनः प्रासाद(ब)माससाद । तत्र,

एषा राक्षससार्वभौमनगरी रक्षश्चमूरक्षिता
तस्येदं सदनं विमानशिखरैर्बिभ्राणमभ्रावलिम् ।
एतत् पुष्पकमाहृतं धनपतेरित्यादरान्मारुते-
स्तत्रादर्शयदिन्दुदीपकिरणप्रद्योतिताशा निशा ॥१२॥

अपि च,

आदित्यः कृतकृत्य एष भविता सीतापतेरीदृशं
साहाय्यं विरचय्य कीर्त्तिममितामादित्सुना सूनुना ।

---

(ब) नैर्ऋतचक्रवर्त्तिनः राक्षसाधिपतेः । प्रासादं राजभवनम् ।

एषेति । तत्र राक्षसपतेः प्रासादे इन्दुरेव दीपः तस्य किरणैः प्रद्योतिता उज्ज्वलीकृता आशा दिशः यया तथाभूता निशा रजनी एषा राक्षससार्वभौमस्य रक्षःपतेः नगरी रक्षश्चमूभिः राक्षससेनाभिः रक्षिता प्रतिपालिता, तस्य रक्षःपतेः इदं सदनं गृहं विमानशिखरैः राजगृहविशेषाग्रैः अभ्रावलिं मेघराजिं बिभ्राणम् अभ्रङ्कषत्वादिति भावः । एतत् धनपतेः कुबेरात् पुष्पकं तदाख्यरथविशेषः आहृतं बलादिति शेषः । इति आदरात् मारुतेः हनूमतः अदर्शयत् । अत्र अदर्शयदिवेति प्रतीयमानोत्प्रेक्षा बोद्धव्या, अन्यथा वाक्यार्थासङ्गतिः स्यात्, निशाया अचेतनत्वेन प्रदर्शनक्रियाकारित्वाभावादिति बोध्यम् । उक्तञ्च दर्पणे । भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना । वाच्या प्रतीयमाना सा प्रथमं द्विविधा मता । वाच्येवादिप्रयोगे स्यादप्रयोगे परा पुनरिति । शार्दूलविक्रीडितं वृत्तम् ॥१२॥

आदित्य इति । एष आदित्यः सूर्यः सीतापतेः रामस्य ईदृशं साहाय्यं विरचय्य विधाय अमिताम् अपरिच्छिन्नां कीर्त्तिम् आदित्सुना ग्रहीतुमिच्छुना सूनुना पुत्रेण सुग्रीवेणेत्यर्थः कृतकृत्यः कृत-

इत्यालोच्य तदा किल स्वयमपि ख्यातिं ग्रहीतुं परां
लङ्कायां रघुनाथदूतसरणौ चन्द्रेण दीपायितम् ॥१४॥

एवमेव पर्य्यटन्नस्वप्नसुन्दरीसौन्दर्य्यमुद्रां निद्रयाप्यतिशय्य शय्यागृहे कृतसवेशं वेशयुवतीपरिवृत(भ)मवरोधवधूजनमप्यनिरोधेन (म) निरीक्ष्य तत्र वितथमनोरथो (य) मारुतिर्विरचितबहुविधचिन्ताप्रकारः प्रासादादवप्लुतः (र) सन् अशोकवनिकायामपि मैथिलीमन्विष्टुमभीष्टदेवताप्रणाममतनुत (ल) ।

कार्य्यं भविता भविष्यति । इति आलोच्य किल विविच्येव दैवेनेति भावः चन्द्रेण स्वयमपि परां महतीं कान्तिं ग्रहीतुं लङ्कायां रघुनाथस्य रामस्य दूतसरणौ दूतवर्त्मनि दीपायितं दीपेनेव आचरितम् । हनूमते सर्वं स्वकिरणेन प्रदर्शितमिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥१४॥

(भ) एवमेव पर्य्यटन् इतस्ततो विचरन् । अस्वप्नसुन्दरीति अस्वप्ना देवाः तेषां सुन्दरीणां देवीनामित्यर्थः सौन्दर्य्यमुद्रां सौन्दर्य्यमर्यादामिति यावत् अतिशय्य अभिभूय निद्रावस्थायामपि सुरसुन्दरीसौन्दर्य्याधिकसौन्दर्य्यवत्यस्ता इति भावः । कृतसवेशं निद्रितमित्यर्थः । वशयुवतीपरिवृतं वशयुवत्यः वेश्याः ताभिः किङ्करीभिरिति भावः परिवृतम् ।

(म) अनिरोधेन अबाधेन ।

(य) वितथमनोरथः विफलाशः, तासु मध्ये यस्याः सीतायाः सत्ता सर्वथा असम्भाविनीति मत्वेति भावः ।

(र) अवप्लुतः गतिविशेषेण अवतीर्णः ।

(ल) अतनुत कृतवान् ।

असौ जनकनन्दिनीं तत इतो विचिन्वन् चणा-
दशोकवनिकामगादपगतान्यमार्गभ्रमः ।
परामभिलषन गतिं शमधनो यथा निर्मम-
स्त्रयीमखिलकिल्बिषप्रशमनैकदिव्यौषधिम् ॥ १५॥

ततस्तस्या नागतालहिन्तालतमालकृतमालसरल-वकुलतिलकामलककुटजलिकुचकेतककङ्कोललवङ्गविकङ्कत-कदम्बकोदुम्बरकपित्थाश्वत्थकुरवकमरुवककुन्दतिन्दुकचन्द-नस्यन्दनचम्पकचाम्पेयपनसवेतसपलाशपाटलाप्रियालप्रा-येरनेकैरनोकहानिवहैः (व) परिवृतां परिभ्रमदभ्रङ्कषविट-पनिर्विडितगगनप्रपञ्चां काञ्चन काञ्चनमयीं शिंशपा(श)-मारुरोह ।

तत्र तत्पत्रसंछन्नगात्रः पुत्रो नभस्वतः ।
न्यग्रोधदलसंलीनजनार्दनदशां दधौ ॥१६॥

---

असाविति । असौ हनूमान् तत इतः जनकनन्दिनी सीतां विचिन्वन् अन्विष्यन्, अपगतः अन्यस्य मार्गस्य पथः भ्रमः यस्य तथा-भूतः सन् परां गतिम् अभिलषन् निर्मम शमधनः अखिलानां किल्बिषाणां प्रशमने एका अद्वितीया दिव्यौषधिः तां तद्रूपामित्यर्थः. त्रयीं वेदसमष्टिमिव अशोकवनिकाम् अगात् प्राप । उपमालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥१५॥

(व) नागेति नागतालादिभिः अनेकैः बहुभिः अनोकहनिवहैः वृक्षसमूहैः ।

(श) अभ्रङ्कषेति अभ्रङ्कषैः गगनस्पर्शिभिः विटपैः शाखाभिः निर्विडितः आवृतः गगनप्रपञ्चः आकाशविस्तारः यया तादृशीं, काञ्चन कामपि, काञ्चनमयीं सौवर्णीं शिंशपां शाल्मलीम् ।

तत्रेति । तत्र शिंशपातरौ तस्याः पत्रैः संछन्नं समावृतं

मल्लीं चूतवनादिव स्नुहिवने म्लेच्छेन संस्थापितां
मालां देवकुलादिवामिषधिया क्षिप्तां श्मशाने शुना ।
देवीमाश्रमतस्तथा स्वभवनं नक्तञ्चरेण छला-
दानीतामपनीतवेषरचनामालोकयन्मारुतिः ॥१७॥
पुनरयमेवं चिन्तां ततान (ष) ।

---

गात्रं यस्य तथोक्तः नभस्वत वायोः पुत्र हनूमान् न्यग्रोधदलेषु वटपत्रेषु सुप्तस्य जनार्दनस्य नारायणस्य दशाम् अवस्थाम् आनुरूप्यमिति यावत् दधौ प्राप । अत्र जनार्दनदशामिव दशामि-त्युपमापर्य्यवसानात् निदर्शनालङ्कारः । सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित् । यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शनेति दर्पणे । अनुष्टुव्वृत्तम् ॥१६॥

मल्लीमिति । मारुतिः हनूमान् चूतवनात् आम्रकाननात् म्लेच्छेन नीचजात्यविशेषेण, गोमांसभक्षको यस्तु विरुद्धं बहु भाषते सर्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते इत्युक्तलक्षणेनेति यावत् स्नुहिवने सिजहण्डकानने संस्थापिता मल्लीमिव मल्लिकालतामिव देवकुलात् शुना कुक्कुरेण आमिषधिया भक्ष्यवस्तुबोधेन श्मशाने क्षिप्तां मालामिव तथा आश्रमतः पञ्चवटीकुटीरात् नक्तञ्चरेण निशा-चरेण छलात् भिक्षाव्याजमाश्रित्येत्यर्थः. स्वभवनम् आनीताम्, अप-नीता परित्यक्ता वेषरचना यया आभरणपरिच्छदरहितामित्यर्थः देवीं जानकीम् आलोकयत् ददर्श । मालोपमालङ्कारः । तदुक्तं दर्पणे । मालोपमा यदेकस्योपमानं बहु दृश्यते इति । अत्र बहुपदं द्वित्वोप-लक्षकं बोध्यम् । शार्दूलविक्रीड़ितं वृत्तम् ॥१७॥

(ष) पुनरिति अयं हनूमान् पुनः एवम् इत्थं चिन्तां ततान कृतवान् ।

एनां विना रघुपतिः परिगृह्य धैर्य्यं
सप्राण एव वसतीति विचित्रमेतत् ।
ज्योत्स्नां विनापि निवसेन्निशि शीतभानु-
श्छायां विनापि निवसेद्दिवसेश्वरोऽपि ॥१८॥

एवं चिन्तयता हनूमता नीते निशीथसमये(ङ) निशीथिनीनाथे (ङ) चरमगिरिशिखरोपकण्ठसेवासमुत्कण्ठमाने (च) दग्धकण्ठस्तु निद्राशेषेण स्मरप्रहारेण च कलुषीकृताक्षः (क) सरसहरिचन्दनचर्चया जानकीदर्शनेच्छया च प्रकटितरागः (ख) वैकक्ष्यमालया (ग) मुकुटतटरत्नप्रभया च तिरस्कृतनक्षत्रमाल (घ) शनैःशनैरविशदशोकवनिकाम् ।

रजनिचरमभागे वारसीमन्तिनीनां
करतलकलिताभिर्दीपिकामार्जनीभिः ।

---

एनामिति । शीतभानुश्चन्द्रः निशि ज्योत्स्ना विनापि निवसेत् तिष्ठेत् । दिवसेश्वरः सूर्य्योऽपि छाया स्वपत्नी विनापि निवसेत् तिष्ठेत् । किन्तु एनां सीतां विना धैर्य्यं परिगृह्य सप्राण एव जीवित एव वसतीति एतत् विचित्रम् आश्चर्य्यम् । वसन्ततिलकं वृत्तम् ॥१८॥

(ङ) निशीथसमये अर्द्धरात्रे ।

(ङ) निशीथिनीनाथे चन्द्रमसि ।

(च) चरमगिरिरस्ताचलः तस्य शिखरोपकण्ठं शृङ्गसन्निधिः तस्य सेवाया समुत्कण्ठमाने समुत्सुकायमाने ।

(क) कलुषीकृताक्षः आविलितनेत्रः ।

(ख) प्रकटितरागः प्रकाशितानुरागः ।

(ग) वैकक्ष्यमालया तिर्य्यक्कक्षावलम्बिहारेण ।

(घ) तिरस्कृतेति तिरस्कृता निर्जिता नक्षत्रमाला तारापङ्क्तिर्येन तथाभूतः ।

दिशि दिशि परिमृष्टं यत्तमस्तत्समस्तं
हृदयमवजगाहे केवलं रावणस्य ॥१९॥
सोऽय मदान्धहृदयो रघुवीरपत्नीं
सीमन्तिनीति हतनीतिरवाप पापः ।
आमूलपल्लवितकोमलशल्लकीति
वैतानपावकशिखामिव वारणेन्द्रः ॥२०॥

एतद्दर्शनवेपमानतनुलता (ङ) मैथिली कापुरुषविषय-परुषवचनपारम्पर्य्येण (च) विदीर्य्यमाणहृदया हृदयदयित-

---

रजनीति । रजन्याः रात्रेः चरमभागे शेषांशे वारसीमन्तिनीनां वाराङ्गनानां परिचारिणीनामिति भावः करतलका:.ताभि करतल-धृताभि दीपिका एव माजन्यः ताभिः दिशि दिशि यत् तमः तिमिरं परिमृष्टं निराकृतमिति यावत् तत् समस्तं केवलं रावणस्य हृदयम् अवजगाहे आचक्राम, मोहान्धतमभूदिति भावः । मालिनीवृत्तम् ॥१९॥

सोऽयमिति । सोऽय मदान्धहृदयः मदमत्तत्वात् पापः पापा-चारः हतनीतिः दुर्णयवान् रावणः वारणेन्द्र आमूलात् पल्लविता सञ्जातपल्लवा शल्लकी गजभक्ष्यविशेष इति बुद्धा वैतानपावकशिखा-मिव यज्ञाग्निज्वालामिव सीमन्तिनी भोग्या नारीति धियेति शेषः रघुवीरपत्नीं रामभार्य्याम् अवाप आससाद । उपमालङ्कारः । वसन्त-तिलक वृत्तम् ॥२०॥

(ङ) एतदिति एतस्य रावणस्य दर्शनेन वेपमाना कम्पमाना तनुलता अङ्गलता यस्याः तथाभूता ।

(च) कापुरुषेति कापुरुषाणां विषया गोचराणि यानि परुषाणि कटूनि वचनानि तेषां पारम्पर्य्येण विस्तारेणेति यावत् ।

शौर्य्यप्रत्ययादमुमेव(छ) तृणाय मत्वा तृणमन्तरत:(ज) कृत्वा स्थिता पर्य्यभाषत (झ)। अयि भो: सकलसमाचारप्रतिष्ठानिष्ठ: (ञ) परमेष्ठी ननु कुलगुरु(ट)र्भवत: परकलत्रगात्रनेत्रप्रसक्तिरप्य(ठ)निरपत्रपतां जनयति गोत्रजातानां(ड)। भूयोऽपि पञ्चवटीपरिसरममु (ढ) जनं प्रभञ्जन (ण) इवानुकूल: कूलोपकण्ठपरिभ्रष्टां नावमिव (त) यदि नयेथा:।

---

(छ) हृदयेति हृदयर्दायितस्य रामस्य शौर्य्यप्रत्ययात् पराक्रमेषु विश्वासात्। अमुमेव रावणमपीत्यर्थः।

(ज) तृणमन्तरत: तृण मध्ये स्थाप्येत्यर्थः परपुरुषेण सह संलापस्य दोषावहत्वात् परपुरुषमुद्दिश्य तृण प्रति वचनप्रयोगे न दोष इति भाव:।

(झ) पर्य्यभाषत प्रत्युवाच।

(ञ) सकलेति सकलाना समाचाराणा सदाचाराणा प्रतिष्ठा स्थिति तस्या: निष्ठा निष्पत्ति: यत्र तथाभूत: सदाचारप्रसूतिरिति भाव:, निष्ठा निष्पत्तिनाशान्ता इत्यमर:।

(ट) कुलगुरु: वंशप्रवर्त्त यितेति यावत् आदिपुरुष इति भाव:।

(ठ) परेति परकलत्राणा परनारीणां गात्रेषु अङ्गेषु नेत्रस्य प्रसक्ति: सञ्चारोऽपि का कथान्येषां स्पर्शनादीनां व्यापाराणामित्यपिशब्दार्थ:।

(ड) गोत्रजातानां सत्कुलप्रसूतानाम् अनिरपत्रतां लोकसमाजे सलज्जतामित्यर्थ:।

(ढ) भूयोऽपि पुनरपि। पञ्चवटीपरिसर पञ्चवटीप्रदेशम्। अमुं जन मामित्ति भाव:।

(ण) प्रभञ्जन: वायु।

(त) कूलोपकण्ठेति कूलस्य तटस्य उपकण्ठात् सान्निध्यात्

तवापि (थ) दयते नियत (द) मदीयो जीवितेशः साक्षाज्जीवितेशो(ध)ऽपि त्वयि दयालुर्भवेद्दाशरथेरजेयस्य मैत्र्याः (न) पात्रमपि भवितासि। किन्तु, खरप्रमुखनिशाचरबलमथनसमयसुचिरलग्नसान्द्रवसापङ्कपङ्किलितमुख(प)मार्य्यपुत्रस्य शिलीमुखं (फ) भवन्तमन्तरेण (ब) कः श्रद्दधीत(भ) निजहृदयगलितरुधिरधारया प्रक्षालयितुम्। अथवा जनस्थानसमरादारभ्य समराभावावग्रहतर्षितानां (म) मौमि-

---

परिभ्रष्टा विच्युता वात्यावेगात् दूरतः प्रक्षिप्तामिति भावः। नावमिव तरणिमिव।

(थ) तवापि इत्थं पूर्वं कृतापराधस्यापीति अपिशब्दार्थः।

(द) दयते दयां करोति। नियतम् अवश्यं निश्चितमित्यर्थः।

(ध) जीवितेशः प्राणेश्वरः रामः इत्यर्थः। साक्षात् स्वयं जीवितेशः अन्तकः।

(न) अजेयस्य केनापि जेतुमशक्यस्य दाशरथेः रामस्य मैत्र्याः सौहृदस्य।

(प) खरेति खरप्रमुखानां निशाचरबलानां राक्षससेनानां मथनसमये विध्वंसनकाले सुचिरलग्नेन सान्द्रेण घनेन वसापङ्केन हृदयमेदोरूपकर्द्दमेन पङ्किलितं मुखं यस्य तथाभूतम्।

(फ) शिलीमुखं शरम्।

(ब) अन्तरेण विना।

(भ) श्रद्दधीत शक्नुयादिति भावः।

(म) समरेति समराभावः संग्रामराहित्यमेव अवग्रहः दृष्टेः प्रतिबन्धः तेन तर्षितानां सञ्जाततृष्णानाम्।

विपत्रिवातकाना(य) त्वदङ्गगलितशोणिताम्बुपारणां तवा-
पनयघनतश्च (र) क समर्थो निवारयितुम्।

अथ निशिचरनाथ पञ्चबाणावभिन्न
न हि जनकसुतायाः प्रापदेकापि वाणी।
जनमुपनतमृत्यु पञ्चवक्त्राहिदष्टं
विशति हतविषाधेरौषधे. किन्नु शक्तिः ॥२१॥

एव जनकदुहितुरवधीरणाभणिति(ल)माकर्ण्य कोप-
पराङ्मुखो दशमुखस्तामभितो (व) निवसन्तीरारक्षिका-

---

(य) सौमित्रीति सौमित्रेर्लक्ष्मणस्य पत्रिणः शरा एव वातकाः तेषाम्।

(र) अपनयघनत दुर्णयमेघात्।

अथेति। अथ मैथिलीवाक्यानन्तरम् एकापि जनकसुतायाः मैथिल्या वाणी पञ्चबाणेन कामेन अवभिन्नं विदीर्णं निशिचरनाथ राक्षसेश्वर न हि प्रापत् नैव प्राविशत्। हत विषाधिः विषव्यथा येन तथाभूतायाः ओषधेः शक्तिः सामर्थ्यं पञ्च वक्त्राणि मुखानि यस्य तथाभूतेन अहिना सर्पेण दष्टम् अतएव उपनतमृत्युम् उपस्थित-निधन जन किन्नु किं भोः विशति? नैव विशतीत्यर्थः आसन्नमृत्यो-रौषध न किञ्चित्फलोपधायकमिति भावः। सामान्येन विशेषसमर्थ-रूपोऽर्थान्तरन्यासः। तदुक्तं दर्पणे। सामान्य वा विशेषेण विशेष-स्तेन वा यदि। कार्य्यञ्च कारणेनेद कार्य्येण च समर्थ्यते। साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा तत इति। मालिनीवृत्तम् ॥२१॥

(ल) अवधीरणेति अवधीरणा अवमानना तस्याः भणितिं वच-नम्।

(व) तां मैथिलीम्। अभितः समन्तात्।

राक्षसीराहूय भवत्यश्चतुर्भि(श)रप्युपायैरेनां ममावश्यवशां कुरुध्वं यद्यसावनुकूला(ष) चेदिमां हत्वास्याः प्रातराशाय (स) महानसं(ह) नयतेत्यादिश्य निशान्ते प्रत्यासन्ने निशान्त(क्ष)-मेव विवेश। तदनु भीषणवीक्षणक्षणदाचरीणां वाक्यदोषो-न्मेषणान्मुकुलितहृदयपुण्डरीका (क) पुण्डरीकयूथपरि-वृतसारङ्गाङ्गनाभङ्गीमङ्गीकुर्वाणा (ख) गीर्वाणतरुणीव (ग) शापबलाद्वसुन्धरां प्रपन्ना (घ) जनकनन्दिनी चिन्तामेवम-करोत्।

---

(श) चतुर्भिरिति चतुर्भिः सामदानभेददण्डरूपैः, सामदानभेद-दण्डमित्युपायचतुष्टयमित्यमरः।

(ष) अनुकूला प्रतिकूलवर्त्तिनी।

(स) प्रातराशाय प्रातर्भोजनाय।

(ह) महानसं रन्धनशालाम्।

(क्ष) निशान्ते प्रभाते। प्रत्यासन्ने निकटवर्त्तिनि। निशान्तं गृहं, निशान्तं गृहयान्तयोरित्यमरः।

(क) भीषणेति भीषणं भयङ्करं वीक्षणं दर्शनं यासां ताः क्षणा-चार्य्यः राक्षस्यः तासाम् वाक्यदोषोन्मेषणात् कर्कशवचनप्रयोगात्। मुकुलितेति मुकुलितं निमीलितं निस्तब्धमिति यावत् हृदयमेव पुण्ड-रीकं कमलं यस्याः तथोक्ता।

(ख) पुण्डरीकेति पुण्डरीकयूथेन व्याघ्रवृन्देन परिवृतायाः सारङ्गाङ्गनाया हरिण्या भङ्गाम् अवस्थामिति यावत् अङ्गीकुर्वाणा गृह्णती अनुकुर्वाणेति भावः।

(ग) गीर्वाणतरुणीव देवाङ्गनेव।

(घ) प्रपन्ना प्राप्ता।

नूनं विदितवृत्तान्ते जटायुषि गतायुषि ।
मामिहावस्थितामार्य्यपुत्रः किन्नावबुध्यते ॥२२॥

आहोस्वित् (ङ) क्रव्यादमायया (च) विपर्य्यस्तप्रकृतेः (छ) काकुत्स्थ ! किमु नास्था सञ्जायते (ज) । अथवा,

न केवलं मामहरद् दुरात्मा
कृपाञ्च रामस्य निसर्गसिद्धाम् ।
इदं न चेत् संश्रितवत्सलः किं
भवेत् स तूष्णीं जगदेकवीरः ॥२३॥

इत्थं विलप्य रघुपुङ्गवं चिन्तयन्ती कृच्छ्रा(झ)न्मूर्च्छां अगमत् ।

---

नूनमिति । विदितः ज्ञातः वृत्तान्तः मत्तानेन हरणवार्त्तेति यावत् यस्मात् तादृशे गतायुषि त्यक्तप्राणे जटायुषि आर्य्यपुत्रः रामः इहावस्थिता मां किं कथं न अवबुध्यते न जानाति नूनम् । तादृशात् जटायुषः सकाशात् मम वृत्तान्तमाज्ञायमार्य्यपुत्रः ज्ञास्यतीति यावत् । अनुष्टुब्वृत्तम् ॥२२॥

(ङ) आहोस्वित् अथवा ।

(च) क्रव्यादमायया राक्षसमायया ।

(छ) विपर्य्यस्तेति विपर्य्यस्ता विकृता प्रकृतिः यस्य तादृशस्य ।

(ज) किमु कथम् आस्था यत्नः मयीति शेषः न संजायते ।

न केवलमिति । दुरात्मा रावणः केवलं मां न, रामस्य निसर्गसिद्धां स्वाभाविकीं कृपाञ्च अहरत् । चेत् यदि इदं तदीयकृपाया अपि हरणं न स्यादिति शेषः तदा संश्रितवत्सलः आश्रितकृपालुः जगदेकवीरः सर्व्वशक्तिमानिति भावः सः किं कथं तूष्णीं भवेत् ? नैव भवेदित्यर्थः । उपजातिवृत्तम् ॥२३॥

(झ) कृच्छ्रात् दुःखातिशयात् ।

निशाचरीस्तां निरवद्यशीलां
निर्भर्त्सयन्तीर्निभृतं निवार्य ।
अस्वप्नलोकोत्सवमात्मदृष्ट
दु स्वप्नमेकं त्रिजटा जगाद ॥२४॥

किञ्च,

उपप्लवत्रस्य परोक्षभावा-
दुपेत्य पृथ्वीं सुचिर लुठन्त्याः ।
नक्तञ्चरस्त्रीमुखकर्षितायाः
सीतालतायास्त्रिजटा जटाभूत् ॥२५॥

तदनन्तरमात्मत्यागाय स्पृहयन्त्या मैथिल्यां मारुतिरि-थमनुपेक्षणीया तपस्विनी नीतिममुञ्चतीति (ट) चिन्तां

---

निशाचरीरिति । त्रिजटा नाम काचित् राक्षसी तां निरवद्यशीलाम् अनिन्द्यस्वभावां निर्भर्त्सयन्तीः तिरस्कुर्वतीः निशाचरीः निभृतं नीचैः निवार्य निषिध्य अस्वप्नलोकानां देवानामुत्सवो यस्मात् तथाभूतमात्मना दृष्टम् एकं दुःस्वप्नं जगाद शशंस । देवानामुत्सवः राक्षसानां ध्वंसमूल इति भावः ॥२४॥

उपप्लवेति । त्रिजटा उपप्लवत्रस्य आश्रयतरोः परोक्षभावात् असान्निध्यादिति भावः पृथ्वीं भूमिम् उपेत्य प्राप्य सुचिरं लुठन्त्याः नक्तञ्चरस्त्रीभिः राक्षसीभिः मुखैः कर्षितायाः आकर्षणं नीतायाः सीतालतायाः जटा आश्रयभूता लम्बमाना त्रिस्तृतिः अभूत् । [illegible] जातिवृत्तम् ॥२५॥

(ञ) आत्मत्यागाय देहत्यागाय ।

(ट) नीतिं अमुञ्चती ईदृशे समये आत्मत्याग एव [illegible] तां अमुञ्चती अत्यजन्ती अनुसरन्तीति भावः ।

परिगृह्य नेदीया(ठ)नस्या बभूव । ततः,

देव्या दशाननवचोमयवज्रदीर्ण-
कर्णान्तरव्रणविरोपणभेषजानि ।
विस्रम्भणार्थमयमन्वयसङ्गतानि
रामाभिकीर्त्तनमधूनि शनैर्न्यषिञ्चत् ॥२६॥

तदनन्तरं समन्तात् प्रसारितनयना जनकतनया तस्यां शाखायां शाखामृगमुद्वीक्ष्य चकितहृदया दुःस्वप्न-बुद्ध्या (ड) सलक्ष्मणाय भर्त्रे भद्रमाशंसमाना (ढ) जनमिमं दुरापस्वाप (ण) स्वप्नं कथमाप्नुयादिति विचिन्तयमाना मायासमायातनैर्ऋतपतिबुद्ध्या तस्मान्मारुतपुत्रात्तत्रास । सोऽपि समवतीर्य्य वचनवैचित्र्याज्जनकपुत्रीं प्रत्यापयन् (त) आञ्जनेयः कृताञ्जलिर्व्यजिज्ञपत् ।

---

(ठ) नेदीयान् निकटवर्त्ती ।

देव्या इति । अयं हनूमान् विस्रम्भणार्थं विश्वासार्थं देव्याः सीतायाः दशाननवचोमयं यत् वज्रं तेन दीर्णं क्षतमिति यावत् यत् कर्णान्तरव्रणं तस्य विरोपणे उपशमने भेषजानि औषधानि अन्वय-सङ्गतानि वंशसंयुक्तानि रामाभिकीर्त्तनमधूनि रामनामोच्चारणमधु-रूपानुपानानीति भावः शनैः क्रमेण न्यषिञ्चत् निषिक्तवान् रामगुणान् कीर्त्तयामासेति भावः । वसन्ततिलकं वृत्तम् ॥२६॥

(ड) दुःस्वप्नबुद्ध्या ममायं दुष्टः स्वप्न इति बोधेन ।

(ढ) भद्रं मङ्गलम् । आशंसमाना कामयमाना ।

(ण) दुरापस्वाप दुर्लभनिद्रम् ।

(त) प्रत्यापयन् विश्वासयन् ।

कल्याणि । तीव्रवेगेन त्वद्वियोगेन ताम्यतः ।
राघवेन्द्रस्य दूतं मामन्यथा मास्म मन्यथा. ॥२७॥

त्वया सह प्रस्थितचित्तवृत्ति-
र्विभावरीकोकसमानधर्मा ।
वचोऽब्रवीन्मैथिलि ! मन्मुखेन
त्वां कौशलं कोशलराजपुत्रः ॥२८॥

अपिच,

शिरसा तव सौमित्रिरकरोदभिवादनम् ।
अपृच्छत् सोऽपि भद्रं त्वामधिपस्य वनौकसाम् ॥२९॥

एवमभिहितया तया सम्भूतविस्रम्भया (थ) भयानपे-

---

कल्याणीति । हे कल्याणि ! मा तीव्रवेगेन दुःसहसन्तापेनेति भावः तव वियोगेन विरहेण ताम्यतः क्लिश्यतः राघवेन्द्रस्य रामस्य दूतं अन्यथा मास्म मन्यथा दूतातिरिक्तं नावगच्छेति यावत् । अनुष्टुब्वृत्तम् ॥२७॥

त्वयेति । हे मैथिलि ! त्वया सह प्रस्थिता चित्तवृत्तिः यस्य तथोक्तः त्वामेव सततं मनसा चिन्तयन्निति भावः, विभावर्य्यां रात्रौ कोकेन चक्रवाकेन प्रियाविरहितेनेति भावः समानः धर्मः अवस्था यस्य तथाभूतः कोशलराजपुत्रः रामः मन्मुखेन त्वां कौशलं कुशलमयं वचः अब्रवीत् । उपजातिवृत्तम् ॥२८॥

शिरसेति । सौमित्रिः लक्ष्मणः शिरसा तव अभिवादनं वन्दनं अकरोत् । सोऽपि वनौकसां वानराणां अधिपः सुग्रीवः त्वां भद्रं क्षेमं अपृच्छत् ॥२९॥

(थ) सम्भूतविस्रम्भया सञ्जातप्रत्ययया ।

तया (द) तावदनुयुक्तः (ध) पवनतनयो वालिमरणकारणं सुग्रीवस्य सख्यमाख्याय प्राचेतसचेत इव (न) सन्ततसन्निहितरामनामक(प)मङ्गुलीयकमस्यै (फ) प्रायच्छत्।

सौख्यावहस्य पवनात्मजदीयमान-
रामाङ्गुलीयकविलोकनवासरस्य।
सत्यं कला शततमीमपि नैव भेजे
पाणिग्रहोत्सवदिनं जनकात्मजायाः ॥२०॥

ततस्तं जानकी निःसीमहर्षा बभाषे। महाभाग! सर्वथास्य दुरात्मनः प्रत्यासीदति (ब) मृत्युस्तथैवमनला-भिधानया (भ) विभीषणदुहिता मह्यं स्वमात्रा प्रेषितया

---

(द) भयानपेतया निर्भीकया।

(ध) अनुयुक्तः पृष्टः।

(न) प्राचेतसचेत इव वाल्मीकिचित्तमिव।

(प) सन्ततेति सन्ततं सततं सन्निहितं रामनाम यस्मिन् तत्।

(फ) अस्यै सीतायै।

सौख्यावहस्येति। जनकात्मजायाः सीतायाः पाणिग्रहोत्सवदिनं विवाहानन्दनदिवसं सौख्यावहस्य सुखजनयतः पवनात्मजेन हनूमता दीयमानस्य रामाङ्गुलीयकस्य विलोकनवासरस्य दर्शनदिनस्य शततमीमपि कलाम् अंशं नैव भेजे नैव प्राप सत्यम्। रामाङ्गुलीयदर्शने तदानीं सीताया यादृशं सुखमासीत् विवाहमहोत्सवदिने तादृशं नैवेति भावः। वसन्ततिलकं वृत्तम् ॥२०॥

(ब) प्रत्यासीदति सन्निधत्ते।

(भ) अनलाभिधानया अनलानाम्न्या।

भाषितम्। अयमप्यनार्य्यशीलस्तुरीयमुपाय(म)मन्तरेण म-मार्य्यपुत्रस्य न समर्पयिष्यति। नियतमहमपि मासादूर्द्धं न शक्नुयां प्राणान् धारयितुमिति। एतदाकर्ण्य मारुति-र्महानुभावे। मा भैषीः। भवन्तीं वहन्नेव तूर्णमुल्लङ्घित-सागरो राघवचरणसरसिजमुपयास्यामीत्येव मां समर्थं समर्थयेथा (य) इत्यभिधाय।

महामहीध्रसध्रीचीं सोऽय वृद्धिमुपेयिवान्।
यया नूनमपां राशिः कुल्यातुल्यां विशेद्दशाम् ॥२१॥

अथ तमुवाच सा जनकसुता मुदिता
किमु तव दुष्करं चरणलङ्घितवारिधेः।
अपितु मया सह प्लवङ्गपुङ्गव। यास्यसि चे-
दियमनपायिनी परिणमेद्भवतः पदवी ॥२२॥

---

(म) तृतीय चतुर्थ उपाय दण्डमिति भावः।

(य) समर्थयेथा सम्भावय।

महामहीध्रेति। सोऽयं हनूमान् महामहीध्रसध्रीचीं महाद्रिसदृशीं वृद्धिं उपेयिवान् प्राप्तः पर्वताकारशरीरं धृतवानित्यर्थः। यया दृष्ट्वा अपां राशिः समुद्रः नूनं निश्चितं कुल्यातुल्यां क्षुद्रसरित्सदृशीं दशाम् अवस्थां विशेत् गच्छेत्। तदानीं तच्छरीरसकाशे समुद्रः गोष्पदमिव भासते स्मेति भावः ॥२१॥

अथेति। अथानन्तरं तादृशशरीरधारणानन्तरं सा जनकदुहिता सीता मुदिता हृष्टा सती तं हनूमन्तं उवाच, हे प्लवङ्गपुङ्गव! कपिश्रेष्ठ! चरणेन लङ्घितः वारिधिः समुद्रो येन तथाभूतस्य तव दुष्करं दुःसाध्यं किमु? किमपि असाध्यं नास्तीत्यर्थः। अपितु किन्तु मया सह चेत् यदि यास्यसि, तदा इयं अनपायिनी अक्षया.

अन्यच्च,

पातिव्रत्यहुताशनेन यदि तं कुर्य्यामहं भस्मसात्
सत्यं दाशरथेः शरस्य न भवेदात्मोचिता पारणा ।
[illegible] यशोनिशापतिरपि प्रम्लानकान्तिर्भवेत्
[illegible] तरावणे रघुपतौ याता मम श्रेयसे ॥३३॥

[illegible] नः (१) पवनसुत. सीता पुनरभाषत ।

[illegible] गेण तव मैथिलि ! वञ्चितायाः
[illegible] टगेण पुनरागतिरित्ययुक्तम् ।
[illegible] पि भुवने विदिता यदि स्यात्
[illegible] रामधनुषः प्रथिता प्रशस्तिः ॥३४॥

---

[illegible] वत् भजत पदवी पन्था सन्तद्रलङ्घनरूपेति भावः [illegible] गच्छेत्, चौर्य्येण प्रत्यानीतेति अयशसा आच्छा- [illegible] ॥३२॥

[illegible] । पातिव्रत्यमेव हुताशन अग्नि तेन अहं यदि [illegible] कुर्य्यात्, तदा दाशरथे· शरस्य आत्मोचिता स्वत- [illegible] तत्त्वतः न भवेत् । किञ्च, एतस्य दाशरथे· यशो- [illegible] चन्द्रोऽपि प्रम्लाना कान्ति· यस्य तथाभूतः [illegible] तौ रामे शासित. रावणो येन तथाभूते सति [illegible] न श्रेयसे मङ्गलाय भवतीति शेष· । शार्दूल [illegible] ॥३३॥

(१) [illegible] रभिहित· ।

[illegible] । हे मैथिलि ! मायामृगेण छद्मकुरङ्गेण वञ्चि- [illegible] तव शाखामृगेण वानरेण पुन. आगतिः प्रति- [illegible] इति अयुक्तं नोचितमित्यर्थः । भुवने यदि एषा

किं बहुना, इत्येतदेव चिन्तितं यदर्हं (ल) राघव-
गृहिण्यास्तदेव निश्चितं यत् सदृश(व)मीदृशस्य समाचारस्य,
तदेव प्रकाशितं यदनुगुणं (श) रावणापराधप्रतिक्रियायाः-
स्तदेवानुमोदितं यदनुकूलं कुलवधूशीलस्य, तदेव
कथितं यदुचितं क्षत्रियाणीवाणीक्रमस्येति (ष) बहुशः
प्रशस्य सर्वथा रामलक्ष्मणौ लङ्कामिमां प्राप्ताविति जानकि
जानीहि जनमिममनुजानीहि प्रस्थातुम् । किञ्च, काकुत्-
स्थेन विदितपूर्वं किमप्यभिज्ञानं (स) दीयतामिति । सा
तु दीर्घं निश्वस्य निश्चित्य पुरा खलु चित्रकूटतटवने तरुण-
तरतरुरमणीयतया (ह) मन्दीकृतनन्दनवैभवे (क्ष) रघु-

---

कथा वार्त्ता विदिता स्यात्, तदा रामधनुषः का नाम प्रशस्तः ? नैव
काचित् प्रशंसेत्यर्थः । वसन्ततिलकं वृत्तम् ॥२४॥

(ल) अर्हं अनुरूपम् ।

(व) सदृशं योग्यम् ।

(श) अनुगुणं अनुरूपम् ।

(ष) क्षत्रियाणीवाणीक्रमस्य क्षत्रियाण्याः क्षत्रियपत्न्याः वीर-
पत्न्या इति यावत् वाणीक्रमस्य वचननियमस्य ।

(स) अभिज्ञानं अभिज्ञायते अनेनेति अभिज्ञानं प्रमाणभूतं
चिह्नम् ।

(ह) तरुणतरेति तरुणतराणां नवप्ररूढानां तरूणां वृक्षाणां
रमणीयतया सौन्दर्य्येण ।

(क्ष) मन्दीकृतेति मन्दीकृतं लघूकृतं नन्दनस्य देवोद्यानस्य वैभवं
सम्पद् शोभेति यावत् येन तथाभूते ।

नन्दनोपधानीकृतोत्सङ्गाया (क) मम पयोधरपरिसरे (ख) खरतरनखराग्रविरचितविदारणं धाराधरनामानं काकं रघुपतिरवालोकयत्।

कुशरूपकुशेशयासनास्त्रं
विजहौ वासवबायसे स वीरः।
अथ तत्कृपया हृताक्षिमात्र-
श्चिरजीवी स दधौ यथार्थसंज्ञाम्॥३५॥

सैषा परिचितकथास्मरणाद्विगुणदुर्दशा (ग) केशपिन-
द्ध(घ)मपरमिदमभिज्ञानमुन्मुच्य (ङ)।

चूडामणिं कपिवरस्य ददौ दशास्य-
सन्त्रासपूजितमहाग्निशिखा कृशाङ्गी।

---

(क) रघुनन्दनेति रघुनन्दनेन उपधानीकृतः शिरोऽवलम्बनीकृतः उत्सङ्गः क्रोडं यस्या तथाभूतायाः।

(ख) पयोधरपरिसरे स्तनदेशे।

कुशेति। स वीरः रामः वासवबायसे ऐन्द्रकाके कुशरूपं कुशे-शयासनास्त्रं ब्रह्मास्त्रं विजहौ तत्याज। अथानन्तरं शरत्यागात् परं तस्य रामस्य कृपया प्रणतं तं प्रति अनुकम्पयेत्यर्थः हृतम् अक्षिमात्रम् एकमात्रं चक्षुर्यस्य तथाभूतः चिरजीवी स काकः यथार्थसंज्ञाम् एकाक्षीति यथार्थं नाम दधौ दधार॥३५॥

(ग) द्विगुणदुर्दशा द्विराष्टसदुःखा।

(घ) केशपिनद्धं केशाभ्यन्तररक्षितम्।

(ङ) उन्मुच्य बहिष्कृत्य।

चूडामणिमिति। कृशाङ्गी सीता दशास्यात् रावणात् यः

आदाय तं प्रणतिपूर्वममौ प्रतस्थे
माणिक्यगर्भवदनोरगतुल्यबाहुः ॥३६॥

ततः कृतकृत्य एव निर्गत्य निजागमनं निशाचरपतेः प्रकटयितु(च)मशोकवनिकां बभञ्ज प्रभञ्जनात्मजः (छ)।

स्वकृत्यैः शाखानामवनतिमतीव प्रकटयन्
अमार्गेण भ्राम्यन् परिकलितभङ्गः सुमनसाम्।
द्विजानां सन्त्रासं श्रुतिमधुरवाचां विरचयन्
अथ लोकोद्याने द्रुमवदनलीलामतनुत ॥३७॥

---

सन्त्रासं तेन तन्निवारणार्थमिति भावः। पुञ्जितस्य महतः अग्नेः शिखेव शिखा ज्वाला यस्य तादृशं चूडामणिं शिरोरत्नं कपिवरस्य हनूमतः ददौ। असौ हनूमान् तं चूडामणिम् आदाय गृहीत्वा माणिक्यं रत्नविशेषः गर्भे मध्ये यस्य तादृशं वदनं मुखं फणामण्डलमिति भावः यस्य तादृशेन उरगेण सर्पेण तुल्यः बाहुः यस्य तथोक्तः सन् उरगतुल्येन बाहुना चूडामणिं दधदिति भावः प्रणतिपूर्वं प्रणामपुरःसरं प्रतस्थे चलितः। वसन्ततिलकं वृत्तम्॥३६॥

(च) प्रकटयितुं प्रकाशयितुम्।

(छ) प्रभञ्जनात्मजः हनूमान्।

स्वकृत्यैरिति। अथ हनूमान् लोकः भुवनमिव उद्यानम् उपवनं तस्मिन् स्वकृत्यैः निजकार्यैः उल्लम्फनादिभिरिति भावः, पक्षे स्वकीयदुर्णयैरिति भावः. शाखानां विटपानां पक्षे वंशीयानामिति भावः. अतीव अत्यर्थम् अवनतिं पातं प्रकटयन् कुर्वन्निति यावत् अमार्गेण आकाशवर्त्मनेत्यर्थः. पक्षे अशिष्टाचारेण भ्राम्यन् विचरन्, सुमनसां पुष्पाणां पक्षे साधूनां परिकलितः कृतः भङ्गः पातनं येन तथोक्तः, श्रुतिमधुरा श्रवणप्रिया पक्षे श्रुतिभिर्वेदैः मधुरा वाक्

तदनु सरभससमारक्षिकरक्षोगणनिवेदितप्रमदवनकदनकुपितदशवदनप्रेषितान् (ज) पितृपतिकिङ्करभयङ्करान् (झ) प्रहस्तपुत्रेण जम्बुमालिना सह (ञ) निहत्य चैत्यतोरण(ट)मुपागतवति हनूमति पुनरपि निशमितामितनिशिचरगणमारणो (ठ) रावणः सचिवान् पञ्च पञ्चाननपराक्रमान् (ड) प्रहस्तप्रमुखान् बलीमुखं जीवग्राह (ढ) गृह्णीध्वमिति प्राहिणोत् (ण)। तत्र तानपि पञ्चता (त) नीत्वा तोरणपरिघेण (थ) मुहुर्मुहुर्दाशरथिदासोऽहमित्या-

---

येषां तेषां द्विजानां पक्षिणां पक्षे ब्राह्मणानां सन्त्रासभयं विरचयन् जनयन् सन् दशवदनस्य रावणस्य लीलाविलासम् अतनुत विस्तृतवान् अनुचकारेत्यर्थः। निदर्शनालङ्कारः। मालिनीवृत्तम् ॥२७॥

(ज) सरभसं सवेगम्। आरक्षिकेति आरक्षिकैः उद्यानपालैरित्यर्थः रक्षोगणैः निशाचरवृन्दैः निवेदितेन विज्ञापितेन प्रमदवनस्य कदनेन भञ्जनेन कुपितः यः दशवदनः रावणः तेन प्रेषितान्।

(झ) पितृपतीति पितृपतेर्यमस्य किङ्करा इव भयङ्कराः तान्।

(ञ) जम्बुमालिना सह जम्बुमालिनमपीत्यर्थः।

(ट) चैत्यतोरणं विश्रामस्थानभूतं वहिर्द्वारमित्यर्थः।

(ठ) निशमितेति निशमितं श्रुतम् अमितानाम् असङ्ख्यानां निशिचरगणानां मारणं निधनं येन तथाभूतः।

(ड) पञ्चाननेति पञ्चाननपराक्रमान् सिंहविक्रान्तान्।

(ढ) जीवग्राहं जीवस्य जीवनस्य ग्राहः ग्रहणं यस्मिन् कर्मणि तद् यथा तथा।

(ण) प्राहिणोत् प्रेषयामास।

(त) पञ्चतां निधनम्।

(थ) तोरणपरिघेण वहिर्द्वारार्गलेन।

स्थानमुद्घोषयन्तं हनुमन्तं नियन्तुं (द) निखिलरक्षसामध्य-
क्षमक्षकुमारमाक्षिपत् (ध)।

वक्षःसङ्घट्टचूर्णीकृतकनकमहाभित्तिचैत्योत्थधूल्या
नक्षत्राणामकाले सरणिमरुणयन् वीरलक्ष्म्या समेतः।
रक्षःशूराख्यशारान् क्षितितलफलके क्षेपणीयान् हनूमा-
नक्षक्रीडां विधातुं दशमुखनगरीचत्वरे तत्वरेऽसौ ॥३८॥

तत्क्षणं क्षणदाचराणामनिमिषता(न)मेव निष्पादित-
तदङ्गनिष्पेषकृत्य(प)श्चैत्यप्रसाद(फ)मुत्पाटितस्तम्भजात जा-

(द) नियन्तुं बद्धुम् ।

(ध) आक्षिपत् प्रैरयत् ।

वक्ष इति । वक्षसः सङ्घट्टेन आघातेन चूर्णीकृतः कनकमहा-भित्तिः काञ्चनमहाकुड्यं यस्य तथाभूतात् चैत्यात् वह्निद्वार-विश्रामस्थानात् उत्था उत्थिता या धूली तया, अकाले नक्षत्राणां सरणिं मार्गम् अन्तरीक्षमित्यर्थः अरुणयन् रक्तीकुर्वन्, वीरलक्ष्म्या वीर्यसम्पदा समेतः युक्तः, असौ हनूमान् अक्षक्रीडाम् अक्षेण तदाख्यराक्षसकुमारेण सह क्रीडा युद्धमिति भावः पक्षे अक्षक्रीडां पाशक्रीडां विधातुं कर्तुं क्षितितलमेव फलकम् अक्षक्रीडाभाजन-भूतदारुनिर्मितपट्टविशेष तस्मिन् क्षेपणीयान् पातनीयान् पक्षे निक्षेपार्हान् रक्षःसु राक्षसेषु शूरा वीरा आख्या येषां तथोक्तान् शारान् पाशगुटिकाः प्रतीति शेषः दशमुखस्य नगरी लङ्का तस्या-श्चत्वरे प्राङ्गणे तत्वरे त्वरान्वितो बभूव । स्रग्धराष्टत्तम् ॥३८॥

(न) क्षणदाचराणां राक्षसानाम्, अनिमिषतां निमेषपातमकुर्व-ताम् ।

(प) निष्पादितेति निष्पादितं सम्पादितं तेषां क्षणदाचराणाम् अङ्गानां निष्पेषकृत्यं निष्पेषकार्यं येन तथाभूतः ।

(फ) चैत्यप्रासादं चैत्यरूप राजसदनम् ।

तवेदसा (ब) दग्ध्वा भूयोऽप्युपाश्रिततोरणः समीरणसुतो (भ) बभूव । एतमपि वृत्तान्तं श्रुत्वा कुपितस्य पिशिताशनपतेर्युगपदेव (म) निपेतुः पुत्रे सूत्रामजिति स्वमतिहेतो(य) र्विंशतिदृष्टयः ।

अनिमिषभुवने वा व्योम्नि वा भूतले वा
समरमुपगतं त्वां वीक्षितुं कः समर्थः ।
इति नुतिवचनेन श्लाघयन्मेघनाद
प्लवगमिह नयेति प्राहिणोद्राक्षसेन्द्रः ॥२९॥
नेतुं शोकरसं निशाचरपतेर्हन्तुश्चमूं रक्षसां
तस्यान्तःपुरयोषितां रचयितुं मानं विना रोदनम् ।

---

(ब) जातवेदसा अग्निना ।

(भ) भूयोऽपि पुनरपि । उपाश्रिततोरणः तोरणमुपाश्रयन्नित्यर्थः । समीरसुतः वायुपुत्रः ।

(म) पिशिताशनपतेः रावणस्य । युगपदेव समकालमेव ।

(य) सूत्रामजिति इन्द्रजिति । स्वमतिहेतोः निजबुद्धिहेतोः निजमननानुसारेणेत्यर्थः ।

अनिमिषभुवने इति । अनिमिषभुवने देवलोके व्योम्नि आकाशे भूतले वा समरमुपगतं युध्यमानमिति यावत् त्वां वीक्षितुं द्रष्टुं कः समर्थः शक्तः ? न कोऽपीत्यर्थः । इतीत्थं नुतिवचनेन प्रशंसावादेन श्लाघयन् प्रशंसन् राक्षसेन्द्रः रावणः प्लवगं वानरम् इह अतुलकाशे इति यावत् नय प्रापय इति उक्त्वेति शेषः, मेघनादं प्राहिणोत् प्रेषयामास । मालिनीवृत्तम् ॥२९॥

नेतुमि[illegible] निशाचरपतेः राक्षसराजस्य, निशाचरपतिमिति पाठः समीचीनः [illegible] नेतुं प्रापयितुं रक्षसां [illegible] मानं विना

सूर्य्याचन्द्रमसोः प्रवेशविकलां लङ्कापुरीमग्निना
शुद्धिं कर्त्तुममुष्य वासवजिता जातो रणस्तोरणे ॥४०॥
सद्यामदुर्द्दिने तस्मिन् जहर्ष शरवर्षिणि ।
बर्हीव मेघनादेन मेघनादेन मारुतिः ॥४१॥

तदनु यातुधानप्रबलप्रधाननिधनक्रुद्धो (र) विविधायुधवैतथ्यं (ल) विमृश्य (व) विजयश्रीसगन्धं गन्धवाहनन्दनं (श) चतुराननास्त्रेण (ष) बबन्ध दशकन्धरात्मजः (स) । तेन दिव्यास्त्रेण विवशशरीर(ह)मेनं पिशिताशनाः शोणवल्कलै(क्ष)र्बबन्धुः ।

---

रोदनं रचयितुं तां रोदयितुमिति यावत् सूर्य्याचन्द्रमसोः प्रवेशविकलां प्रवेशरहितां सूर्य्येण चन्द्रेन च प्रवेष्टुमशक्यामिति भावः लङ्कापुरीम् अग्निना अग्निदाहेन शुद्धिं कर्त्तुम् अमुष्य हनूमतः तोरणे वासवजिता इन्द्रजिता सह रणः संग्रामः जातः । शार्दूलविक्रीडितं वृत्तम् ॥४०॥

(र) यातुधानेति यातुधानानां रक्षसां मध्ये प्रबलानां प्रकृष्टबलशालिनां प्रधानानां श्रेष्ठानां निधनेन वधेन क्रुद्धः ।

(ल) विविधानाम् आयुधानाम् अस्त्राणां वैतथ्यं वैफल्यं वरप्रभावेण हनूमतः अस्त्रवेध्यत्वाभावादिति भावः ।

(व) विमृश्य विविच्य ।

(श) विजयश्रीसगन्धं विजयश्रिया सगर्वं, गन्धवाहनन्दनं हनूमन्तम् ।

(ष) चतुराननास्त्रेण ब्रह्मास्त्रेण ।

(स) दशकन्धरात्मजः रावणपुत्रः ।

(ह) विवशशरीर पराधीनदेहम् ।

(क्ष) शोणवल्कलैः शोणाः शणवल्कलरज्जुभिः ।

स मारुतिर्नैर्ऋतपाशजन्मा
बन्धोऽभवद्बन्धनमोक्षहेतुः ।
पुरा पुलस्त्यान्वयपांसुलेन
वन्दीकृतानां सुरसुन्दरीणाम् ॥४२॥

तदनन्तरमितरहननासहतया (क) निजाङ्गुतस्य दिव्यास्त्रस्य प्रभावं विभावयन्(ख) विभावरीचरपतितनूज (ग) पवनतनयं निजपितृसमीपमुपनिनाय ।

सोऽयं ददर्श दशकन्धरमन्धकारि-
लीलाद्रितोलनपरीक्षितबाहुशौर्य्यम् ।
वन्दीकृतेन्द्रपुरवारवधूकराग्र-
व्याधूतचामरमरुच्चलितोत्तरीयम् ॥४३॥

---

स इति । नैर्ऋतस्य इन्द्रजितः पाशात् जन्म यस्य तादृश स मारुतेः हनूमतः बन्धः पुरा पूर्वं पुलस्त्यान्वयपांसुलेन पुलस्त्यवंश-कलङ्कारिणा रावणेनेत्यर्थः वन्दीकृताना हठहृतानां सुरसुन्दरीणा बन्धनस्य मोक्षे मोचने हेतुः कारणम् अभवत् । उपजातिवृत्तम् ॥४२॥

(क) इतरहननासहतया अन्यविधवधाक्षमतया ।

(ख) विभावयन् प्रकटयन् ।

(ग) विभावरीचरपतितनूजः राक्षसराजतनयः ।

सोऽयमिति । सोऽयं हनूमान् अन्धकारेः हरस्य यः लीलाद्रि क्रीडापर्वतः कैलास इत्यर्थः तस्य तोलनेन उत्क्षेपेण परीक्षितं बाहुवीर्य्यं भुजबल यस्य तथाभूतं, वन्दीकृतानाम् इन्द्रपुरवारवधूना स्वर्गवेश्याना कराग्रैः व्याधूतेन सञ्चालितेन चामरमरुता चामरपवनेन चलितं कम्पितम् उत्तरीयं यस्य तथोक्त, दशकन्धर रावण ददर्श । वसन्ततिलक वृत्तम् ॥४३॥

आपाटलाधरपुटान्तविराजमान-
दंष्ट्रामहःप्रसरशारशरीरकान्तिम् ।
सन्ध्याम्बुदान्तरितमध्यसुधामयूख-
रेखाभिराममिव वासवनीलशैलम् ॥४४॥

संग्रामकेलिपरिघट्टनमग्नभग्न-
दिग्दन्तदन्तक्षतमुद्रभुजान्तरालम् ।
छायात्मना प्रतितरङ्गविराजमान-
शीतांशुमण्डलसनाथमिवाम्बुराशिम् ॥४५॥

निःश्रेयसः प्रणयिनीं पदवीं निरोद्धुं
त्रैलोक्यपापपरिपाकमिवात्तरूपम् ।

---

विशिष्टंपङ्क्तिस्वरं विशिनष्टि आपाटलेत्यादिभिः । आपाटले ईषद्रक्ते अधरपुटान्ते विराजमानेन दंष्ट्रामहसां दन्तमयूखानां प्रसरेण विस्तारेण शारा चित्रा शरीरकान्तिर्यस्य तथोक्तम्, अतएव सन्ध्याम्बुदानाम् अन्तरिता अन्तर्गता मध्यसुधामयूखस्य अर्द्धचन्द्रस्येत्यर्थः या रेखा तया अभिरामः सुन्दरः तं वासवनीलशैलम् इन्द्रनील-पर्वतम् । वसन्ततिलक वृत्तम् ॥४४॥

संग्रामेति । संग्रामकेलौ समरक्रीडायाम् ऐरावतेन सहेति भाव· परिघट्टनेन ऐरावतकर्त्तृकमर्द्दनेनेत्यर्थः मग्नेन निखातेन भग्नेन चूर्णितेन दिग्दन्तानां दिग्गजानां दन्तेन क्षता मुद्रा चिह्न-विशेषः यस्य तथाभूतं भुजान्तरालं वक्षःस्थलं यस्य तथोक्तम्, अतएव छायात्मना प्रतिविम्बरूपेण प्रतितरङ्गं विराजमानेन शीतांशुमण्डलेन सनाथ संयुक्तम् अम्बुराशिमिव समुद्रमिव । उपमालङ्कारः । वसन्त-तिलक वृत्तम् ॥४५॥

निःश्रेयस इति । निःश्रेयसः मुक्तेः प्रणयिनीं साधनीमिति

सूर्य्येन्दुपावकमहांसि तपोबलेन
जित्वा यथेष्टमभिषिक्तमिवान्धकारम् ॥४६॥
सोऽपि प्लवङ्गममवेक्ष्य समीरपुत्रं
चित्रीयमाणहृदयः पिशिताशनेन्द्रः ।
कैलासशैलचलनागसि शापदायी
नन्दीश्वरः स्वयमुपागत इत्यमंस्त ॥४७॥

ततः प्रहस्तेन विहितविविधानुयोगः (घ) प्रत्यभाषत रावणं मारुतिः । अयमहमङ्कामधिपतिकुलतिलकस्य (ङ) सत्यसन्धस्य पितृनियोगसमुपनतवनवासनिरतस्य (च) शू-

---

भावः पदवीं पन्थानं शिष्टसमाचारमिति भावः निरोद्धुं स्थगयितुमिति भावः आत्तरूपं धृतविग्रहं, त्रैलोक्यस्य त्रिभुवनस्य पापपरिपाकमिव दुष्कृतपरिणाममिव स्थितमिति शेषः, तपोबलेन सूर्य्येन्दुपावकानां सूर्य्यचन्द्राग्नीनां महांसि तेजांसि जित्वा यथेष्टं यथाकामम् अभिषिक्तं स्वराज्ये निविष्टमिति भावः अन्धकारमिव स्थितमिति शेषः । वसन्ततिलकं वृत्तम् ॥४६॥

सोऽपीति । सोऽपि पिशिताशनेन्द्रः राक्षसेन्द्रः समीरपुत्रं वायुपुत्रं प्लवङ्गमं वानरम् अवेक्ष्य दृष्ट्वा चित्रीयमाणं विस्मयमानं हृदयं यस्य तथाभूतः सन् कैलासशैलस्य चलनम् उत्क्षेपणमेव आगः अपराधः तस्मिन् शापदायी अभिसम्पातप्रदाता नन्दीश्वरः हरानुचरः स्वयम् उपागतः उपस्थित इति अमंस्त मन्यते स्म ॥४७॥

(घ) विहितेति विहितः कृतः विविधः नानाविधः अनुयोगः प्रश्नः यस्मै तथोक्तः ।

(ङ) अङ्कामिति अङ्काम् अधिपतेः दिवसकरस्य कुलं वंशः तस्य तिलकस्य । सत्यसन्धस्य सत्यप्रतिज्ञस्य ।

(च) पित्रेति पितृनियोगेन समुपनते समुपस्थिते वनवासे निरतः प्रवृत्तः तस्य ।

र्पाकारातिबाधितशूर्पणखाप्राप्तवैरूपस्य (छ) कुप्यत्खरप्रमुखनिशिचरबलपलालजालकल्पानलकल्पशिलीमुखस्य(ज) कपटहरिणहननसमयसम्मुषितदारान्वेषणसञ्जातसुग्रीवसख्यसमुत्खातबालिकण्टकस्य (झ) दुर्वृत्तक्षत्रवंशवनपवनसारथे(ञ)स्तपोनिधेर्जामदग्न्यस्य भुजबलावलेपलोपहेतो. (ट) श्रीमतो दाशरथेर्दूतोऽहं सीतामार्गमार्गणाय (ठ) दिशि दिशि तपनतनयप्रेषितानां (ड) वानराणां एकतमः समु-

---

(छ) शूर्पेति शूर्पाकारेण अतिबाधित निर्जित शूर्पं यै· तथाभूता नखा यस्या· तया प्राप्त वैरूप्य रूपस्य विकृति· नासाकर्णच्छेदनरूपेति भाव: यस्मात् तथाभूतस्य ।

(ज) कुप्यदिति कुप्यत् शूर्पणखाया वैरूप्येणेति भाव: खरप्रमुखाना निशिचराणां बल राक्षससैन्यमित्यर्थ: एव पलालजाल शुष्कधान्यवृन्तचय: तस्य कल्पानलात् प्रलयाग्ने· ईषद्न तत्सदृश शिलीमुखं शर: यस्य तथाविधस्य ।

(झ) कपटेति कपटहरिणस्य मायामृगस्य मारीचस्य हनन समये सम्मुषितानाम् अपहृताना दाराणां भार्य्याया इत्यर्थ: अन्वेषणे मार्गणे सञ्जातेन सुग्रीवसख्येन वानरराजमैत्र्या समुत्खातं बाली कण्टकमिव येन तादृशस्य ।

(ञ) दुर्वृत्तानां खलानां राजन्यानां वंश एव वनं तस्य पवनसारथि· अग्नि: तस्य जामदग्न्यस्य ।

(ट) भुजेति भुजबलस्य बाहुबलस्य य· अवलेप: दर्प. तस्य लोपहेतो: विध्वंसकारणस्य ।

(ठ) सीतामार्गेति सीताया मार्ग. पन्था: तस्य मार्गणाय अन्वेषणाय ।

(ड) तपनेति तपनतनयेन सूर्य्यसुतेन सुग्रीवेणेत्यर्थ: प्रेषितानाम् ।

द्रलङ्घनजङ्घालस्तव नगरप्रमदावनसीम्नि (ढ) रघुवरधर्म-दारान् प्रणम्य प्रतिष्ठासु(ण)र्मदीयमागमनं प्रकाशयितु-मथिताशोकवनिकानोकहनिवह(त)स्त्वद्दर्शनकुतूहलेन केव-लमनुभूतनैर्ऋतलूतातन्तुसन्नहन(थ)स्तव परिसरमुपास-रम् (द)।

आनाकलोकपरिकीर्त्तितसच्चरित्र-
मत्रोपरुध्य रघुवंशपतेः कलत्रम्।
वैतानवेदिजनितं पवमानबन्धुं
वस्त्रेण बध्नसि विनीत! कथं यतेथाः॥४८॥

---

(ढ) नगरेति नगरस्य लङ्कापुर्य्या इत्यर्थः प्रमदवनसीम्नि प्रमद-वनप्रदेशे।

(ण) प्रतिष्ठासुः प्रस्थातुमिच्छुः।

(त) मथिताः पतिताः अशोकवनिकाया अनोकहनिवहाः वृक्षसमूहाः येन तथाभूत।

(थ) अनुभूतेति अनुभूतं नैर्ऋतलूतातन्तूनां राक्षसरूपमर्कट-कीटविशेषाणां सन्नहनं बन्धनं येन तथाविधः।

(द) परिसरं प्रदेशम्। उपासरम् आगच्छम्।

आनाकेति। हे अविनीत दुराचार! आनाकलोकं स्वर्गलोक-पर्य्यन्तं परिकीर्त्तितं सत् चरित्रं यस्य तादृशं रघुवंशपतेः रामस्य कलत्रं पत्नीम् अत्र लङ्कायाम् उपरुध्य अवरुध्य वैतानवेदिजनितं यज्ञवेदिसमुद्भवं पवमानबन्धुम् अग्निम् वस्त्रेण बध्नन् कथं यतेथाः किमर्थं प्रयासं कुर्य्याः? विफलः विपरीतफलश्चैष ते प्रयास इति भावः। अत्र रघुवीरपत्न्या अवरोधनं वस्त्रेण अग्निबन्धनमिति

प्रेङ्खन्ती पिशिताशया रणमुखे सौमित्रिपत्रिच्युत
त्वद्गात्रं परितः पतत्रिपरिषच्छत्रच्छवि मा गमत् ।
द्राक् पौलस्त्य ! पुलस्त्यवंशविलये सम्भाविते त्वत्कृते
कान्ताना नयनान्तशान्तसलिल मा भून्निवापोदकम् ॥४९॥

बद्धादरोऽपि परदारपरो गृहे त्व-
मिक्ष्वाकुनायककलत्रमनार्य्य ! मा गाः ।
वाताशनोऽहमिति किं विनतासुतस्य
श्वासानिलाय भुजगः स्पृहयालुतालुः ॥५०॥

---

बिम्बप्रतिबिम्बभावे पर्य्यवसानात् निदर्शनालङ्कारः । वसन्ततिलकं वृत्तम् ॥४८॥

प्रेङ्खन्तीति । रणमुखे सङ्ग्रामशिरसि पिशिताशया मांसलोभेन सौमित्रेः लक्ष्मणस्य पत्रिणा शरेण च्युत तव गात्रं परितः समन्तात् प्रेङ्खन्ती चरन्ती पतत्रिपरिषत् पक्षिसमूहः छत्रच्छविम् आतपत्रकान्तिं मा गमत न गच्छतु । हे पौलस्त्य ! पुलस्त्यवंशसम्भूत ! त्वत्कृते तव दुष्कार्य्याचरणनिमित्तं पुलस्त्यवंशस्य विलये विध्वंसे सम्भाविते सम्यक् समागते सति कान्तानां त्वदीयानामिति भावः नयनान्तेषु शान्तं निर्गलितं सलिलं जलं निवापोदकं तर्पण-वारि तवेति शेषः मा भूत् न भवतु । सत्वरं रघुपतेः कान्तां प्रत्यर्पयेति भावः । शार्दूलविक्रीडितं वृत्तम् ॥४९॥

बद्धादर इति । हे अनार्य्य ! दुर्वृत्त ! परदारपरः परस्त्रीलम्पट त्वं बद्धादरोऽपि जातानुरागोऽपि गृहे आनीतमिति शेषः इक्ष्वाकुनायकस्य रामस्य कलत्रं भार्य्यां मा गाः न गच्छ । भुजगः पन्नगः अहं वाताशनः वायुभुक् इति धियेति शेषः विनतासुतस्य गरुडस्य श्वासानिलाय निःश्वासमारुतं भोक्तुमिति शेषः किं

बाहुचन्दननिषङ्गकोटरा-
न्निर्गतो रघुपतेः शरोरगः ।
प्राणवायुमविनीत ! तावकं
कालयापनमपास्य पास्यति ॥५१॥

किं बहुना,

मायामृगे समरनाटकसूत्रधारे
शाखामृगे च भवतः प्रतिकूलवाते ।
दृष्टोद्यमस्य रघुनायकसायकस्य
मुक्त्वा प्रणामकवचं कवचं किमन्यत् ॥५२॥

---

स्पृहयालुः तादृशस्य तथाभूतः भवेदिति शेषः ? नैव भवेदित्यर्थः। दृष्टान्तालङ्कारः। दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनमिति दर्पणे। वसन्ततिलकं वृत्तम् ॥५०॥

बाहुचन्दनेति। हे अविनीत ! दुराचार ! रघुपतेः बाहुरेव चन्दनः चन्दनवृक्षः तस्य निषङ्गः तूणीरमेव कोटरं तस्मात् निर्गतः शरोरगः बाणभुजङ्गः कालयापनं कालक्षेपम् अपास्य त्यक्त्वा शीघ्रमेवेत्यर्थः तावकं त्वदीयं प्राणवायुं पास्यति। रूपकमलङ्कारः। रथोद्धतावृत्तम्। रात् परैर्नरलगैरथोद्धतेति तल्लक्षणात् ॥५१॥

मायामृगे इति। समर एव नाटकं तस्य सूत्रधारे आरम्भक-नटरूपे इति यावत् मायामृगे काञ्चनमृगरूपधरे मारीचे इति यावत् भवतः प्रतिकूलवाते प्रतीपपवनरूपे शाखामृगे वानरे सतीति भावः दृष्टः उद्यमः उद्योगः यस्य तथाभूतस्य रघुनायकसायकस्य रामशरस्य प्रणामकवचं प्रणतिरूपं कवचं शरीररक्षणोपयोग्यावरण-विशेषं मुक्त्वा विहाय अन्यत् कवचं वर्म किम् ? न किमपीत्यर्थः। तं रघुवरं शरणं व्रज, नोचेद् गतिर्नास्तीति भावः। वसन्ततिलकं वृत्तम् ॥५२॥

एतन्निशम्य कुपितः पिशिताशनेन्द्रः
प्राणानमुष्य हरतेति भटानवादीत् ।
आजन्मसिद्धमतिरत्र विभीषणस्तं
दूतो न बध्य इति शास्त्रगिरा रुरोध ॥५३॥

रावणोऽपि विभीषणभाषण(ध)मङ्गीकृत्य प्लवङ्गमानामङ्गेषु (न) लाङ्गूलमेव वरम् (प) । तदेव कार्पासवाससा सवीत (फ) वीतिहोत्रसात्कृत्य (ब) चत्वरे चत्वरे दोषानुघोष्य सप्रहार नगरं परितः सञ्चारयतेति राक्षसानादिदेश । तेषु तथा कुर्वाणेषु ।

निर्णयाविषयमस्य बालतः
कर्णिकारनिकुरम्बकर्वुरः ।

---

एतदिति । एतत् हनूमद्वच इति शेषः निशम्य श्रुत्वा पिशिताशनेन्द्रः राक्षसपतिः कुपितः सन् अमुष्य प्राणान् हरत इति भटान् वीरान् अवादीत् । अत्र सभायाम् आजन्मसिद्धा मतिः शोभनेति भावः यस्य तथाभूतः विभीषणः दूतः न बध्य इति शास्त्रगिरा शास्त्रानुशासनेन तं रावणं रुरोध वारयामास ॥५३॥

(ध) विभीषणभाषणं विभीषणवचः ।

(न) अङ्गेषु मध्ये इति निर्द्धारे सप्तमी ।

(प) वरं श्रेष्ठम् अतिप्रियमिति भावः ।

(फ) सवीतं वेष्टितम् ।

(ब) वीतिहोत्रसात्कृत्य अग्निसात्कृत्य अग्निना सन्दीप्येति यावत्, वीतिहोत्रो धनञ्जय इत्यग्निपर्य्यायेष्वमरः ।

निर्णयेति । अस्य हनूमतः बालतः पुच्छात् निर्निमेषगणभाग्यसञ्चयात् देवानां सौभाग्यसञ्चारादित्यर्थः कर्णिकारनिकुरम्बः कर्णि-

निर्निमेषगणभाग्यसञ्चया-
दुन्निमेष भगवानुषर्बुधः ॥५४॥

एतद्वृत्तान्तमारक्षिकराक्षसीगणेन गर्वोदीर्णं (भ) वर्णितमाकर्ण्य दूयमानमानसा (म) जानकी हुताशन-मुपस्थाय (य) हनूमतः शीतो भवेति प्राञ्जलिः प्रार्थयत ।

घोरस्य राघवकलत्रतपोमयाग्ने
र्मा भूवमिन्धनमहं क्षणमित्यवेत्य ।
शैत्यं वितत्य दहनः पवमानसूनो-
र्बालाग्रसीम्नि मणिदीप इवावतस्थे ॥५५॥

---

कारपुष्पगुच्छः तद्वत् कर्बुरः विविधवर्णः इत्यर्थः भगवान् उषर्बुधः अग्निः निर्णयाविषय कथमीदृशमुद्भूतमिति निश्चयानर्हं यथा तथा उन्मिमेष उद्बभौ । रथोद्धतावृत्तम् ॥५४॥

(भ) आरक्षिकेति आरक्षिकाणां राक्षसीनां गणेन । गर्वोदीर्णं साहङ्कारमुदीरितम् ।

(म) दूयमानमानसा सन्तप्तचित्ता ।

(य) हुताशनम् अग्निम् । उपस्थाय आराध्य स्तुत्वेति यावत् ।

घोरस्येति । दहनः अग्निः अहं घोरस्य भीषणस्य राघव-कलत्रतपोमयाग्नेः सीतातपोऽनलस्य इन्धनं काष्ठं मा भूवं न भवे-यम् इति क्षणम् अवेत्य विविच्य यदि अहं हनूमन्तं दहेय तदा सीता कोपात् दग्धो भवेयमित्यवधार्येति यावत् पवमानसूनोः वायु-तनयस्य बालाग्रसीम्नि पुच्छाग्रदेशे शैत्यं विभज्य विस्तार्य आश्रित्येति यावत् मणिदीप इव रत्नप्रदीप इव अदाहकः दीपकश्चेति भावः अवतस्थे जज्वालेति भावः । उत्प्रेक्षालङ्कारः । वसन्ततिलकं वृत्तम् ॥५५॥

तदनु पवनतनयोऽपि पुरमिदं न खलु सुव्यक्तं नक्त(र)मालोकयम् । तस्मादनलसाक्षिकमेव पुरमखिलमालोकयामीति यामिनीचरगणं(ल) परिचिततोरणपरिवेश जघान ।

सीताभिधानकमलां प्रभवे प्रदातुं
लङ्कार्णवं क्षुभितसैन्यतरङ्गभीमम् ।
वेधा ममन्थ किल रज्जुभुजङ्गराज-
भोगावृतेन पवनात्मजमन्दरेण ॥५६॥

अथ लङ्कायां दह्यमानायाम् ।

रक्षःस्त्रीवदनारविन्दरजनीं विश्वम्भरावर्हिणी-
वर्षारम्भदशां दशाननयशःकादम्बकादम्बिनीम् ।

---

(र) नक्तं रात्रौ ।

(ल) यामिनीचरगणं निशाचरवर्गम् ।

सीतेति । वेधा विधाता सीताभिधानकमलां सीतानाम्नी लक्ष्मीं प्रभवे रामाय प्रदातुं रज्जुरेव भुजङ्गराजभोगः वासुकिदेहः तेन आवृतः वेष्टितः तेन, पवनात्मज. हनूमानेव मन्दरः तदाख्यपर्वतः तेन, क्षुभितानि अग्निदाहात् सक्षोभ गतानि सैन्यान्येव तरङ्गाः तैः भीमं भयङ्करं लङ्कार्णवं लङ्कारूप सागरं ममन्थ किल विलोडयामासेव । अत्र किलशब्द उत्प्रेक्षावाचकः । रूपकानुप्राणितोत्प्रेक्षालङ्कारः । वसन्ततिलक वृत्तम् ॥५६॥

रक्षःस्त्रीति । हनूमान् दिवि आकाशे रक्षःस्त्रीणां राक्षसीनां वदनारविन्दाना मुखपद्मा.ना रजनी निमीलनकारित्वादिति भावः, दशाननस्य रावणस्य यशांसि एव कादम्बा. कलहंसविशेषा तेषा कादम्बिनी मेघमाला मेघोदये हंसानां पलायनस्य शास्त्रीयत्वादिति

वैधव्योचितवेषनिश्चितमनोलङ्कावधूटीजटां
वैदेह्यास्त्रिजटासमां समकिरद्धूम्या हनूमान् दिवि ॥५७॥
अपिच,
एतद्विक्रमवीक्षणेन जनितामानन्दवाष्पोद्गतिं
रक्षोनाथभयात्पिधातुमनसां विद्याधराणां तदा ।
व्याजव्याहृतये यथा परिणमेद्धूम्या तथा जृम्भते
स्वर्लोकेऽपि कलिन्दशैलतनयाकल्लोलशङ्कावहा ॥५८॥

---

अत्र, वैधव्योचिते वेषे निश्चितं मनो यस्याः तथाभूता या लङ्का एव वधूटी नवोढा कामिनी तस्याः जटां सत्कारा(भा)वात् जटिलकेशचयरूपां वैदेह्याः सीतायाः त्रिजटासमां, त्रिजटानाम्नी काचित् राक्षसी सीतायाः प्रियसखी आसीत् तस्याः सदृशीम् आनन्दकरीमिति भावः, विश्वम्भरा पृथिवी एव बर्हिणी मयूरी तस्याः वर्षारम्भदशा वर्षारम्भावस्थाम् आनन्दोत्सवमिति भावः वर्षासु मयूराणाम् उत्सवस्य कविसमयसिद्धत्वादिति भावः, धूम्यां धूमसमूहं समकिरत् विस्तारयामास । रूपकमलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥५७॥

एतदिति । एतस्य हनूमतः विक्रमवीक्षणेन पराक्रमदृष्ट्या जनिताम् आनन्दवाष्पाणाम् उद्गतिम् उदय रक्षोनाथस्य रावणस्य भयात् पिधातुमनसां गोपितुकामाना विद्याधराणां तदा तस्मिन् काले स्वर्लोकेऽपि कलिन्दः सूर्य्य एव शैलः पर्वतः तस्य तनया कन्या यमुना तस्याः कल्लोलशङ्का तरङ्गसंशयम् आवहति जनयतीति तथोक्ता धूम्या धूमसन्ततिः यथा व्याजव्याहृतये छलोक्तये अस्माक वाष्पोदयः अय दुःखजनित इत्येवमुक्तये इति भावः परिणमेत् पर्य्यवस्येत् तथा जृम्भते आविर्भवति । शार्दूलविक्रीडितं वृत्तम् ॥५८॥

आदौ नीलांशुकश्रीस्तदनु मरकताबद्धनीवीविभूतिः
कस्तूरीपङ्कभङ्गी क्षणमपि विकचेन्दीवरस्रक्सपत्नी ।
पश्चात् स्निग्धाञ्जनाभा जघनकुचतटीकण्ठनेत्रेषु जाता
दिक्कान्तानां तदानीं दशमुखनगरीदाहसम्भूतधूम्या ॥५९॥

हा तात ! हा जननि ! हा सुत ! हा सहाय !
हा पुत्रि ! हा प्रियसखि ! क नु हा हतोऽस्मि ।
इत्यादि पौरपरिदेवनभारवाग्भि-
रापूरि रावणपुरी शिखिना परीता ॥६०॥

यैर्वृन्दारकसुन्दरीजनमुखे नीराजनं निर्मितं
निर्मेघे गगनेऽपि यैर्विरचिता सौदामिनीसंहतिः ।

---

आदाविति । तदानीं दशमुखस्य रावणस्य नगरीदाहेन सम्भूता समुद्भूता धूम्या धूमसन्ततिः आदौ प्रथमतः नीलांशुकस्येव श्रीर्यस्याः तथाभूता तदनु तदनन्तरं मरकतैः मणिविशेषैः बद्धाया नीव्या वसनग्रन्थेः विभूतिरिव श्रीरिव विभूतिः श्रीर्यस्याः तादृशी, क्षण-मपि कस्तूरीपङ्कस्येव मृगनाभिपङ्कस्येव भङ्गीर्यस्याः तथोक्ता, तथा विकचानाम् इन्दीवराणां नीलोत्पलानां स्रजः मालायाः सपत्नी सदृशीति यावत्, पश्चात् दिक्कान्तानां दिग्वधूनां जघनकुचतटीकण्ठ-नेत्रेषु स्निग्धं यत् अञ्जनं तद्वत् आभा यस्याः तथाविधा जाता । उपमालङ्कारः । स्रग्धरावृत्तम् ॥५९॥

हा तातेति । शिखिना अग्निना परीता व्याप्ता रावणपुरी कश्चित् हा तात ! हा जननि ! हा सुत ! हा सहाय ! हा पुत्रि ! हा प्रियसखि ! नु भोः क यूयं कुत्र तिष्ठथेत्यर्थः ? हा हतः विनष्टः अस्मि, इत्यादि पौराणां परिदेवनभारः विलापातिशयः तस्य वाग्भिः वाक्यैः कोलाहलैरित्यर्थः आपूरि परिपूरिता । वसन्ततिलकं वृत्तम् ॥६०॥

ते दिनान्यपि वासराणि न गता निर्वाणमौर्वानल-
ज्वालाडम्बरमम्बुधौ विदधिरे बालानलोद्यत्कणाः ॥ ६१ ॥

आदीप्यमानपवनात्मजबालसङ्गा-
दङ्गारशेषविभवामवलोक्य लङ्काम् ।
व्योम्नि स्थिता निशिचराः स्वगृहाणि नूनं
निर्वापयन्त इव नैलभवैः पयोभिः ॥ ६२ ॥

चक्रे शक्रजिदाज्ञया रणमुखे यत्कर्म रक्षोगण-
स्तत्कर्तुं क्षणदाचरक्षितिभुजा युक्तोऽप्ययुक्तोऽभवत् ।

---

यैरिति । यैः वृन्दारकाणां देवानां यः सुन्दरीजनः तस्य मुखे नीराजनं निर्मितं कृतं, यैः निर्मेघे मेघशून्ये गगनेऽपि सौदामिनीनां विद्युतां संहृतिः विरचिता विशेषेण कृता, दिनान्यपि वासराणि दिवसान् निर्वाणं न गताः ते बालानलोद्यत्कणाः पुच्छाग्निसमुद्भूत-स्फुलिङ्गाः अम्बुधौ और्वानलज्वालाडम्बरं वाडवाग्निशिखासादृश्यं विदधिरे विशेषेण धृतवन्तः । उपमालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ६१ ॥

आदीप्यमानेति । निशिचराः राक्षसाः आदीप्यमानः यः पवनात्मजस्य बालः पुच्छः तस्य सङ्गात् सम्पर्कात् लङ्काम् अङ्गारशेषः विभवः सम्पद् यस्याः तथाविधाम् अवलोक्य दृष्ट्वा नैलभवैः पयोभिः अम्बुभिरित्यर्थः स्वगृहाणि निर्वापयन्त इव व्योम्नि आकाशे स्थिताः नूनमुत्प्रेक्षे । उत्प्रेक्षालङ्कारः । वसन्ततिलकं वृत्तम् ॥ ६२ ॥

चक्रे इति । रक्षोगणः राक्षसनिचयः रणमुखे सङ्ग्रामशिरसि शक्रजितः मेघनादस्य आज्ञया यत् कर्म शत्रुविजयरूपमिति भावः चक्रे कृतवान् पूर्वमिति शेषः, साम्प्रतं क्षणदाचरक्षितिभुजा राक्षस-राजेन रावणेनेत्यर्थः तद्युक्तमिति भावः युक्तः आदिष्टोऽपि तत् कर्तु-

सप्तार्च्चिश्च हनूमता परिचितो लङ्कामधाक्षीद् यथा
तत्पिता मरुता युतोऽपि न तथा दाहक्रियाया पटुः ॥६३॥

तस्मिन् हनूमदरणिप्रभवे हुताशे
शुद्धिं विधाय पतिमेव समेतुमैच्छत् ।
लङ्केश्वरेण रणकेलिकुतूहलेन
बाहोर्बलादपहृता सुरराजलक्ष्मीः ॥६४॥

वाचामिदानीं किमु विस्तरेण
लङ्कापुरीं रावणबाहुगुप्ताम् ।
काकुत्स्थदूतोऽयमुपेत्य चक्रे
कृतान्तदूतस्य सुखप्रवेशाम् ॥६५॥

---

मद्विजयरूपमिति भावः कर्त्तुम् अयुक्त असमर्थः अभवत् । हनूमता परिचितः सन्दीपित इति भावः सप्तार्चिश्च अग्निश्च यथा लङ्काम् अधाक्षीत् ददाह, तत्पिता हनूमज्जनकेन मरुता वायुना युतोऽपि तथा दाहक्रियाया न पटुः न समर्थः आसीदिति शेषः । शार्दूल-विक्रीडित वृत्तम् ॥६३॥

तस्मिन्निति । लङ्केश्वरेण रावणेन रणकेलौ संग्रामक्रीडायां कुतूहलेन कौतुकेन बाहोर्बलात् भूजबलात् अपहृता सुरराजलक्ष्मीः देवराजश्रीः तस्मिन् हनूमानेव अरणिः, अग्निमन्थनदारुविशेषः तत्-प्रभवे तत्समुद्भूते हुताशे अग्नौ शुद्धिं विधाय पतिमेव देवराजमेव समेतु सङ्गन्तुम् ऐच्छत् । दुष्टसंसर्गजनितदोषपरिहाराय अग्नौ परीक्षितेव पुनर्देवराजमाप्नुमभिलाषेवेति प्रतीयमानोत्प्रेक्षा । वसन्ततिलकं वृत्तम् ॥६४॥

वाचामिति । इदानीं वाचां विस्तरेण किमु ? नैव वाग्विस्तार-प्रयोजनमित्यर्थः । अय काकुत्स्थदूतः रामदूतः उपेत्य आगत्य राव-

पौलस्त्यपातकिसमागमजायमान-
मेनः पुनान इव वानरयायजूकः ।
निर्वर्तिताक्षविजयो निजबालवह्नौ
हुत्वा पलाशसमिधः सुगतिर्बभूव ॥६६॥

लङ्कादाहेऽप्यनार्तां रघुपतिदयितां चारणोक्त्या विदित्वा
सानन्दस्तां प्रणम्य पतिगमनविधौ प्राप्य तस्या नियोगम् ।
आरुह्यारिष्टशैलं निधिमपि पयसां स्वैरमुत्तीर्य वेगा-
च्चक्रे गत्वा महेन्द्रं प्लवगबलपतीन् पूर्णकामान् हनूमान् ॥६७॥

---

यस्य लाङ्गुलाग्ना भुजबलरक्षिता लङ्कापुरी कृतान्तदूतस्य यमदूतस्य सुख-
प्रवेशाम् अनायासगम्यां चक्रे कृतवान् । इन्द्रवज्रावृत्तम् ॥६५॥

पौलस्त्येति । निर्वर्तित. अक्षस्य तदाख्यरावणकुमारस्य विजयः
संहार इति यावत् येन तथोक्तः हत्याजनितपापाक्रान्त इति भाव.,
वानर एव यायजूक यज्वा, पौलस्त्य रावण एव पातकी पापी
तस्य समागमेन जायमानम् एनः पाप संसर्गजनित पापमित्यर्थ
पुनान इव क्षालयन्निव निजबालवह्नौ निजपुच्छानले पलाशसमिधः
पल मांस अश्नन्तीति पलाशा· राक्षसा ते एव समिध काष्ठानि हुत्वा
सुगति' विशुद्धगतिमान् रामसमीपगमनोन्मुखश्च बभूव । उत्प्रेक्षा-
लङ्कार. ॥६६॥

लङ्कादाहे इति । हनूमान् चारणानां राक्षसगायनविशेषाणां,
चारणास्तु कुशीलवा इत्यमर. । उक्त्या वचनेन लङ्कादाहेऽपि
अनार्ताम् अव्यथितां रघुपते. रामस्य दयितां भार्यां विदित्वा
सानन्दः प्रतिगमनविधौ प्रतिनिवर्तनव्यापारे तां सीतां प्रणम्य तस्याः
सीतायाः नियोगम् आदेशं प्राप्य अरिष्टशैलं लङ्कानिलयम् अरिष्टाख्य
पर्वतम् आरुह्य पयसां निधिं समुद्रमपि स्वैरं स्वच्छन्दम् उत्तीर्य

अथ यथार्हं सैन्याधिपान् सम्मान्य मारुतिरेतैरनुयुक्तः(ब) स्ववृत्तान्तमखिलमाख्यातवान्। तदनु पवननतनयवचन-मुदिता वानरवरूथिनी (श) यूथनाथानुयाता (ष) तद्दर्शन-जनितमानन्दं दाशरथौ सुग्रीवे च संविभज्येव (स) विव-क्षितुम्, अहमहमिकया (ह) धावन्ती मध्येसरणि (च) दधिमुखकृतावनं (क) मधुवनं हनूमदनुमत्याभिभूय मधु-पानसुखमनुबभूव।

अथाब्रवीद्गिरिवरतुङ्गमङ्गदं
कृताञ्जलिर्दधिमुख एष रोषवान्।

---

वेगात् महेन्द्रं पर्वतमिति शेषः गत्वा प्लवगबलपतीन् वानरसेनापतीन् अङ्गदादीनित्यर्थः पूर्णकामान् सफलमनोरथान् चक्रे कृतवान्। स्रग्धराष्ट्तम् ॥६७॥

(ब) एतैः सैन्याधिपैः अङ्गदादिभिः। अनुयुक्तः पृष्टः।

(श) वानरवरूथिनी कपिसेना।

(ष) यूथनाथानुयाता सेनापतिसमभिव्याहृता।

(स) संविभज्येव पृथक् कृत्वेव।

(ह) अहमहमिकया अहमग्रे अहमग्रे यास्यामीति परस्पर-स्पर्द्धयेति यावत्।

(च) मध्येसरणि पथिमध्ये।

(क) दधिमुखेति दधिमुखेन तदाख्येन वानरेण कृतम् अवनं रक्षणं यस्य तथाभूतम्।

अथेति। अथ वानराणां मधुपानप्रवृत्त्यनन्तरम् एष दधिमुखः रोषवान् क्रुद्धः कृताञ्जलिः सन् गिरिवरतुङ्गं पर्वतप्रवरोन्नतम् अङ्गदं,

बलीमुखान् मधुभजने शिलीमुखान्

भवानिमान् झटिति निवारयेदिति ॥६८॥

अयमप्येन(ख)मवोचत।

दशमुखपुरमध्ये वीक्षिता मैथिलीति

श्रवणमधु वितीर्णं येन वीरेण मह्यम्।

दधिमुख! यदि सोऽयं भाषते को निरुध्या-

न्मधु पिबतु यथेष्टं वाहिनी वानराणाम् ॥६९॥

तदनु (ग) भयविवशसमुपनतदधिमुखवचनविदितमधुवन-कदनपरिभणितजनकदुहितृदर्शनजनितप्रमदभरभरित(घ)-

---

मधुभजने मधुपाने शिलीमुखान् भ्रमरस्वरूपान् इमान् बलीमुखान् वानरान् भवान् झटिति निवारयेत् निषेधतु इति अब्रवीत् उक्तवान्। रुचिरावृत्तं, जभौ जसौ गितिरुचिरा चतुर्ग्रहैरिति तल्लक्षणात् ॥६८॥

(ख) अयम् अङ्गदः। एनं दधिमुखम्।

दशमुखेति। येन वीरेण दशमुखस्य रावणस्य पुरमध्ये नगराभ्यन्तरे मैथिली सीता वीक्षिता दृष्टा इति श्रवणमधु कर्णामृतं मह्यं वितीर्णं दत्तं, हे दधिमुख! यदि सोऽयं हनूमान् भाषते मधुपानार्थमिति शेषः, तदा कः निरुध्यात् निवारयेत्? न कोऽपीत्यर्थः। अतः वानराणां वाहिनी सेना यथेष्टं मधु पिबतु। मालिनीवृत्तम् ॥६९॥

(ग) तदनु तदनन्तरम्।

(घ) भयविवशस्य भयात् राजकीयमधुवनभङ्गजनितादिति भावः विवशस्य विह्वलस्य कातरस्येत्यर्थः समुपनतस्य समुपस्थितस्य दधिमुखस्य वचनेन विदितं मधुवनकदनं मधुवनभङ्गः येन तथाभूतः

स्तपनतनय(ङ)स्तनुविकृति(च)मवनुत (छ) तदभिमुखागमननिमित्तसम्पत्तिम (ज) ।

आरुह्याद्रिमथावरुह्य विपिनान्यास्वाद्य नानाफला-
न्यास्फोट्य प्लुतमारचय्य वदनैरापाद्य वाद्यक्रमान् ।
आलिङ्ग्य द्रुममक्रमं मदवशादाधूय पुच्छच्छटा-
मारादाविरभूदहं प्रथमिका पीना कपीना चमूः ॥७०॥

निद्राक्षयादरुणितेन समीरपुत्रः
सौमित्रिनेत्रयुगलेन निपीयमानः ।

---

तथा परिभणितेन उक्तेन दधिमुखेनेति भावः जनकदुहितृदर्शनेन सीतादर्शनेन यः प्रमदभरः हर्षातिशयः तेन भरितः पूरितः ।

(ङ) तपनतनयः सुग्रीवः ।

(च) तनुविकृति शरीरवैकृतं गात्रभङ्गमित्यर्थः ।

(छ) अतनुत कृतवान् ।

(ज) तदिति तेषां वानराणाम् अभिमुखे आगमननिमित्ता आगमनहेतुका सम्पत्तिरभ्युदयः यस्याः तथाभूताम् ।

आरुह्येति । अथानन्तरं पीना महती कपीना चमूः वानरसेना अद्रिं पर्वतम् आरुह्य विपिनानि वनानि अवरुह्य नानाफलानि आस्वाद्य भुक्त्वा आस्फोट्य सशब्दं कृत्वा प्लुतम् उल्लम्फनं विरचय्य कृत्वा वदनैः मुखैः वाद्यक्रमान् वाद्यपरिपाटीः आपाद्य कृत्वेत्यर्थः अक्रमं क्रमसुलङ्घ्येत्यर्थः द्रुमं वृक्षम् आलिङ्ग्य मदवशात् उल्लासवशात् पुच्छच्छटां लाङ्गूलविस्तृतिम् आधूय कम्पयित्वा अहं प्रथमिका अहं पूर्वा सती आरात् समीपे सुग्रीवस्येति शेषः आविरभूत् आजगाम । शार्दूलविक्रीडितं वृत्तम् ॥७०॥

निद्रेति । समीरपुत्रः हनूमान् निद्राक्षयात् निर्निद्रत्वात् अरु-

चूडामणिं करतले कलयन् ववन्दे
पादारविन्दयुगलं भरताग्रजस्य ॥७१॥

अक्षभ्रमसम्भूतगतागताभ्यां
निस्तीर्णविस्तीर्णमहार्णवोऽपि ।
आनन्दसिन्धौ पृतनासमक्षं
ममज्ज हन्ता नितरां ममज्ज ॥७२॥

आनीतचूडामणिसन्निधाना-
दाविःप्रमोदेन रघूद्वहेन ।
तत्रानुयुक्तः पवमानजन्मा
विज्ञापयामास कृतप्रणामः ॥७३॥

---

र्पितेन रक्तेन सौमित्रेर्लक्ष्मणस्य नेत्रयुगलेन निपीयमानः सादरं दृश्यमान इत्यर्थः, करतले चूडामणिं कलयन् दधानः सन् भरताग्रजस्य रामस्य पादारविन्दयुगलं ववन्दे प्रणनाम । वसन्ततिलकं वृत्तम् ॥७१॥

अक्षेति । अक्षस्य रावणतनयस्य तदाख्यस्य निहन्ता संहर्ता हनूमान् अक्षभ्रमेण सम्भूते गतागते ताभ्यां निस्तीर्णः पारं गतः विस्तीर्णो बृहन् महार्णवः येन तथाभूतोऽपि पृतनासमक्षं कपिसेनासन्निधौ आनन्दसिन्धौ आनन्दसागरे नितराम् अतिशयेन ममज्ज हन्तेति हर्षे । विरोधालङ्कारः । इन्द्रवज्रावृत्तम् ॥७२॥

आनीतेति । आनीतस्य चूडामणेः सन्निधानात् सकाशात् आविःप्रमोदेन आविर्भूतः प्रमोदः यस्य तथोक्तेन अतिप्रहृष्टेनेत्यर्थः रघूद्वहेन रामेण तत्र कपिसमाजे अनुयुक्तः पृष्टः पवमानजन्मा हनूमान् कृतप्रणामः सन् विज्ञापयामास यथावृत्तं न्यवेदयत् । इन्द्रवज्रावृत्तम् ॥७३॥

लङ्कापुरोपवनसीमनि राजपुत्री-
मालोकयं निशिचरीगणबाध्यमानाम्।
केनापि पातकवशेन सुपर्णलोके
बन्दीकृतामिव भुजङ्गमराजकन्याम् ॥७४॥

देव्यास्त्वदीयान्वयकीर्त्तनेन
त्वन्मुद्रया च व्यपनीय शोकम्।
वार्त्तामभिज्ञानमयीं ययाचे
प्रस्थातुकामः परिपूर्णकाम. ॥७५॥

ब्रह्मास्त्रवित्रस्तजयन्तकृत्यां
कथामभिज्ञाप्य वने प्रवृत्ताम्।
चिरं रुदत्या जनकेन्द्रपुत्र्या
चूड़ामणिः प्रेषित एष तुभ्यम् ॥७६॥

---

लङ्केति। लङ्कापुरस्य उपवनम् उद्यानम् अशोकवनमित्यर्थः तस्य सीमनि सीमाया तदीयैकप्रदेशे इत्यर्थः निशिचरीगणैः राक्षसी-वृन्दैः बाध्यमाना क्लिश्यमानाम् अतएव केनापि पातकवशेन पातक-विशेषेणेत्यर्थः सुपर्णलोके गरुड़भुवने बन्दीकृता भुजङ्गमराजकन्यामिव राजपुत्री मैथिलीम् आलोकयं दृष्टवानस्मीत्यर्थ.। उपमालङ्कार·। वसन्ततिलकं वृत्तम् ॥७४॥

देव्या इति। त्वदीयान्वयकीर्त्तनेन तव वंशकीर्त्तनेन तव मुद्रया नामाङ्किताङ्गुरीयकेणेत्यर्थः च देव्या· जानक्याः शोकं व्यपनीय निरस्य परिपूर्णकामः पूर्णमनोरथः अहं प्रस्थातुकामः अभिज्ञान-मयीं वार्त्ताम् ययाचे याचितवानस्मि। इन्द्रवज्रावृत्तम् ॥७५॥

ब्रह्मास्त्रेति। जनकेन्द्रपुत्र्या सीतया वने चित्रकूटकानने इत्यर्थः प्रवृत्ताम् उद्भूता, ब्रह्मास्त्रेण वित्रस्तस्य जयन्तस्य काक-

किं बहुना,

देव। तस्याः प्रतिष्ठासूनसूनाशोकपालितान्।
मुद्रयित्वा प्रपन्नोऽहं त्वदभिज्ञानमुद्रया ॥७७॥

इति श्रीविदर्भराजविरचिते चम्पूरामायणे
सुन्दरकाण्डं समाप्तम्।

---

कपिणा इन्द्रतनयस्य कृत्यम् आचरितं यस्मात् तयोक्ता कथाम् अभिज्ञाप्य प्रकटय्य चिरं रुदित्वा सत्या एष चूडामणिः शिरोरत्नं तुभ्यं प्रेषितः। उपजातिवृत्तम् ॥७६॥

देवेति। देव। तव अभिज्ञानमुद्रया अभिज्ञानभूतेन अङ्गुरीयकेणेत्यर्थः तस्याः देव्याः प्रतिष्ठासून् प्रस्थातुमिच्छून् आशा त्वत्समागमाभिलाष एव अशोक स्थानम् आश्रय इति यावत् तेन पालितान् रक्षितान् असून् प्राणान् मुद्रयित्वा निरुध्येति भावः अहं प्रपन्नः उपस्थितः त्वामिति शेषः। अनुष्टुब्वृत्तम् ॥७७॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता
चम्पूरामायणसुन्दरकाण्डव्याख्या
समाप्ता।

---

# अथ युद्धकाण्डम् ।



दृष्टे यत्र यदृच्छयापि वचसा देवी पुरो वर्त्तते
सारस्यं महदभ्युदेति सदसि प्रागल्भ्यमुज्जृम्भते ।
जायन्ते सकलाः कला अपि नृणां जागर्त्ति कीर्त्तिर्नवा
चेतः स्निह्यतु तत्र दैशिकपदाम्भोजे च भोजे मम ॥१॥

भोजेन तेन रचितामपि पूरयिष्यन्
अल्पीयसापि वचसा कृतिमत्युदाराम् ।
न व्रीड़ितोऽहमधुना नवरत्नहार-
सङ्गेन किं न हृदि धार्य्यत एव तन्तुः ॥२॥

---

दृष्टे इति । यत्र यस्मिन् यदृच्छया सहसा दृष्टेऽपि वचसां देवी वाग्देवी पुरः अग्रतः वर्त्तते आविर्भवति, महत् सारस्यं रसवत्त्वम् अभ्युदेति उद्भवति, सदसि सभायां प्रागल्भ्यं सौष्ठव्यमिति यावत् उज्जृम्भते, सकलाः समस्ता कला विद्या अपि जायन्ते उद्भवन्ति, नृणां मानवानां नवा कीर्त्तिः जागर्त्ति स्फुरतीत्यर्थः, तत्र दैशिकपदाम्भोजे गुरुदेवचरणकमले भोजे विदर्भराजे च मम चेतः स्निह्यतु स्निग्धं भवतु अनुरज्यतामित्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥१॥

भोजेनेति । तेन भोजेन रचिताम् अत्युदाराम् अतिमहतीं कृतिं रामचरितरूपामिति भावः अल्पीयसाऽपि अतिलघुनापि वचसा पूरयिष्यन्नपि अधुना न व्रीड़ितः न लज्जितः । तन्तुः सूत्रं नवरत्नहारस्य सङ्गेन हृदि किं न धार्य्यते एव लोकैरिति शेषः अपितु धार्य्यत एवेत्यर्थः । वसन्ततिलकं वृत्तम् ॥२॥

मुद्रामुद्रितजीवितां जनकजां मोहाकुलं राघवं
चूडारत्नविलोकनेन सुचिरं निध्याय निध्याय च ।
प्रारेभे हृदि लक्ष्मणः कलयितुं पौलस्त्यविध्वंसनं
धीरः पूरयितुं कथाञ्च विमलामेकेन काण्डेन सः ॥३॥

आनन्दमन्थरमनन्तरमाञ्जनेया-
दाकर्ण्य वृत्तिमनघाञ्जनकात्मजायाः ।
दृष्टिर्दशाननरुषा परुषायमाणा
बाणासनोपरि दधे प्रभुणा रघूणाम् ॥४॥

अथ सुग्रीवोऽपि दशग्रीवकुपितराघवावलोकनद्विगुणी-

---

मुद्रेति । मुद्रया अङ्गुरीयकेण मुद्रितं रुद्धं जीवितं यस्याः तथाभूतां रामाङ्गुरीयप्राप्त्या प्रस्थानोद्यतजीवनधारिणीमिति यावत् जनकजां सीतां चूडारत्नस्य सीतादत्तस्येति भावः विलोकनेन मोहाकुलं राघवं रामं हृदि हृदये सुचिरं निध्याय निध्याय च पुनः पुनः चिन्तयित्वेत्यर्थः धीरः कविः लक्ष्मणः एकेन काण्डेन परिच्छेद-विशेषेण पौलस्त्यस्य रावणस्य विध्वंसनं वधं कलयितुं कीर्त्तयितुं विमलां कथाम् आख्यानं पूरयितुञ्च प्रारेभे प्रावर्त्तत । शार्दूलविक्रीडितं वृत्तम् ॥२॥

आनन्देति । अनन्तरं रघूणां प्रभुणा रामेण आञ्जनेयात् हनूमतः जनकात्मजायाः सीतायाः अनघां निर्मलां रावणं प्रति निरनुरागामिति भावः वृत्तिं व्यवहारम् आनन्दमन्थरं हर्षजडं यथा तथा आकर्ण्य श्रुत्वा बाणासनोपरि धनुष उपरि दशाननरुषा रावणं प्रति क्रोधेनेत्यर्थः परुषायमाणा निष्ठुरेत्यर्थः दृष्टिः दधे अर्पिता । क्रोधेन शरासनं प्रति दृष्टिर्निक्षिप्तेत्यर्थः । वसन्ततिलकं वृत्तम् ॥४॥

णितरणोत्साहः(क) साहायकमनुपालयन्नम्बुमिव सिन्धु(ख)-मवधार्य्य धार्य्यमाणधैर्य्यावगाढ़मतिः (ग) अधिरूढ़त्रि-कूटशिखरा (घ) लङ्कामधिगन्तु(ङ)ममन्दकुमुदनलनीलप्र-मुखमपि बलीमुखानीकं (च) समनीनयत् ।

वारिदादपि च रामनामतः
पूरिता पुनरपाङ्गधारया ।
तत्क्षणं प्रतिचचाल दक्षिण
वाहिनीशमखिलापि वाहिनी ॥५॥

---

(क) दशग्रीवेति दशग्रीवे रावणे कुपितस्य राघवस्य अवलोकनेन द्विगुणोन्नत रणोत्साहः येन तथाभूतः ।

(ख) साहायक साहाय्यं रामस्येति शेषः अनुपालयन् कुर्व्वन्निति भावः अम्बुमिव कूपमिव क्षुद्रमिति भावः सिन्धुं समुद्रम् ।

(ग) धार्य्यमाणेति धार्य्यमाणं धैर्य्यम् अवगाढ़ा प्रविष्टा मतिः यस्य तथोक्तः ।

(घ) अधिरूढेति अधिरूढम् अधिष्ठितं त्रिकूटशिखरं यया तथोक्ता त्रिकूटपर्व्वतोपरि स्थितामित्यर्थः ।

(ङ) अधिगन्तुं प्राप्तुम् ।

(च) अमन्देति अमन्दाः प्रबलाः इत्यर्थः कुमुदनीलनलप्रमुखा यस्मिन् तथाभूतम् । बलीमुखानीकं कपिसैन्यम् ।

वारिदादिति । अपिच किञ्च वारिदात् जलदात् रामनामतः रामनाम्नः पुनः अपाङ्गः कटाक्षविलोकनमेव धारा वृष्टिप्रवाह इत्यर्थः तया पूरिता अखिला समस्तापि वाहिनी कपिसेना नदी च तत्क्षणं दक्षिणं वाहिनीशं नदीपतिं दक्षिणसमुद्रमित्यर्थं प्रतिचचाल प्रतस्थे । यथा जलदेन वृष्टिजलपूरिता नदी दक्षिणोदधिं गच्छति तथा रामस्य

ततः क्षणेन समक्षचलितऋक्षसमुदाये (छ) कुमुदा-मोदकारिणि (ज) शरभाधिकप्रसादशीले (झ) नीलेन्दी-वरानन्दिनि (ञ) दशाननदिशाक्रमणव्यग्रतेजसि (ट) समा-रूढ़तारानन्दनलक्ष्मणानुगते (ठ) सरभसमुदयसानुमन्त-मिव (ड) हनूमन्तमधिरोहति निशाचरतिमिरहरण-

---

अपाङ्गावलोकनेन समुत्साहिता कपिसेना दक्षिणं लवणोदधिं प्रति प्रचलिताभूदित्यर्थः। श्लेषानुप्राणित रूपकमलङ्कारः। रथोद्धता-वृत्तम् ॥५॥

(छ) समक्षेति समक्षम् अग्रतः चलितः प्रस्थितः ऋक्षाणां भल्लू-कानां नक्षत्राणाञ्च समुदायः यस्य तथोक्ते।

(ज) कुमुदामोदकारिणि कुमुदस्य तदाख्यवानरविशेषस्य आमोद-कारिणि उत्साहवर्द्धिनि कुमुदानाम् उत्पलानां विकासकारिणि च।

(झ) शरभेति शरभे तदाख्ये वानरे मृगविशेषे च शशके इति यावत् अधिकः प्रसादः प्रीतिः तच्छीले तद्वतीत्यर्थः।

(ञ) नीलः तदाख्यवानर एव इन्दीवरं नीलोत्पलं तस्य आन-न्दिनि हर्षवर्द्धिनि विकासकारिणि च।

(ट) दशाननेति दशाननस्य रावणस्य दिशा दिक् प्रभृतिस्तस्याः आक्रमणाय पक्षे दश आननानि यासां तथोक्तानां दिशां काष्ठानां दशानां दिङ्मुखानामित्यर्थः आक्रमणाय व्यग्रम् उद्यतं तेजो यस्य तादृशे।

(ठ) समारूढ़ेति समारूढ़ तारायाः नन्दनः अङ्गद इत्यर्थः येन तथाभूतेन लक्ष्मणेन अनुगतः तस्मिन्। पक्षे समारूढ़ानां समु-दितानां ताराणां नक्षत्राणाम् आनन्दनः शोभावर्द्धनः लक्ष्मणानुगतः तस्मिन्।

(ड) सरभसं सवेग सत्वरमित्यर्थः; [illegible] उदया-चलमिव।

निस्तन्द्रे (ढ) रामचन्द्रे (ण) समन्ततः (त) कन्दलित-बहुलहरिजालकोलाहलभरितहरिदन्तरो (थ) निरन्तरा-स्कन्दितनिकटकान्तारावलि(द)र्बलीमुखबलमहाम्बुधिः(ध) ससम्भ्रममुदजृम्भत (न) ।

उत्त्रासकातरमुदञ्चितपञ्चवक्त्रं
वित्रस्तहस्ति विगराकुचमूरुयूथम् ।
आलोललोचनतरङ्गकुरङ्गग्राव-
मासीदसीम विपिनं कपिनर्मघोषैः ॥६॥

---

(ढ) निशाचरेति निशाचरा राक्षसा एव तिमिराणि तेषां हरणे निस्तन्द्रः तन्द्रा आलस्यं तद्रहितः तस्मिन् ।

(ण) रामचन्द्रे राम एव चन्द्रः तस्मिन् ।

(त) समन्ततः सर्वतः ।

(थ) कन्दलितेति कन्दलितानां प्रचलितानां बहुलानां हरि-जालानां वानरसङ्घानां हंससमूहानाञ्च कोलाहलेन कलरवेण भरितं पूरितं हरिदन्तरं दिगन्तरं येन तथाविधः ।

(द) निरन्तरेति निरन्तरं यथा तथा आस्कन्दिता निध्वस्ता निकटकान्तारावलिः सन्निहितवनराजिर्येन तथाभूतः ।

(ध) बलीमुखेति बलीमुखानां वानराणां बलं सैन्यमेव महा-म्बुधिः महासमुद्रः ।

(न) ससम्भ्रमं सावेगम् । उदजृम्भत उद्बभौ ।

उत्त्रासेति । असीम सीमारहितं समग्रमित्यर्थः विपिनं वनं कपीनां वानराणां नर्मघोषैः केलिनिनादैः उत्त्रासाः त्रस्ताः कातराः महिषा यत्र तथोक्तम्, उदञ्चिता उद्गताः पञ्चवक्त्राः पञ्चानना सिंहा इत्यर्थः यत्र तथोक्तं, सिंहो मृगेन्द्रः पञ्चास्य इत्यमरः । वित्रस्ता भीता हस्तिनो यत्र तादृशम् । विगतं पलायितमित्यर्थः ग्राहकाणां

सैन्यैस्ततो रघुपतिः सरितां निवेशं
वेशन्तयन् विरलयन् विपिनान्तराणि ।
आरुह्य सह्यमपि शैलमसह्यवातं
मन्दानिलैकनिलयं मलयं जगाम ॥७॥

गत्वा च तमद्रिं सौमित्रिमिदमवादीत् ।

अमी तटसमीपनिर्झरतरङ्गरिङ्खत्पयो-
जडीकृतपटीरभूरुहकुटीरसंसारिणः ।
मनो विधुरयन्ति मे मलयमेखलामेदुरा
दुरासदवनप्रियप्रियतमारुता मारुताः ॥८॥

---

मृगविशेषाणां चमूरूणाञ्च यूथ वृन्दं यस्मात् तथाविधम्, तथा आलोलाश्चपलाः लोचनान्येव नयनान्येव तरङ्गा येषां तथाभूताः कुरङ्गशावाः हरिणशिशव यत्र तथाभूतम् आसीत् । वसन्ततिलक वृत्तम् ॥६॥

सैन्यैरिति । ततः अनन्तरं रघुपतिः रामः सरितां निवेशं सरित्पतिं सैन्यैः वानरचमूभिः वेशन्तयन् क्षुद्रसरः कुर्वन् लघूकुर्वन्निति भावः विपिनान्तराणि काननान्तराणि विरलयन् छेदनपातनादिभिः घनीभावादपनयन्नित्यर्थः, असह्यः वात वायुर्यत्र तथाभूतं सह्यं तदाख्यं शैलमपि आरुह्य मन्दस्य अनिलस्य एक अद्वितीय निलयः आश्रयः तं मलय तदाख्यं गिरिं जगाम । वसन्ततिलक वृत्तम् ॥७॥

अमी इति । तटसमीपेषु ये निर्झराः तेषां तरङ्गेषु रिङ्खद्भिः खेलद्भिः पयोभिः जलैः जडीकृताः शीतलीकृताः ये पटीरभूरुहाः चन्दनतरवः तेषां कुटीरेषु विवरेषु संसरन्तीति तथोक्ताः, एतेन शैत्यसौगन्ध्ये सूचिते । मलयस्य मेखलासु नितम्बेषु मेदुराः स्निग्धाः, दुरासदम् असाध्यमिति भावः वनप्रियाणां कोकिलानां प्रियतम

इत्यालपन् करुणमेष निरुद्धवेलं
शैलं महेन्द्रमधिगम्य महीमहेन्द्रः ।
आवर्त्तमुद्रितमिवान्वयभूपतीना-
मक्षय्यकीर्त्तिनिधिमम्बुनिधिं ददर्श ॥९॥

दृष्ट्वा च तमद्भुताकृष्टमना (प) रामस्तदिदमाचष्ट ।

द्रष्टुं नालमगाधतां फणिपतिः सीमान्तरेखा दिशो
द्वीपाः सैकतमण्डलानि तदयं दूरे गिरां वारिधिः ।
येषामेष सुखादखानि नखरैर्येनाथवा पूरित-
स्तेषां नः कुलभूभुजामविहतस्थेम्ने महिम्ने नमः ॥१०॥

---

मनोमोहनम् आहृत येषु तथाविधाः अमी मारुताः वायवः मे मम मनः विधुरयन्ति व्याकुलयन्ति । पृथ्वीवृत्तं, जसौ जसयला वसुग्रह-यतिश्च पृथ्वी गुरुरिति तल्लक्षणात् ॥८॥

इतीति । एष महामहेन्द्रः पृथिवीन्द्रः रामः इति इत्थं करुणं दीनम् आलपन् शोचन्निति भावः, निरुद्धा आक्रान्ता वेला तटभूमिर्येन तथाभूतं महेन्द्रं शैलम् अधिगम्य प्राप्य आवर्त्तमुद्रितम् आवर्त्तैः जलनिर्गमैः मुद्रितं चिह्नितम् अन्वयभूपतीनां कुलक्रमपतीनां सगरवंशीयानामिति यावत् अक्षय्यकीर्त्तिनिधिमिव चिरन्तन कीर्त्ति-रत्नमिव अम्बुनिधिं समुद्रं ददर्श । वसन्ततिलकं वृत्तम् ॥९॥

(प) अद्भुतेति अद्भुतेन आश्चर्य्येण आकृष्टं मनो यस्य तथा-विधः ।

द्रष्टुमिति । फणिपतिः अनन्तः अगाधताम् अतलस्पर्शितां द्रष्टुं न अलं न समर्थः । दिशः सीमान्तरेखाः सैकतमण्डलानि तोयोत्थित-वालुकाराशयः, तोयोत्थितं तत् पुलिनं सैकतं सिकतामयमित्यमरः । द्वीपाः यस्येति सर्वत्रानुषङ्गः । तत् तस्मात् अयं वारिधिः समुद्रः गिरां वाचां दूरे तिष्ठतीति शेषः अनिर्वचनीय इति यावत् । एष

अथ हरीन्द्रो (फ)ऽपि महेन्द्रोपान्तकान्तारशोभिनि (ब) लोभनीयमलयबालानिले वेलावनप्रदेशे (भ) दाशरथेर्निदेशेन निवेशयामास बलमखिलम् ।

सरसपटीरकुञ्जवनसञ्जवनाभिपत-
न्मृगमदगन्धगन्धवहमेदुरिते जलधेः ।
तटनिकटे दरस्फुटिततालरसालफलै-
रुदितमदा विचेरुरुदरम्भरयो हरयः ॥११॥

---

वारिधिः येषां सगरात्मजानां नखरैः सुखात् अनायासात् खातः, अथवा येन येन सगरेणेति भावः पूरितः तेषां नः अस्माकं कुलभूभुजां वंशनृपतीनां अविहता स्थेमा स्थिरता यस्य तादृशाय अप्रतिहतस्थैर्यायेत्यर्थः, चिरन्तनायेति भावः, महिम्ने माहात्म्याय नमः । शार्दूलविक्रीडितं वृत्तम् ॥१०॥

(फ) हरीन्द्रः वानरेन्द्रः सुग्रीवः ।

(ब) महेन्द्रस्य पर्वतस्य उपान्ते यः कान्तारः दुर्गमकाननं तेन शोभते इति तथोक्ते ।

(भ) लोभनीयः स्पृहणीयः मलयस्य बालानिलः मन्दसमीरः यत्र तथाभूते । वेलावनप्रदेशे तीरवनभूमौ ।

सरसेति । सरसे स्निग्धे पटीरकुञ्जवने चन्दननिकुञ्जकानने सञ्जवनेन सञ्जेन अभिपतन् अभिगच्छन् मृगमदगन्धः कस्तूरीगन्धस्तान् यो गन्धवहः वायुः तेन मेदुरिते स्निग्धीकृते जलधेः समुद्रस्य तटनिकटे दरस्फुटितैः अल्पपरिणतैः तालरसालफलैः तालफलैराम्रफलैश्चेत्यर्थः, उदरं बिभ्रतीति तथोक्ताः हरयः वानराः उदितमदाः उद्भूतानन्दाः सन्तः विचेरुः विचरन्ति स्म । नर्दटकं वृत्तं, यदि भवतो नजौ भजजला गुरु नर्दटकमिति तल्लक्षणात् ॥११॥

अनन्तरमपरमिव चलित महाम्भोधिमम्भोधिरोधसि (म) कृतसन्निवेशं (य) रोदसीलङ्घनविशृङ्खललाघवं (र) राघवानीक (ल) मनीकोन्मुखं (व) चारमुखा (श) दवधार्य्य धार्य्यमाण-हृदयान्तकः (ष) पङ्कलीनचरण इवैरावणो (स) रावणो विधेय पर (ह) मजानन् जानकीमप्यविमोक्तुकामः (क्ष) कामपरतन्त्रितो (ज्ञ) मन्त्रिभिः सम समाजमाजगाम।

रहस्तदानीं रजनीचरेन्द्र
प्रहस्तपूर्वानिदमाबभाषे।

---

(म) अम्भोधिरोधसि समुद्रतटे।

(य) कृतसन्निवेश विरचितस्थिति।

(र) रोदसीति रोदस्योः द्यावापृथिव्योः लङ्घने विशृङ्खल शृङ्खलारहितमनियमितमित्यर्थः लाघव द्रुतकारित्वमिति भावः, यस्य तादृशं केवल रोदसीलङ्घनसमयजव न ततोऽपि समधिकजवशालीति भावः।

(ल) राघवानीकं रामसैन्यम्।

(व) अनीकोन्मुख रणोन्मुखम्।

(श) चारमुखात् गूढपुरुषमुखात्।

(ष) धार्य्यमाणेति धार्य्यमाण हृदये अन्तकः यम मृत्युरित्यर्थः येन तथाभूत मृत्यु हृदि चिन्तयन्निति भावः।

(स) पङ्केति पङ्केषु कर्दमेषु लीनाः निमग्नाः चरणाः यस्य तथाभूतः। ऐरावणः ऐरावत इव।

(ह) पर उत्कृष्ट अनन्तरकरणीयमिति वा विधेय कर्त्तव्यम्।

(क्ष) अविमोक्तुकामः त्यक्तुमनिच्छुः।

(ज्ञ) कामपरतन्त्रित, कामाधीनीकृतः।

रह इति। तदानी तस्मिन् काले रजनीचरेन्द्रः रावणः रहः

इदन्तु मे वाञ्छितमौचितं वो
वदन्तु यद्वैरिजयोचितं न. ॥१२॥

अमी च पुनराश्रयन्ता विज्ञापयामासुः। देव! जीवन्तु भवदाज्ञापरे(ख)ष्वनुचरेषु परमस्मासु कस्मादयमवापो (ग) दुःखापोरुभुजपञ्जरानीता (घ) सीतां जातु (ङ) न जह्यातु(च) नाथ इत्यभिदधानेषु प्रधानेषु (छ) रम्भोपहितहठात्कारसम्भवमम्भोजसम्भवशाप(ज)मन्तराय(झ)मावेदयन्तं तु

इत्यव्यय विजने इत्यर्थं प्रहस्तपूर्वान् प्रहस्तप्रमुखान् अमात्यानिति शेषः इदं आवभाषे उवाच। न अस्माकं वैरिणः रामस्य जयोचितं यत् वः युष्माभिरौचित्येन इष्टं विवेचितमिति भावः, इदमेव मे मम वाञ्छितं इष्टं वदन्तु भवन्त इति शेषः। उपजातिवृत्तम् ॥१२॥

(ख) भवदाज्ञापरेषु भवतः आज्ञावहेषु।

(ग) अपायः प्राप्तिः विजयप्राप्तिचिन्ता कस्मादिति भावः।

(घ) दुःखापेन दुःखनाशिना उरुणा महता भुजपञ्जरेण आनीताम्।

(ङ) जातु कदाचित्।

(च) जह्यातु त्यजतु।

(छ) प्रधानेषु श्रेष्ठेषु अमात्येष्विति शेषः।

(ज) रम्भोपहितेति रम्भाया नलकूबरभार्यायाः उपहितेन कृतेन हठात्कारेण बलात्कारेण सम्भवः उत्पत्तिर्यस्य तथाभूतं अम्भोजसम्भवशापं ब्रह्मशापम्। पुरा [illegible] गच्छन् रावणः पथि नलकूवराभिसारिणीं रम्भां [illegible] गाहृदितेन ब्रह्मणा, यदि त्वं कामपि कामिनीं बलात् [illegible] एव ते मस्तकनाशो भवेदिति शप्तः। तत [illegible] नान् निवर्तते इति पुराणे।

(झ) अन्तरायं विघ्नं सीता [illegible]

र्णयं(ञ)तमग्रजन्मानं(ट) सम्मानयन् विनयविज्ञानभूषणो(ठ) विभीषणः सरोषमिदमवादीत् ।

अहह विधिनियोगादद्य नक्तञ्चरेन्द्र !
त्वमसि परकलत्रे दुर्निवारानुरागः ।
अरुणदवशिखायामामिषग्रासमोहा-
दविरतकृतजिह्वाचापलः केशरीव ॥१३॥

आकर्ण्य किन्नरमुखादनघे स्ववंशे
काकुत्स्थदारहरणोपनतं कलङ्कम् ।
हा हेति मीलितदृशः करयोर्युगन्त-
दृष्टौ श्रुतीरपि दधातु कथं विधातुः ॥१४॥

---

(ञ) दुर्णयं कुनीतिम् ।

(ट) अग्रजन्मानं ज्येष्ठम् ।

(ठ) विनयेति विनयः शिष्टाचारः विज्ञानं विशिष्टं ज्ञानञ्च भूषणं यस्य तथाभूतः ।

अहहेति । अहहेति खेदे, हे नक्तञ्चरेन्द्र ! निशाचरपते ! अद्य इदानीं त्वं विधिनियोगात् दैवदुर्विपाकात् आमिषग्रासमोहात् भोग्यवस्तुभक्षणभ्रमेण अरुणदवशिखायां रक्तवर्णदावाग्निज्वालायां, वने च वनवह्नौ च दवो दाव इहोच्यते इति सज्जनः । अविरतं कृतं जिह्वायाः चापलं येन तथाभूतः केशरीव सिंह इव परकलत्रे परभार्य्यायां दुर्निवारः अनुरागो यस्य तथाभूतः असि भवसि । मालिनीवृत्तम् ॥१३॥

आकर्ण्येति । किन्नराणां देवयोनिविशेषाणां मुखात् अनघे निष्पापे स्ववंशे निजकुले काकुत्स्थस्य रामस्य दारहरणेन कलत्रहरणेन उपनतम् उपस्थितं कलङ्कं श्रुत्वा हा हा इति मीलितदृशः

पश्येदानीमुदधिपरिखापालिता कुत्र लङ्का
वाचातीतः क्व नु वनचरादागतो दुर्विपाकः ।
कर्त्तुं नक्तञ्चरपरिभवं कापि मायैव शङ्के
जाता सीता धरणितनया जानकी मैथिलीति ॥१५॥

किं बहुना,

न गणयसि यदि त्वं वा नरं वानरं वा
ननु परिचितवीर्य्यौं जिष्णुभू कार्त्तवीर्य्यौ ।

---

मुद्रितनयनस्य विधातुः ब्रह्मणः तत् करयोः युगं भुजचतुष्टयमित्यर्थः अष्टौ स्तुतीः कर्णान् चतुर्मुखत्वादिति भावः कथम् अपि दधातु आच्छादयतु । ब्रह्मवंशः कलङ्कितस्त्वया सीताहरणेनेति भावः । वसन्ततिलकं वृत्तम् ॥१४॥

पश्येति । इदानीं पश्य अवलोकय विचारयेत्यर्थः, उदधिः समुद्र एव परिखा वेष्टनरूपो जलराशिः तया पालिता रक्षिता अमरदुर्गमेति भावः लङ्का कुत्र ? वाचातीतः अवाग्विषयः वनचरात् वानरात् आगतः उपनतः दुर्विपाकः मधुवनभङ्गलङ्कादाहादिरूप इति भावः क्व नु कुत्र खलु ? नैतयोः सङ्गतिः कदापि कथमपि न सम्भवतीति भावः । तस्मात् कापि मायैव नक्तञ्चराणां राक्षसानां परिभवं विध्वंसं कर्त्तुं धरणितनया जानकी मैथिली सीतेति नाम जाता उद्भूतेति शङ्के मन्ये । मन्दाक्रान्तावृत्तं, मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्ममिति तल्लक्षणात् ॥१५॥

नेति । यदि त्वं वानरं वा नरं वा न गणयसि अवजानासीति भावः, ननु भो जिष्णुभू नारायणावतारः परशुराम इत्यर्थः, कार्त्तवीर्य्यः कृतवीर्य्यनन्दनश्च तौ परिचितवीर्य्यौ विज्ञातविक्रमाविति यावत्, कार्त्तवीर्य्यार्जुनः दिग्विजये भवन्तं जित्वा कारावासं नीतवान्, तञ्च भार्गवः क्षयं निनाय, रामश्च तं भार्गवं जितवानिति

न कलयसि यदि त्वं नन्दिशापञ्च धातु-
र्वरमपि नरवर्जं दुर्जयो दैवयोगः ॥१६॥

इत्यादिनीतिसहितं हितमभिहितवन्तं निजमनुजमवज्ञाय ज्ञातिरमरातिपक्षः(ड) शिक्षणीय इति शंसन्तं (ढ) नृशंस(ण)न्तमरुन्तुदरोषणभाषणो (त) विभीषणो विहाय विहायसि (थ) समुत्पतन्त(द)मनूत्पतद्भि(ध)श्चतुर्भिरमात्यैः समतीत्य वारिधिं (न) दूरत एव सवितर्कमुद्-

---

भवतो विदितमेवेति भावः। यदि त्वं नन्दिनः शापं यतो मां विकृतमुखं दृष्ट्वा उपहससि अतस्ते मद्विधमुखात् वानरात् विध्वंसो भविष्यतीत्येवंरूपमिति भावः तथा धातुः ब्रह्मणः नरवर्जं मानवव्यतिरिक्तं वरम् अवध्यत्वरूपमिति भावः, दैवात् स्वर्गादवध्यत्वं मर्त्त्येभ्यस्त्वापराङ्मुख इति रघुवंशे कालिदासः। न कलयसि न विचारयसीत्यर्थः तदा दैवयोगः नियतिबलमिति भावः दुर्जयः दुरतिक्रम इति यावत् अवश्यमेव ते विनाशो भविष्यतीति भावः। मालिनीवृत्तम् ॥१६॥

(ड) अरातिपक्षः शत्रुपक्षः।

(ढ) शंसन्तं कथयन्तम्।

(ण) नृशंसं निष्ठुरम्।

(त) अरुन्तुदेति अरुन्तुदं मर्मव्यथादायकं रोषणभाषणं क्रोधवचनं यस्य तथाभूतः।

(थ) विहाय परित्यज्य। विहायसि आकाशे।

(द) समुत्पतन्तं समुद्गच्छन्तम्।

(ध) अनूत्पतद्भिः अनुगच्छद्भिः।

(न) समतीत्य समुल्लङ्घ्य। वारिधिं समुद्रम्।

ग्रीवान् (प) सुग्रीवादीनन्तरिक्षगत एवमाचचक्षे (फ)।

पौलस्त्यमग्रजनुषं परुषञ्चरन्तं
सन्त्यज्य बान्धवजनञ्च विभीषणोऽहम्।
रामं विराममिह विद्विषतामवाप-
मापन्नदैन्यहरणं शरणं ममेति ॥ १७॥

अनन्तरमतिकरुणं (ब) समीरयन्तं (भ) समीरभुवा (म) च सप्रत्यभिज्ञविज्ञापितं (य) निशाचरपतेरनुजं निशम्य (र) तदा तदागमनाय (ल) किं कारणमिति शङ्कापरवशे (व)

---

(प) उद्ग्रीवान् उन्नमितग्रीवान्।

(फ) आचचक्षे उवाच।

पौलस्त्यमिति। परुषं निष्ठुरं यथा तथा चरन्तं व्यवहरन्तमित्यर्थः. अग्रजनुषं ज्येष्ठं पौलस्त्यं रावणं बान्धवजनञ्च ज्ञातिवर्गञ्चेत्यर्थः. सन्त्यज्य अहं विभीषणः. इह समुद्रतटे विद्विषतां शत्रूणां विरामं शमयितारम् आपन्नानां संश्रितानां दैन्यहरणं दुःखभञ्जनं मम शरणं रक्षितारं, शरणं गृहरक्षित्रोरित्यमरः। रामम् अवाप प्राप्तवानस्मि। वसन्ततिलकं वृत्तम् ॥१७॥

(ब) अतिकरुणम् अतिदीनम्।

(भ) समीरयन्तं कथयन्तम्।

(म) समीरभुवा वायुपुत्रेण हनूमतेत्यर्थः।

(य) सप्रत्यभिज्ञं प्रत्यभिज्ञा परिचयः, तया सहितं सत्यं विभीषणोऽयं साधुरिति सपरिचयमिति भावः विज्ञापितं निवेदितम्।

(र) निशम्य श्रुत्वा।

(ल) तदागमनाय तस्य आगमनाय।

(व) शङ्कापरवशे शङ्कितमनसीत्यर्थः।

निवेदयति हरीशे (ग) दाशरथिरपि दयमानः स्मयमानो (घ) मधुरमिदमभाषत।

अभयागतोऽयमपयाति चेन्मुधा
रघवो भवन्ति लघवो न किं सखे।।
अनुजोऽयमस्तु तनुजोऽथवा रिपोः
करुणापदं हि शरणागतो जनः ॥१८॥

तदनु हृदयविदा (ङ) हनूमता सरय(च)मानीतो विनीतोऽयमाशरपतिरवन्दत (छ) दाशरथिम्।

रामस्तमाह विनतं रजनीचरेन्द्र
दत्तं तदद्य भवते दशकण्ठराज्यम्।

---

(ग) हरीशे वानरेन्द्रे सुग्रीव इत्यर्थः।

(घ) स्मयमानः ईषद्धसन्।

अभयागत इति। हे सखे! मित्र! अभयागतः अभयार्थमागतः शरणागत इति यावत् अयं चेत् यदि मुधा विफलं यथा तथा अकृतार्थं यथा तथेति भावः अपयाति दूरोऽपगच्छति, तदा रघवः रघुवंश्याः किं लघवः न भवन्ति? अपितु भवन्त्येवेत्यर्थः रघूणां शरणागतप्रतिपालकत्वादिति भावः। तस्मात् अयं विभीषणः रिपोः शत्रोः रावणस्य अनुजः कनीयान् अथवा तनुजः पुत्रः अस्तु भवतु, शरणागतो जनः करुणापदं हि कृपापात्रमेव अवश्यमेवास्य मया आश्रयो दातव्य इति भावः। मञ्जुभाषिणीवृत्तं, सजसा जगौ च यदि मञ्जुभाषिणी तल्लक्षणात् ॥१८॥

(ङ) हृदयविदा आशयज्ञेन।

(च) सरयं सवेगं सत्वरमिति यावत्।

(छ) आशरपतिः निशाचरपतिः विभीषण इति यावत्, क्रव्यादोऽस्रप आशर इत्यमरः। अवन्दत प्रणमत्।

अस्मिन्नुदाहरणमग्रजराज्यभोक्ता
सानुप्लवः प्लवगमण्डलसार्वभौमः ॥१९॥

श्रेयःपदात्पदमुदेति विधेः प्रसादात्
प्रायस्तदद्य फलितं हि विभीषणे यत् ।
रेखातपत्रसहितं पदमस्य गृह्णन्
एकातपत्रसहितं पदमेष भेजे ॥२०॥

असौ पुनरग्रत एव भरताग्रजापाङ्गसुधातरङ्गाभिषिक्तो (क)

---

राम इति । रामः तं विनतं रजनीचरेन्द्रं विभीषणम् आह अब्रवीत्, भवते त्वद्य तत् दशकण्ठराज्यं राक्षसाधिपत्यमिति भावः दत्तम् । अस्मिन् मद्वचसीति भावः अग्रजस्य वालिनः राज्यभोक्ता प्राप्तराज्य इति यावत् सानुप्लवः सानुगः प्लवगमण्डलसार्वभौमः वानराधिपतिः सुग्रीव इत्यर्थः उदाहरणं दृष्टान्तः प्रमाणमिति यावत्, यथाहं वालिनं हत्वा सुग्रीवाय वानरराज्यं दत्तवान्, तथा दशाननं हत्वा तुभ्यं राज्यं दास्यामीति भावः । वसन्ततिलकं वृत्तम् ॥१९॥

श्रेय इति । विधेः दैवस्य प्रसादात् आनुकूल्यादित्यर्थः हेतोः श्रेयःपदात् शुभङ्करस्थानात् पदं शुभमिति शेषः उदेति उपनमति, अद्य विभीषणे तत् प्रायः बाहुल्येन फलितं हि सफलमेवेत्यर्थः । यत् यस्मात् एष विभीषणः अस्य रामस्य रेखातपत्रसहितं रेखा लक्ष्मणा चिह्नविशेषः आतपत्रं छत्रं ताभ्यां सहितं शुभलक्षणयुतमिति भावः पदं चरणं गृह्णन् एकातपत्रसहितं पदम् एकाधिपत्यमिति भावः भेजे प्राप । वसन्ततिलकं वृत्तम् ॥२०॥

(क) भरतेति भरताग्रजस्य रामस्य अपाङ्गसुधातरङ्गेण मधुरापाङ्गविलोकनेनेति यावत् अभिषिक्तः लब्धनिशाचराधिपत्य इति भावः ।

ऽपि पुनरुक्तराज्याभिषेकः (ख) सकलविस्रम्भभाजनतया (ग) सुग्रीव इवापरो दशग्रीवबलमखिलमावेद्य सद्य एव लङ्कापुरसमास्कन्दनाय (घ) सेनासमुत्तरणहेतुं सेतुं विधातुमाराधयतु वारान्निधि(ङ)मिति सविनयमेनं विज्ञापितवान्।

अथ वारान्निधिं ध्यायन्नम्भोधिहृदयेशयः।
व्यानशे दर्भशयनं वेदीमिव हुताशनः॥२१॥

तत्र कुशास्तरणमध्यमध्यासीने निध्यानवति (च) देवे रामचन्द्रे नियन्त्रित इव (छ) नियतिवशा(ज)न्निशात्रयमपि प्रसादं (झ) नाससाद (ञ) यादसाम्पतिः (ट)।

(ख) पुनरुक्तोति पुनः उक्तः वचसा अङ्गीकृत इति यावत् राज्याभिषेकः यस्य तथाभूतः।

(ग) सकलविस्रम्भभाजनतया सम्यग्विश्वासपात्रतया।

(घ) लङ्केति लङ्कापुरस्य समास्कन्दनाय आक्रमणाय।

(ङ) वारान्निधिं समुद्रम्।

अथेति। अथानन्तरम् अम्भोधिहृदयेशयः प्रलये सागरशायीत्यर्थः रामः हुताशनः अग्निः वेदीमिव परिष्कृतयज्ञभूमिमिव वारां निधिं समुद्रं ध्यायन् चिन्तयन् दर्भशयनं कुशास्तरणं व्यानशे अधितष्ठावित्यर्थः। अनुष्टुब्वृत्तम्॥२१॥

(च) अध्यासीने अधितिष्ठति। निध्यानवति समाधिमति।

(छ) नियन्त्रित इव संयत इव।

(ज) नियतिवशात् दैववशात्।

(झ) प्रसादं सुस्थितिमिति भावः।

(ञ) नाससाद प्राप।

(ट) यादसाम्पतिः, यादांसि जलजन्तव इत्यमरः। तेषां पतिः समुद्र इत्यर्थः।

व्यापारयन्नथ विलोचनकोणमब्धौ
कोपारुण कुटिलितभ्रूकुटीविटङ्कः ।
आदातुमैहत धनुः प्रथमो रघूणा
पैतामहप्रथमसर्गसमापनाय ॥२२॥

आदाय च दुरापं चापमारोपयन् विशिखमनल्पशिखम् (ठ) ।

नाथो विमोक्तुमुदयुङ्क्त न यावदेव
पाथोनिधेरुपरि पावकरूपमस्त्रम् ।
सन्तापिनी नयनवारिमिषेण ताम्य-
न्मन्दाकिनी किमुत वारुणमाललम्बे ॥२३॥

---

व्यापारयन्निति । अथानन्तर रघूणा प्रथम अग्रणी राम इत्यर्थः कुटिलित वक्रीकृत भ्रूकुटी एव विटङ्क कपोतपालिका यस्य तथोक्तः सन्, कपोतपालिकायान्तु विटङ्क पुन्नपुंसकमित्यमरः । अब्धौ समुद्रे कोपेन अरुण रक्त विलोचनकोणम् अपाङ्गमिति यावत् व्यापारयन् प्रेरयन् पैतामहप्रथमसर्गसमापनाय पूर्वपुरुषीयप्रथमसृष्टिरूपसागरविध्वसनाय धनु आदातु ग्रहीतुम् ऐहत चेष्टितवान् । वसन्ततिलक वृत्तम ॥२२॥

(ठ) दुराप दुर्धर्ष चाप धनु आदाय अनल्पशिख महाज्वाल विशिख शरम् आरोपयन् सयोजयन् ।

नाथ इति । नाथ प्रभु राम पाथोनिधेः समुद्रस्य उपरि पावकरूपम् अग्निरूपम् अस्त्रम आग्नेयास्त्रमित्यर्थ विमोक्तु निक्षेप्तु यावदेव न उदयुङ्क्त उद्युयुजे, तावत् सन्तापिनी पतिदुःखेन सन्तापयुक्तेति भाव, ताम्यन्ती मन्दाकिनी गङ्गा नयनवारिमिषेण अश्रुच्छलेन वारुण वारुणास्त्रमित्यर्थः आललम्बे जग्राह किमुत किम् ? वसन्ततिलक वृत्तम् ॥२३॥

रुषा विशिखमुच्छिखं जहति राघवे लाघवा-
द्जायत रुजायतश्वसितनक्रचक्राकुलम् ।
रसातलवलत्तिमि स्तिमितकुम्भिकुम्भीनस-
प्रविष्टगिरिकन्दरान्तरलमन्तर वारिधेः ॥२४॥

तत्क्षण जलनिधिः क्षन्ता (ड) च युगान्तानलस्य (ढ) सहनोऽपि गरलदहनोष्मणां (ण) सोढा(त)पि वाडवगाढावलेपस्य (थ) तितिक्षु(द)रपि भार्गवतीक्ष्णपरशोः (ध)

---

रुषेति । रुषा क्रोधेन राघवे रामे लाघवात् द्रुतहस्तत्वादिति भावः उच्छिखम् उद्गतज्वालं विशिखं जहति त्यजति सति वारिधेः समुद्रस्य अन्तरम् अभ्यन्तरम् अन्तःकरणञ्च रुजया व्यथया सन्तापे-नेत्यर्थः आयत दीर्घं श्वसितं निश्वासो येषां तथाभूतैः नक्रचक्रैः कुम्भीरादिजलचरवृन्दैः आकुलं, रसातलात् पातालात् वलन्तः सञ्चरन्तः सन्तापादिति भावः तिमयः मत्स्यविशेषाः, अस्ति मत्स्य-स्तिमिर्नाम शतयोजनमायत इत्युक्तेः । यस्मिन् तत् । स्तिमितैः निश्चलैः कुम्भिभिः कुम्भीरैः कुम्भीनसैः जलजन्तुभेदैश्च प्रविष्टा गिरि-कन्दरा पर्वतगुहा यस्य तथोक्तं तरलं चपलम् अधीरमित्यर्थः अजा-यत अभूत् । पृथ्वीवृत्तम् ॥२४॥

(ड) क्षन्ता सहनः ।

(ढ) युगान्तानलस्य प्रलयाग्नेः ।

(ण) गरलदहनोष्मणां कालकूटदहनसन्तापानाम् ।

(त) सोढा सहनः ।

(थ) वाडवेति वाडवस्य वडवाग्नेः गाढः उद्भटः अवलेपः गर्वः यस्य ।

(द) तितिक्षुः सहनशीलः ।

(ध) भार्गेति भार्गवस्य परशुरामस्य तीक्ष्णपरशोः निशितकुठार-स्य ।

परिशोषयन्त(न)मन्तरङ्ग(प)मङ्गारमय शरमयं (फ) निमिष(ब)मपि न विषेहे ।

शरणमथ शरव्यथानिदानं
जलनिधिरेष जगाम राममेव ।
परुषकुलिशपातमेव किंवा
जलधरमर्थयते न जीवलोकः ॥२५॥

आगत्य चानुपदमुपदीकृतनूतनरत्नराशि(भ)र्वारिराशिर्विनीतवेशो विशेषोपजातनतिभिर्नुतिभि(म)रभ्यनन्दयद्गुु-

---

(न) परिशोषयन्तं परिशुष्कं कुर्वन्तम् ।

(प) अन्तरङ्गम् अन्तःकरणम् ।

(फ) शरमयमिति जलनिधिविशेषणम् ।

(ब) निमिषमपि अल्पक्षणमपि ।

शरणमिति । अथानन्तरम् एष जलनिधिः शरव्यथाया निदानं मूलकारणं, निदानन्त्वादिकारणमित्यमरः । राममेव शरणं जगाम प्राप । जीवलोकः परुषं कठोरं कुलिशपातः वज्रपातः, यस्मात् तथाभूतमेव जलधरं मेघं किंवा न अर्थयते ? न प्रार्थयते ? अपितु प्रार्थयते एव जलमिति शेषः । पुष्पिताग्रावृत्तम्, अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रेति तल्लक्षणात् । दृष्टान्तालङ्कारः । तदुक्तं दर्पणे । दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनमिति ॥२५॥

(भ) अनुपदं पश्चात् । उपदीकृतेति उपदीकृता उपढौकनीकृता नूतना रत्नराशयः येन तथोक्तः ।

(म) विशेषेति विशेषेण उपजाता नतिः प्रणतिर्यासु तथाविधाभिः । नुतिभिः स्तोत्रैः, स्तवः स्तोत्रं स्तुतिर्नुतिरित्यमरः ।

मन्दनम् । तदनु तदनुसहित(य)ममोघ(र)मस्त्रं वैधात्रं कुत्र॰
चन वनसीमनि विनिपात्य साध्यते (ल) मया सलिलवि॰
ष्टम्भः (व) सम्प्रत्येव नलो विदधातु सेतुमित्यभिदधानो
मन्दमन्दमन्तरधात् (श)।

आदिष्टा रघुपुङ्गवेन हरयोऽप्यष्टासु दिक्षु क्षणात्
त्रैलोक्याञ्चितमूलमध्यशिखरान् धात्रीधरानाहरन् ।
यैः क्षिप्तैः सलिले नलेन जलधिर्यातोऽपि जम्बालतां
निर्गच्छत्यचिराय निर्झरपय.पूरे पुपूरे पुन. ॥२६॥

---

(य) तदनु तदनन्तरम् । तदनुसहितं तेन रामेण अनुसंहितं
प्रयोक्तुमभ्युद्यतमिति यावत् ।

(र) अमोघम् अव्यर्थम् ।

(ल) वैधात्रं ब्राह्मम् । कुत्रचन कस्मिंश्चित् । वनसीमनि कानन॰
देशे । विनिपात्य व्यर्जायत्वेत्यर्थः । साध्यते क्रियते ।

(व) सलिलविष्टम्भ. जलस्तम्भनम् ।

(श) अन्तरधात् तिरोदधे ।

आदिष्टा इति । रघुपुङ्गवेन रघुश्रेष्ठेन रामेण आदिष्टा
आज्ञप्ता हरयः वानराः अपि क्षणात् अष्टासु दिक्षु स्थितानिति
शेष, त्रैलोक्यं त्रिभुवनम् अञ्चितानि गतानि मूलानि मध्यानि
शिखराणि शृङ्गाणि येषां तथोक्तान् पातालप्रविष्टमूलान् भूगत-
मध्यान् त्रिदिवगतशृङ्गानिति यावत् महत इति भावः धात्री॰
धरान् पर्वतान् आहरन् आनिन्युरित्यर्थ. । यैः पर्वतैः नलेन
तदाख्यवानरेण सलिले क्षिप्तैः जलधि. जम्बालता शैवालवत्त्वं
यात प्राप्तोऽपि अचिराय तत्क्षणादेव निर्गच्छति निःसरति पर्वतेभ्य
इति भाव', निर्झरपय पूरे प्रस्रवणजलप्रवाहे सति पुनः किम् पुपूरे
पूर्णतां गत. शार्दूलविक्रीडित वृत्तम् ॥२६॥

अथ जलधौ निपेतुरतिदूरनिपातदल-
ज्जलचरदत्तजीवनगन्धमहौषधयः ।
स्फुटितधराविराजदहिपुङ्गवफूत्करण-
क्षुभितगुहागृहासिकमहाहरयो गिरयः ॥२७॥
अलक्षितमहीधरग्रहणमस्फुटक्षेपणं
विचित्रघटनं ततो विरचितो नलेनामुना ।
अबोधि हरियूथपैरधिपयोधि सेतुर्महान्
भुवो भुज इवाभवन्निजतनूभुवो लम्बयन् ॥२८॥

---

अथेति । अथानन्तरं गिरयः पर्वता अतिदूरात् निपातेन दलन्तः भेदं गताः स्फुटितदेहा इति यावत् ये जलचरा जलजन्तवः तेभ्यः दत्तं जीवनं यैः तथाभूता गन्धमहौषधयः येषु तथोक्ताः, स्फुटितायां विदीर्णायां अतिदूरात् निपातेनेति भावः धरायां पृथिव्यां विराजता उद्गच्छता अहिपुङ्गवानां पन्नगप्रवराणां फूत्करणेन फूत्कारेणेत्यर्थः क्षुभिताः क्षोभं गताः सन्त्रस्ता इति यावत् गुहा एव गृहाणि तेषु आसते इति तथोक्ता महाहरयः महान्तः सिंहा येषु तथाभूताः सन्तः जलधौ समुद्रे निपेतुः निपतन्ति स्मेत्यर्थः । नर्दटकं वृत्तं, यदि भवतो नजौ भजजला गुरु नर्दटकमिति तल्लक्षणात् ॥२७॥

अलक्षितेति । ततः अनन्तरम् अमुना नलेन अलक्षितं महीधराणां पर्वतानां ग्रहणं ग्रहणं यत्र तत्, अतएव अस्फुटम् अव्यक्तं क्षेपणं पर्वतानामिति शेषः यत्र तत् यथा तथा, तथा विचित्रा अद्भुता घटना योजना यत्र तत् यथा तथा, अधिपयोधि समुद्रोपरि विरचितः निर्मितः महान् सेतुः हरियूथपैः वानरसेनापतिभिः अबोधि विदितः । स च सेतुः निजतनूभुवः निजपुत्रात् पृथिव्यो-

अनन्तरमन्तकमुखा इव वलीमुखाः (ष) प्रबोधे(स)नेव सेतुपथेन संसारमिव दुस्तरन्तरणिपतिमतीत्य सद्य एव प्रकाशं गिरीशं सुवेलमवलोकयन्तो मुहुरविन्दन्त (ह) महान्तमानन्दम् ।

वलयिततटदेशैर्वाहिनीनां निवेशै-
रविरलवनरेखामध्यमध्यास्त रामः ।
कपिकलकलशीर्य्यत्कन्दरामन्दिरान्त-
स्खलितकुपितसिंहत्रस्तवेलं सुवेलम् ॥२९॥

---

स्थान् पदार्थानिति भावः लम्भयन् समुद्रपारं नयन् भुजः पृथिव्याः भुज इव अभवत् । पृथ्वीवृत्तम् ॥२८॥

(ष) अन्तकमुखा इव अन्तकस्य यमस्येव मुखं येषां तथोक्ताः यम-भीषणवदना इत्यर्थः । वलीमुखा वानराः ।

(स) प्रबोधेन प्रकृष्टज्ञानेन ।

(ह) दुस्तरं दुष्पारं तरणिपतिं समुद्रम् अतीत्य अतिक्रम्य प्रकाशं प्रकाशमानं साक्षादिति यावत् गिरीशम् इव हरोपममिति भाव सुवेलं तदाख्यं पर्वतं लङ्कानिलयमिति यावत् अवलोकयन्तः । अविन्दन्त अलभन्त ।

वलयितेति । रामः वलयिताः वेष्टिताः तटदेशाः यैः तथोक्तैः वाहिनीनां सेनानां निवेशैः अवस्थानैः अविरला सान्द्रा वनरेखा या मध्यं यस्य तथाभूतं कपीनां वानराणां कलकलेन कोलाहलेन शीर्य्यद्भ्यः विदीर्य्यमाणेभ्यो‌ऽतिभ्य कन्दरामन्दिराणां गुहागृहाणाम् अन्तः मध्यात् स्खलितेभ्यः निर्गतेभ्यः कुपितेभ्यः सिंहेभ्यः त्रस्ता भीता वेला तटदेशः तटदेशीयप्राणिन इति यावत् यस्य तादृशं सुवेलं तदाख्यं गिरिम् अध्यास्त अधितष्ठौ । मालिनीवृत्तम् ॥२९॥

तदनु दशमुखः शुकमुखा(च)दतिलङ्घितजलधि(क)मधिगतसुवेलाराम (ख) रामं निशम्य (ग) सम्यगवगमनाय (घ) रघुनायकबलमनु (ङ) प्रहितयोर्विदितवेषविभीषणावेदितकुपितकपिलोकनियन्त्रणनितान्तखिन्नयो(च)र्विपन्नाधारदाशरथिविमोचितप्राणयोः (छ) शुकसारणयोर्वचसा प्रासादाग्रमासाद्य (ज) प्रत्येकशस्तदावेद्यमानान् (झ) प्रवर्द्धमानसमरसन्नाहमतीन् (ञ) प्लवङ्गमसेनाधिपतीन-

---

(च) शुकमुखात् शुकनाम्नः राक्षसचरात् ।

(क) अतिलङ्घितजलधिम् उत्तीर्णसागरम् ।

(ख) अधिगतेति अधिगतः अधिष्ठितः सुवेल एव आरामः उपवनं येन तथोक्तम् ।

(ग) निशम्य श्रुत्वा ।

(घ) सम्यगवगमनाय सम्यक् ज्ञानाय ।

(ङ) रघुनायकबलं रामसैन्यम् अनु प्रतीत्यर्थः ।

(च) विदितेति विदितः ज्ञातः वेषः परिच्छदः शुकसारणयोरिति भावः येन तथाभूतः यः विभीषणः तेन आवेदिता रावणचरावेताविति ज्ञापिताः अतएव कुपिताः ये कपिलोकाः वानरसङ्घाः तेषां नियन्त्रणेन ताडनेन नितान्तम् अत्यर्थं खिन्नयोः ।

(छ) विपन्नेति विपन्नानाम् आधारः आश्रयः दाशरथिः रामः तेन विमोचिता रक्षिता इति यावत् प्राणा ययोः तथाभूतयोः ।

(ज) प्रासादाग्रं राजभवनशिखरम् । आसाद्य प्राप्य ।

(झ) तदावेद्यमानान् ताभ्यां शुकसारणाभ्याम् आवेद्यमानान् विज्ञाप्यमानान् ।

(ञ) प्रवर्द्धमानेति प्रवर्द्धमाना समरसन्नाहे युद्धोद्यमे मतिः येषां तान् रणोद्भटानित्यर्थः ।

तिधीरतया (ट) सावधीरणमवेक्षमाणः (ठ) प्रतिपक्षबल-प्रशमिनौ तावुभावप्युपेक्षमाणः (ड) आदूलप्रभृतिभिः प्रण-यिभि(ढ)रप्यवगताशेषवृत्तान्तः सान्तस्तापः (ण) सुचिर-मनुचिन्तयन् अन्तिकासीनमतिविनयप्रह्व (त) विद्युज्जिह्व-मुपह्वरे (थ) किमप्यभिधाय सौधादवततार। तत्क्षण क्षणदाचरो(द)ऽपि निदेशा(ध)न्निशाचरपतेर्दाशरथिशिरः सशरस्त्वनुरपि निर्माय मायानुभावादाहृत्यानीत(न)मित्य-भिधाय निधाय च पुरो (प) निदाघातिशयसन्तापिनीं(फ)

---

(ट) अतिधीरतया अतिगम्भीरतया ।

(ठ) सावधीरण सावज्ञम् । अवेक्षमाणः अवलोकयन् ।

(ड) प्रतिपक्षेति प्रतिपक्षाणां शत्रूणां बलप्रशमिनौ बलक्षय-करौ तावपि रामलक्ष्मणावपि ।

(ढ) प्रणयिभिः स्निग्धबन्धुभिः ।

(ण) अवगताशेषवृत्तान्तः विज्ञातसमस्तवार्त्तः । सान्तस्तापः सन्तप्तान्तःकरणः ।

(त) अन्तिकासीनं समीपोपविष्टम् । अतिविनयप्रह्वम् अति-विनयनम्रम् ।

(थ) उपह्वरे रहसि ।

(द) क्षणदाचरः राक्षसः विद्युज्जिह्वाख्य इति भावः ।

(ध) निदेशात् आदेशात् ।

(न) मायानुभावात् मायाप्रभावेण । आहृत्यानीत रणभूमेरा-नीतम् ।

(प) पुरः अग्रतः ।

(फ) निदाघातिशयेति निदाघातिशयेन ग्रीष्मातिरेकेण सन्ता-पिनीं ग्लानिमापद्यमानामिति यावत् ।

ग्रासन्तीमिव (ब) वैद्युतानल(भ)श्चिरकालविह्वला(म)मा-
कुलीचकार मैथिलीम्। ततः प्रबुद्धा च मुग्धा (य) पुन
स्तथ्यमिति विचार्य्य तदनार्य्यं पर्य्यदेवयत (र) पतिदेवता।

रक्षोऽवरोधवसतिं रजनीचरीणां
रक्षापरोधमपि रावणभर्त्सनञ्च।
सर्वंसहे! यदुपलम्भधिया स एव
सर्वं सहे भवति जीवति हन्त सीता॥२०॥

एवमत्याहितमत्यासमेतामेतामासाद्य (ल) सखि वे-

---

(ब) ग्रासन्तीमिव आग्रसन्तीमिव ।

(भ) वैद्युतानलः वज्राग्निः ।

(म) चिरकालविह्वला चिरसन्तप्ताम् ।

(य) प्रबुद्धा च प्रलब्धबोधवती अपि मुग्धा स्त्रीस्वभावादिति भावः ।

(र) तत् अनार्य्यम् असदाचरणं तथ्यं सत्यम्। पर्य्यदेवयत परिदेवितवती विललापेत्यर्थः, विलापः परिदेवनमित्यमरः ।

रक्षोऽवरोधमिति । हे सर्वंसहे ! पृथिवि ! मातरिति भावः, यस्य उपलम्भधिया प्राप्तिबुद्ध्या पुनः प्राप्स्यामि तमिति प्रत्याशयेति यावत् रक्षसाम् अवरोधवसतिम् अन्तःपुरवासं रजनीचरीणां राक्षसीनां रक्षोपरोधं मम रक्षणार्थम् उपरोधं निर्बन्धविशेषं रावणस्य भर्त्सनञ्च एतत् सर्वं सहे सह्यं करोमि, स राम इति भावः एव भवति ? निधनं गतः ? हन्त खेदे, सीता जीवति इदानीमपि प्राणिति । वसन्ततिलकं वृत्तम् ॥२०॥

(ल) अत्याहितमत्यासम् अत्याहितम् अमङ्गलं तस्मिन् या अति तया आसम् अवस्थानम्। एतां प्राप्ताम् अशुभमतिप्रसक्तामिति भावः। एतां सीताम्। आसाद्य प्राप्य।

टेहि। वैदेहि वचः (व) कथमियं तव दीना दशा दशा-ननकृता मायाहि (श) मा याहि मनसि वैधुर्य्यं (ष) निखिलजगतीधुर्य्यभुजबलाभिरामे (स) रामे किमिदमना-र्य्यमविचार्य्य ह)मित्यभिदधाना नवीनासारनिस्यन्दिनी कादम्बिनीव घर्म्मोद्वेगिनीं केकिनीं सरमा(क्ष) चिरमाश्वा-सयामास।

अथ निगदितनीतिं मुञ्च मुञ्चेति सीताम्
अविरतरणकण्डूभीषणो रावणोऽयम्।
मनसि न बहु मेने मन्त्रिणं माल्यवन्त
द्दिवि परममरीणां मण्डलं माल्यवन्तम् ॥२१॥

---

(व) हे वैदेहि मैथिलि! वच वाक्यं देहि वै कथा कथय एव।

(श) मायाहि माया इन्द्रजालमेव।

(ष) वैधुर्य्यं व्याकुलता मा याहि न गच्छ व्याकुला न भव।

(स) निखिलेति निखिलानां समस्तानां जगतीनां धुर्य्यं भार-वहनक्षमं यत् भुजबलं तेन अभिरामे मनोरमे।

(ह) अविचार्य्यम् अविचारणीयम् असम्भाव्यमिति भावः।

(क्ष) नवीनेति नवीनान् आसारान् धारासम्पातान्, धारासम्पात आसार इत्यमरः। निस्यन्दते निःस्रवतीति तथोक्ता। कादम्बिनीव मेघमालेव। घर्म्मोद्वेगिनीं ग्रीष्मसन्तापिनीम्। केकिनीं मयूरीम्। सरमा तदाख्या विभीषणस्त्री।

अथेति। अथानन्तरम् अविरतैः रणकण्डूभिः भीषणः भयङ्करः अयं रावणः, सीतां मुञ्च मुञ्च राघवाय प्रत्यर्पय इति इत्थं निगदिता कथिता नीतिर्येन तं मन्त्रिणं माल्यवन्तं तदाख्यं राक्षसवृद्धं माता-महं सति शेषः मनसि न बहु मेने न बहु सम्मानितवान् तदुक्तया

अथ रामोऽपि कामोचितवेषविभीषणामात्यविदित-रक्षोनगररक्षोदन्तो (क) हृदन्तोपजातसमरसरम्भविधि(ख)रम्बुधिमेखलालङ्कारमणे(ग)र्लङ्कायाः प्राग्द्वारस्थाय प्रहस्ताय (घ) पर्यस्ताहितप्राणानिल (ङ) नील दक्षिण-द्वाररक्षिणोर्महोदरमहापार्श्वयोर्विश्वत्रयविजयधौरेयन्तारे-यं (च) प्रत्यग्द्वारपालनाधिकृते पाकशासनजित(छ) परा-

---

न जयाहेति भाव.। पर केवल माल्यवन्त द्वारभूपतासीत भाव दिवि स्वर्गे अमरोणा देवोना मण्डल स्वर्गीयत्वरलन्द्रोवर्गमिति यावत् बहु मेने इति पूर्वेणान्वय । मालिनीछन्दस ॥२१॥

(क) कामेति कामोचित' मनोरमोपयुक्त वेषा यस्य तथाभूत राजवेष इति भाव' य विभीषण तस्य अमात्यै अनुचरै' विदितः ज्ञातः रक्षसा नगरस्य लङ्काया रक्षोदन्तः रक्षावृत्तान्त' येन तथा-भूत ।

(ख) हृदन्तेति हृदन्ते हृदयमध्ये उपजात' उपस्थित' समर-संरम्भविधिः युद्धोद्योगानुष्ठानं यस्य तथोक्तः ।

(ग) अम्बुधीति अम्बुधि' समुद्र एव मेखला काञ्ची सा एव अलङ्कार' तस्य मणेः रत्नभूताया इत्यर्थः ।

(घ) प्राग्द्वारस्थाय पूर्वद्वारवर्त्तिने पूर्वद्वाररक्षिणे इति भाव । प्रहस्ताय प्रहस्तवधार्थमिति यावत् ।

(ङ) पर्यस्तेति पर्यस्त' परितोविक्षिप्त यथा तथा आहित' अर्पित प्राणानिल प्राणवायु येन तथोक्त प्रहस्तवधार्थं कृतप्राण-पणमिति भाव' ।

(च) विश्वत्रयेति विश्वत्रयस्य त्रिभुवनस्य विजये धौरेय' धुरन्धरः तम् । तारेयं तारानन्दनम् अङ्गदमिति यावत् ।

(छ) प्रत्यग्द्वारपालनाधिकृते पश्चिमद्वाररक्षिणे इत्यर्थः । पाक-शासनजिते इन्द्रजिते ।

क्रममिव तनूमन्तं (ज) हनूमन्तमन्तर्व्यूहविहितरक्षाय (झ) विरूपाक्षाय रक्षःप्लवङ्गमऋक्षाधिपतीन् प्रतिनिधीन् विनिधाय(ञ) विधाय च सज्जं धनुरनुजेन समं समीकाभिमुखेन (ट) दशमुखेन गुप्त(ठ)मुत्तरं गोपुर(ड)मुत्तरङ्गो (ढ) बलेरुपरुरोध (ण)।

अत्याकुलां हरिबलैरवलोक्य लङ्का
दत्तार्गलेषु दशकन्धरकिङ्करेषु ।
आरब्धकैस्त्वरितमन्तकराजधान्या
मुद्घाटिताभिरुदभावि कवाटिकाभिः ॥३२॥

---

(ज) तनूमन्तं धृतशरीरम् ।

(झ) अन्तरिति अन्तर्व्यूहाना मध्यवर्त्तिना विहिता कृता रक्षा येन तथोक्ताय ।

(ञ) रक्ष प्लवङ्गमऋक्षाधिपतीन् रक्षसां प्लवङ्गमानां वानराणाम् ऋक्षाणां भल्लुकानाञ्च अधिपतीन् विभीषणसुग्रीवजाम्बुवत इत्यर्थः प्रतिनिधीन् स्वस्वरूपानिति भाव॰ विनिधाय स्थापयित्वा ।

(ट) समीकाभिमुखेन संग्रामोन्मुखेन ।

(ठ) गुप्तं रक्षितम् ।

(ड) गोपुरं पुरद्वारं, पुरद्वारन्तु गोपुरमित्यमरः ।

(ढ) उत्तरङ्गः उद्धतः ।

(ण) उपरुरोध आचक्राम ।

अत्याकुलामिति । हरिबलैः वानरसैन्यैः लङ्काम् अत्याकुलाम् अतिशयेनावरुद्धामित्यर्थः अवलोक्य दृष्ट्वा दशकन्धरकिङ्करेषु रावणभृत्येषु दत्तः अर्गलः यैः तथाभूतेषु लङ्काद्वारावरोधिष्विति यावत् अन्तकरा-

ततक्षणञ्च लक्ष्मणाग्रज. सुग्रीवेण सह सुवेलाचलकूट त)-मधिरूढस्त्रिकूटावनीधरचूडामणि (थ) सिंहलद्वीपकमल-कर्णिका (द) निर्माणकौशलीं (ध) विश्वकर्मणो निवेश-दरीं (न) निशाचरहरीणां (प) अनारतवन्दीकृतामरपुर-स्त्रीवाष्पनदीमातृकोपवनसीमान्ता (फ) सीमान्तरात् (ब) निरन्तरसेवासमागतदिक्पालमातङ्गमदाम्बुपङ्किलवाह्या-

---

ज धान्यां यमपुर्यां स्वारक्षकै. यमकिङ्करैरति यावत् उद्घाटताभि-कवाटिकाभिः त्वरितम् उद्भावि उद्भूत राक्षसाना स्वनगरानयनार्थं यमेन द्वाराणि उद्घाटितकवाटानि कृतानीति भाव । वसन्त-तिलक वृत्तम् ॥२२॥

(त) सुवेलाचलेति सुवेलाचलस्य कूट शृङ्गम् ।

(थ) त्रिकूटावनीधरस्य त्रिकूटशिखरिण चूडामणि शिरो-रत्नभूतम् ।

(द) सिंहलद्वीपमेव कमलं पद्मं तस्य कर्णिका मध्यस्थानविशेष· तां सिंहलद्वीपमध्यवर्त्तिनीमिति भाव· ।

(ध) निर्माणकौशलीं निर्माणे कौशलरूपाम् ।

(न) निवेशदरी निवासगुहाम् ।

(प) निशाचरहरीणा राक्षससिंहानाम् ।

(फ) अनारतेति अनारतं. अजस्रनिपातैः वन्दीकृतानाम् अमर-पुरस्त्रीणां वाष्पैः अस्रुभि· नदीमातृकः सञ्जातशस्य इति भाव उप-वनसीमान्तः उद्यानसीमाप्रदेशः यस्याः ता, देशो नद्यम्बुवृष्ट्यम्बुसम्प-न्नव्रीहिपालित । स्यान्नदीमातृको देवमातृकश्च यथाक्रममित्यमर ।

(ब) सीमान्तरात् स्थानान्तरात् ।

ङ्गनोत्सङ्गां (भ) लङ्कामवलोकमान(म)स्तत्रैकत्र (य) समु-
न्नतं सौधमधिवसन्तं सन्तमसमिव (र) स्वदेहबद्धमन्तिक-
चरोदस्तविमलमुक्तातपत्रमिषात्ततारकेण (ल) विभावरी-
पतिनेव सेव्यमानं (व) वैमानिकवधूविधूयमानचामरद्वन्द्व-
शोभितमभितस्खलितमन्दाकिनीपरीवाहमिवाञ्जनाचल(श)
मखिलजगद्विजयवर्णावलीमतिनिर्णायकै(ष)रनेकविधसम

---

(भ) निरन्तरेति निरन्तरं सेवायै समागतानां दिक्पालानाम् इन्द्रादीनां ये मातङ्गा हस्तिनः दिग्गजा इति यावत् तेषां मदाम्बुभिः मदजलैः पङ्किलः सकर्दमः वाह्याङ्गनस्य उत्सङ्गः क्रोडमध्यस्थलमिति यावत् यस्याः तथोक्ताम् ।

(म) अवलोकमानः पश्यन् ।

(य) तत्र लङ्कायाम् । एकत्र एकस्मिन् प्रदेशे ।

(र) समुन्नतम् उत्तुङ्गम् । सौधं हर्म्यम् । अधिवसन्तम् अधितिष्ठन्तम् । सन्तमसमिव गाढान्धकारमिव ।

(ल) स्वदेहबद्धं निजदेहकान्तम् । अन्तिकचरैः सन्निधिवर्तिभिः भृत्यैरिति यावत् उदस्तस्य ऊर्द्धं धृतस्य विमलस्य विशुद्धस्य मुक्तातपत्रस्य लम्बितमुक्ताहारच्छत्रविशेषस्य मिषात् व्याजात् । ततारकेण तारका नक्षत्राणि तत्सहितेन ।

(व) विभावरीपतिना चन्द्रेणेव । सेव्यमानम् आराध्यमानम् ।

(श) वैमानिकेति वैमानिकवधूभिः खेचरनारीभिः विधूयमानेन विचाल्यमानेन चामरद्वन्द्वेन शोभितं विराजितम् । अभितः उभयोः पार्श्वयोरिति यावत् स्खलितौ मन्दाकिनीपरीवाहौ गङ्गाप्रवाहौ यस्य तं तथोक्तम् । अञ्जनाचलं कज्जलगिरिं कृष्णवर्णत्वादिति भावः ।

(ष) अखिलेति अखिलस्य समस्तस्य जगतः त्रिभुवनस्येत्यर्थः विजयवर्णावलीनां मतिः बुद्धिः तस्याः निर्णायकैः निश्चायकैः ।

काभिघातमग्नभग्नैरावणविषाणकुलिशाग्रैरुद्गीर्णविशालव च.स्थलफलक(ख)मानीलतमालसच्छाय(ह)माच्छादिताभि नवलोहितपट(च)मापाटलसन्ध्यारागबन्धुर कन्धरमिव (क) ददर्श दशकन्धरम् ।

कोपादुत्पतितस्तदा हरिपतिः कौटीरमुत्पाटितं
चक्रे नैर्ऋतनायकस्य सुदृढीचक्रे च वैभीषणम् ।
युद्ध्वा च प्रथमावमानकुपितेनैतेन बुद्ध्वा ततो
मायामस्य जगाम कोमलगुणग्राम स राम पुनः ॥३३॥

---

(ख) अनेकविधेति अनेकविधेषु विविधप्रकारेषु समीकेषु सङ्ग्रामेषु अभिघातेन प्रहारेण मग्नानि प्रोथितानि भग्नानि खण्डितानि तथाभूतानि यानि ऐरावणानाम् ऐरावतानां विषाणानि दन्ताः कुलिशानि वज्राणि च तेषाम् अग्रैः सुखभागैः । उद्गीर्णं विघ्नितमिति यावत् विशालं वृहत् वक्षःस्थलफलकं यस्य तथोक्तम् ।

(ह) आनीलेति आनीलैः घननीलैः तमालैः सम्रा छाया कान्तिर्यस्य तथोक्तम् ।

(च) आच्छादितेति आच्छादितः परिहितः अभिनवः लोहितः रक्तः पटः वसनं येन तादृशम् ।

(क) आपाटलेति आपाटलेन ईषद्रक्तेन सन्ध्यारागेण बन्धुरम् उन्नतावनतं कन्धरमिव मेघमिव ।

कोपादिति । तदा हरिपतिः वानरेन्द्रः सुग्रीव इत्यर्थः कोपात् क्रोधात् खलु दर्शनजादिति भावः उत्पतितः सन् नैर्ऋतनायकस्य राक्षसेश्वरस्य कुटीरमेव कौटीरं मुकुटमित्यर्थः उत्पाटितं चक्रे कृतवान्, वैभीषणञ्च विभीषणसम्बन्धि च कौटीरं सुदृढीचक्रे च सुदृढीकृतवान् । पूर्वस्य विध्वंसनमेव अपरस्य दृढीकरणमिति

ततस्तस्याहवोपलम्भविधिना (ख) दाशरथिना समा-मन्त्य मन्त्रिभिः सम(ग)मादिष्टः साधिष्ठभुजशौर्य्यशाली(घ) बालिनन्दनः सलील (ङ) साल(च)मुल्लङ्घयन् लङ्का प्रविश्य नृशंस(छ)मिति शशंस निशिचरपतिम्।

सोऽहं प्लवङ्गमपतेस्तनयस्त्वदीय-
निःश्वासरोधिनिजबालधिमण्डलस्य।
कालस्य दूषणखरत्रिशिरोमुखानां
पौलस्त्य! मा रघुपतेरवधेहि दूतम् ॥२४॥

---

बोद्धव्यम्। ततश्च प्रथमः य· अश्मान· स्तम्भकुम्भ इति भावः तेन कपि·ः तेन एतेन रावणेन युद्धा अथ युद्ध कृत्वेत्यर्थः ततः तस्मिन् युद्धे खल रावणस्य माया कपट बुद्धा ज्ञात्वा कोमल· गुणग्रामः गुणराशिर्यस्य तथाभूत रामं पुन. जगाम प्राप। शार्दूलविक्रीडितं वृत्तम् ॥२३॥

(ख) तस्य रावणस्य आहव सहसाकारित्वम् अविमृश्यकारित्व-मिति यावत् तस्य उपालम्भे निर्भर्त्सने विधिः व्यापारः अभि-लाष इति भाव· यस्य तथाभूतेन रावणदुर्व्यतिरस्काराथिनेति भाव·।

(ग) सम युगपत् ऐकमत्याऽवलम्बनेनेति भावः।

(घ) साधिष्ठेति साधिष्ठम् अतिशयेन साधु यत् भुजयो. शौर्य्यं तेन शालते शोभते इति तथोक्त·।

(ङ) सलील सावज्ञम्।

(च) सालं प्राकारं, प्राकारो वरणः साल इत्यमरः।

(छ) नृशंसं निष्ठुरवचनम्।

सोऽहमिति। हे पौलस्त्य! अहं त्वदीयं निःश्वासं रुणद्धीति तथोक्तं निज बालधिमण्डलं लाङ्गूलवलयं यस्य तथाभूतस्य प्लवङ्ग-

रक्षःपते! रघुपतेर्नयनं तृतीय-
मास्कन्दनीयमिति हा मनुषे कलत्रम्।
अम्भोजमित्यलिकसम्भवमक्षि शम्भोः
मन्दाकिनीमधुकरस्तु यथा मदान्धः॥२५॥

किञ्च,

एकं हैहयसम्भवात्परिभवान्म्लानं द्वितीयं पुन-
र्दैत्येन्द्राविनयात्तृतीयमपि मे ताताहिताद्वै क्षतात्।
इत्थं त्वच्चरिते पितामहमुखान्येकं विनैवाभवन्
तच्चैकं न विधेहि दाशरथये देया त्वया मैथिली॥२६॥

---

भपते वानरराजस्य वालिनः प्रसिद्धः तनयः पुत्रः। पुरा सागरे सन्ध्यां कुर्वन् वाली रावणं जिगीषया समागतं दृष्ट्वा लाङ्गूलेन समावेष्ट्य चतुर्षु सागरेषु निक्षिपन् अवरुद्धश्वासं कृतवान्। ततश्च तेन प्रच्युतेन प्राणरक्षार्थं प्रार्थितः स एनं प्राणैर्व्यमोचयदिति पुराणम्। दूषणखरत्रिशिरोमुखानां कालस्य अन्तकस्य रघुपतेः रामस्य दूतं माम् अवधेहि अवगच्छ। वसन्ततिलकं वृत्तम्॥२४॥

रक्षःपते इति। हे रक्षःपते! राक्षसराज! रघुपतेः रामस्य तृतीयं नयनं नयनस्वरूपमिति यावत् कलत्रं भार्य्यां मदान्धः मदेन मन्दाकिन्याः हरजटावर्त्तिन्या इति भावः मधुकरः शम्भोः हरस्य अलिकसम्भवं ललाटवर्त्ति अक्षि नेत्रम् अम्भोजं कमलं यथा आस्कन्दनीयं भोग्यम् इति मनुषे मन्यसे हा इति खेदसूचकमव्ययम्। मदान्धमधुकरस्य शम्भुतृतीयनयने तच्छिरोवर्त्तिन्या गङ्गायाः कमलबोधेन यथा तस्मिन् लोभः तथा तव राघवतृतीयनेत्ररूपे तत्कलत्रे लोभ इति भावः। उपमालङ्कारः। वसन्ततिलकं वृत्तम्॥२५॥

एकमिति। एकं पितामहस्य हैहयसम्भवात् कार्त्तवीर्य्यार्जुनात् कारावन्धनरूपादिति भावः परिभवात् अपमानात्, द्वितीयं पिता-

कौबेरस्य तु पुष्पकस्य हरणं कैलासविक्षेपणं
दिक्पालाक्रमणञ्च जल्पसि मुहुः किंवा यशस्तावता ।
वेषं संयमिनो विधाय विजने देवीं वने जानकीं
वेगादाहरता त्वयाद्य रचितं वीरव्रतस्यौचितम् ॥३७॥
किं बहुना,

---

कहुस्य दैत्येन्द्रस्य बलेः अविनयात् अत्याचारात् पराजयजन्यादिति भावः, तृतीयमपि पितामहस्य मे मम तातेन पित्रा बालिनेत्यर्थः आहितात् जनितात् वैक्लवात् सागरजलनिपातनरूपादिति भावः म्लानम् । इत्थं तव पारते एकं चरणं विना पितामहस्य ब्रह्मणः मुखानि त्रीणीति भावः मुखानि अभवन् म्लानानीति शेषः । एकमेव उज्ज्वलम् अस्तीति भावः । तच्च एकं मुखं न विधेहि न कुरु म्लानमिति शेषः राघवभार्याहरणेनेति भावः । तस्मात् त्वया दाशरथये रामाय मैथिली देया प्रत्यर्पणीया । त्वं हि ब्रह्मवंशप्रसूतः तव कर्मणा त्वत्पूर्वपुरुषस्य तस्य त्रीणि मुखानि म्लानानि आसन् । एकन्तूज्ज्वलमस्ति, तदपि न म्लानं नयेति भावः । शार्दूलविक्रीडितं वृत्तम् ॥३६॥

कौबेरस्येति । कौबेरस्य कुबेरसम्बन्धिनः पुष्पकस्य हरणं, कैलासस्य अद्रेः विक्षेपणं समुद्धरणं, दिक्पालानाम् इन्द्रादीनाञ्च आक्रमणं विनिर्जयं मुहुः पुनः पुनः जल्पसि कथयसि तत्तत्कर्मभिः श्लाघसे इति भावः तावता तत्तत्कर्मणा किं वा यशः? तवेति शेषः, नैव यशो लब्धमिति भावः । संयमिनः योगिनः वेषं नेपथ्यं विधाय कृत्वा विजने जनशून्ये वने देवीं जानकीं वेगात् सहसा आहरता त्वया अद्य इदानीं वीरव्रतस्य वीरत्वस्येति भावः औचितम् औचित्यं रचितं कृतम् एतेन कर्मणैव ते यशः विस्तृतमिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥३७॥

पूजोपहाररचनाय पुरा पुरारे-
श्छिन्नेषु मूर्द्धसु नवस्ववशेषितं यत् ।
देवस्तदद्य कुतुकी दशमं शिरस्ते
रामो बलिं रचयितुं रणदेवतायै ॥३८॥

एवमरुन्तुदभाषणरोषणेन (ज) रावणेन गृह्यतामयं निगृह्यतामिति सरयं(झ)मादिष्टानालम्बितभुजप्रकोष्ठा-नाशरांश्चतुरश्चतुरो(ञ)ऽय भुजङ्गानिव विहङ्गाधिपो (ट) गृहीत्वा भुवि निपात्य चैतान् पादाहतेन (ठ) प्रासाद-

---

पूजोपहारेति । पुरा पूर्वं पुरारेः हरस्य पूजायाम् उपहारः बलिः तस्य रचनाय अनुष्ठानाय नवसु मूर्द्धसु शिरःसु छिन्नेषु सत्सु यत् अवशेषितम् अच्छिन्नमिति यावत् देवः रामः अद्य इदानीं तत् ते तव दशमं शिरः रणदेवतायै युद्धाधिष्ठात्र्यै देव्यै बलिं रचयितुं कुतुकी कौतुकवान् समुत्सुक इति भावः वर्त्तते इति शेषः । वसन्ततिलकं वृत्तम् ॥३८॥

(ज) अरुन्तुदेति अरुन्तुदं मर्मव्यथादायि यत् भाषणं वचनं तेन रोषणः कोपनः तेन ।

(झ) सरयं सवेगं सत्वरमिति यावत् ।

(ञ) आलम्बितेति आलम्बितः भुजप्रकोष्ठः येषां तान् महाभुजानिति भावः आशरान् राक्षसान्, क्रव्यादोऽस्रप आशर इत्यमरः । चतुरः चतुःसङ्ख्यकान् । चतुरः निपुणः ।

(ट) भुजङ्गानिव सर्पानिव । विहङ्गाधिपः गरुड ।

(ठ) पादाहतेन चरणाघातेन ।

त्रङ्गमपि भिन्दन्नविन्द(ड)न्नात्मनः प्रतिरथ पङ्क्तिरथभुवो(ढ)
विविश निवेशम् ।

रघुतनयस्ततो विदितरावणदुर्विनय.
कुपितमना मनागिव दधे कुटिलां भ्रुकुटीम् ।
अथ परिवव्रुराशरपुर हरयः सरय
युगविगमे यथा युगपदम्बुधिमौर्वशिखाः ॥३९॥
ततो मदपरिप्लवत्प्लवगवीरसरम्भण-
क्षणक्षुभितकौणपप्रकरपाणिकोणाहत. ।
स्वैरधिकभैरवैरुपरुरोध रोदोऽन्तरं
तरङ्गितघनाघनस्तनितबन्धुभिर्दुन्दुभि ॥४०॥

---

(ड) अविन्दन् अलभमानः ।

(ढ) प्रतिरथ प्रतिवीरम् । पङ्क्तिरथभुवः दशरथतनयस्य ।

रघुतनय इति । ततः अङ्गदप्रत्यागमनानन्तर विदित रावणस्य दुर्विनय दुराचार. येन तथाभूत रघुतनयः रामः कुपितमनाः सन् मनागिव ईषदिव कुटिलां वक्रां भ्रुकुटी दधे कृतवान् । अथ भ्रुकुटीरचनादर्शनानन्तरमित्यर्थः हरयः वानराः युगविगमे कल्पान्ते और्वशिखाः वडवानलज्वालाः अम्बुधिमिव युगपत् सम-कालं सरय सवेगम् आशरपुर राक्षसनगरं परिवव्रुः अवरुरुधुः । नर्दटकं वृत्तम् ॥३९॥

तत इति । ततः लङ्कापुरावरोधनानन्तरं मदेन रणोत्साहेन परिप्लवन्तः समन्तात् प्लुति कुर्वन्तः ये प्लवगवीरा वानरभटाः तेषां सरम्भणक्षणे रणोद्यमकाले क्षुभितानां खेद गताना कौणपाना राक्षसाना, राक्षस कौणपः क्रव्यादित्यमरः । प्रकरस्य समूहस्य पाणिकोणेन आहतः ताडितः दुन्दुभि. रणवाद्यविशेष. तरङ्गितानि

तेन च समन्ततः कन्दलयता दलयतेव (ण) जगन्ति दुन्दुभिनिर्घोषेण रोषेण च प्रेर्य्यमाणाः केशरिण इव (त) गिरिकन्दरान् मन्दिरान् निर्गत्य गत्यन्तराय सन्धायकान्यपत्यानीवानिमित्तान्यनवलोकमाना(थ) विमानाधिगताविबुधसीमन्तिनीभिः (द) सह विजिहीर्षयेव (ध) प्रस्थानसमयपरिम्लानमुखी. सुमुखी(न)रप्यगणयन्तो (प)

---

उत्तरोत्तर प्रवृत्तानि यानि घनानां मेघानाम् स्वनानि नादित्ता घन येभ्य तयोत्तानि अतिसान्द्राणि स्तनितानि निस्वनाः तेषां नम्बुभि सदृशैरित्यर्थ अधिकभैरवै अतिभयङ्करै· रवं ध्वानै· रोदोन्तर द्यावापृथिव्योरन्तरालम् उपरुरोध आच्छादयामास पूरयामासेत्यर्थ·। पृथ्वीवृत्तम् ॥४०॥

(ण) कन्दलयता पूरयता। दलयता विदारयता।

(त) केशरिण इव सिंहा इव।

(थ) गत्यन्तराय रक्षोऽपायकरणाय सन्धायकानि स्वरक्षातत्पराणीति भाव. अपत्यानि पुत्रान् शिशूनिति भाव। अनिमित्तानि दुर्निमित्तानि वामाक्षिस्पन्दनादीनीति भावः अनवलोकमाना अलक्षयन्त।

(द) विमानेति विमानमधिगता· खेचर्य्य इति भावः या विबुधाना देवाना सीमन्तिन्य नार्य्य ताभि·।

(ध) विजिहीर्षयेव विहारेच्छयैव।

(न) प्रस्थानेति प्रस्थानसमये युद्धयात्राकाले परिम्लान मुख यासा ता.। सुमुखीः सुदती· कामिनीरिति शेष।

(प) अगणयन्तः अचिन्तयन्त. तासां निषेधवचनानि अशृण्वन्त इति भावः।

निरन्तरज्वलितकोपानल-नयनकोणारुणालातशतनिपात-विलासचलितनिजवारणनिवारणावेशपरवशाः (फ) दिशामुखमुखरितशिवारवाम्रेडितव्याकुलीकृतकुलमहीध्रा (ब) गृध्रायतपक्षविक्षेपकृतपताकानिकायपुनरुक्तसमुत्तुङ्गशताङ्गसङ्घातपरिगता(भ) नितान्तनिशितकृतान्तदंष्ट्राखरतरनखरपट्टीसप्रासपरशुगदामुषल-शक्तितोमरमुद्गलपरिघद्रुघण-

---

(फ) निरन्तरेति निरन्तर ज्वलितः कोपानलः कोपाग्निर्येषु तथाभूताः नयनकोणाः कटाक्षविक्षेपाः तत्र अरुणानि रक्तानि अलातशतानि अङ्गारशतानि तेषां निपातेन यः विलासः भयं तेन चलितानां पलायितानां निजवारणानां स्वस्वहस्तिनां निवारणावेशस्य नियमनोद्योगस्य परवशाः अधीनाः तादृशान् वारणान् निशितदण्डेन निवारयन्त इति भावः ।

(ब) दिशेति दिशामुखेषु मुखरितानां शब्दायमानानां शिवानां रवेण नादेन आम्रेडितं द्विस्त्रिरुक्तं यथा तथा अत्यर्थं यथा तथेत्यर्थः, आम्रेडितं द्विस्त्रिरुक्तमित्यमरः व्याकुलीकृतं कुलं वंश यत्र महीध्र पर्वत· येषां तथोक्ताः· दुर्निमित्तशिवारवेण वशीयान् व्याकुलयन्त इति भावः ।

(भ) गृध्रेति गृध्राणां शकुनिपक्षिणाम् आयताः विस्तृता ये पक्षाः तेषां विक्षेपेण सञ्चालनेन कृतानां सम्पादितानां पताकानां निकायपुनरुक्ताः निवासाधिका अधिकपताकाशालिन इत्यर्थः ये समुत्तुङ्गाः समुन्नताः शताङ्गा रथाः तेषां सङ्घातेन परिगताः आवृताः ।

कृपाणधारिणो (म) दारुणाजगरसन्तानसंवीता (य) इव विन्ध्यकूटा (र) व्यूढातिकरालकालायसकङ्कटा विकल्पा इव (ल) कल्पाम्बुदानां व्यक्तय इव (व) कालरात्रेर्विवर्त्ता इव (श) कलिकालस्य च भयङ्कराः समराङ्गणमवदारयन्तः (ष) समीरयन्तो (स) वीरवादा(ह)नादाय च शरा-

---

(म) नितान्तेति नितान्तनिशिताः अतितीक्ष्णाः याः कृतान्तदंष्ट्राः अन्तकदशनाः तद्वत् खरतराः तीक्ष्णतराः नखराः पट्टिशः अस्त्रभेदाः सप्रासाः प्रासास्त्रसहिता परशवः कुठाराः प्रासाः कुठारास्त्रेत्यर्थः, गदाः मुषलानि प्रसिद्धानि, शक्तयः अस्त्रविशेषाः, तोमराः मुद्गराः परिघाः द्रुघणाः अस्त्रविशेषाः कृपाणास्तलवारा तान् धारयन्तीति तथोक्ताः तत्तदायुधधरा इत्यर्थः ।

(य) दारुणेति दारुणैः भीषणैः अजगरसन्तानैः अजगरसर्पवंशीयैः संवीताः संयुक्ताः ।

(र) विन्ध्यकूटाः विन्ध्याद्रेः कूटा इव विन्ध्यपर्वतशृङ्गाणीव ।

(ल) व्यूढः बद्धः आच्छादित इत्यर्थः अतिकरालः अतिभीषणः कालायसकङ्कटः कृष्णलौहकवचः यैः तथोक्ताः लौहवर्मपरिधायिन इति यावत् । विकल्पा इव भेदा इव संशयस्थानानीति वा ।

(व) कल्पाम्बुदानां प्रलयमेघानाम् । व्यक्तय इव पृथक् स्थिता आत्मान इव, व्यक्तिस्तु पृथगात्मिकेत्यमरः ।

(श) विवर्त्ता इव परिणामा इव ।

(ष) समराङ्गणं संग्रामक्षेत्रम् अवदारयन्तः विदारयन्तः ।

(स) समीरयन्तः कथयन्तः ।

(ह) वीरवादान् वीरध्वनीन् सिंहनादान् त्यजन्त इति यावत् ।

इति

सनमासारै(च)रिव गिरिमम्भोधरा (क) दूरापातिभिः (ख) शिलीमुखैर्वलीमुखबलमखिलमक्षोभयन्त रक्षोभटाः (ग) ।

तती धुतनखायुधस्तरुपरित्रुटत्तोमरः
शिलानिहतमुद्गरः शिखरिभिन्नमत्तद्विपः ।
स्वपक्षविजयैषिभिर्दिवि सुरासुरैराकुलै-
रलक्षि हरिरक्षसामतिभयङ्करः सङ्गरः ॥४१॥

क्रमेण च कुपितकपिवीरविदूषितनैऋतभुजप्रतापा-

---

(च) शरासनं धनु । आसारैः धारापातैः ।

(क) अम्भोधरा. मेघा॰ ।

(ख) दूरापातिभि॰ दूरात् आपतन्तीति तैः ।

(ग) अक्षोभयन्त आलोड़ितवन्तः । रक्षोभटाः राक्षसवीराः ।

तत इति । ततः अनन्तरं दिवि आकाशे स्वपक्षविजयैषिभिः निजपक्षविजयकाङ्क्षिभिः आकुलैः शङ्कितैः सुरासुरैः वानरविजयार्थिभिः सुरै॰ राक्षसविजयार्थिभिरसुरैरिति भावः धुतानि निरस्तानि नखैः आयुधानि अस्त्राणि यत्र तथोक्त॰, तरुभिः परित्रुटन्तः क्षय गच्छन्त इति भावः तोमरा यस्य तादृश॰, शिलाभिः पाषाणैः निहता मुद्गराः यत्र तथोक्त॰, शिखरिभिः पर्वतैः भिन्नाः विध्वंसिताः मत्ता द्विपाः हस्तिनः यत्र तथाभूतः, अतएव अतिभयङ्करः हरिरक्षसां वानरनिशाचराणां सङ्गरः संग्रामः अलक्षि दृष्ट इति यावत् । वानराः नखै. राक्षसानामस्त्राणि, तरुभिः तोमरान्, शिलाभिः मुद्गरान्, पर्वतैः मत्तद्विपान् नाशयामासुरिति निष्कर्षः । पृथ्वीवृत्तम् ॥४१॥

नल इवास्तं भजति (घ) भगवति भानुमति (ङ) मथिता-युधयातुधानगलनालप्रणालपरिवाहिलोहितनदीपूर इव (च) विदूरमन्तरितहरिदाभोगे (छ) सन्ध्यारागे विक्रान्तहरिनखाक्रान्तदन्तावलविपुलकुम्भस्थलमुक्तमुक्ताकलाप इव वियति (ज) विजृम्भमाणे (झ) तारागणे रणरभसचलितरथगजतुरगपदातिपादाहतविश्वम्भरान्तरालजनुषि (ञ) रजसीव

---

(घ) क्रापतेति क्रापिनै छारवीरवीनरै विद्रावितानां निर्जितानां नैर्ऋतानां राक्षसानां भुजप्रतापानले इव बाहुवीर्य्याग्नाविव। भजति आश्रयति। अस्तम् अस्ताचलम्।

(ङ) भानुमति सूर्य्ये।

(च) मथितेति मथितानि विध्वंसितानि आयुधानि अस्त्राणि येषां तथोक्ताः ये यातुधानाः राक्षसाः तेषां गलनालं कण्ठनलौ एव प्रणाल जलनिर्गममार्गं इत्यर्थः तस्मात् परिवहतीति तथोक्तः यो लोहितनदीपूरः रक्तनदीप्रवाहः तस्मिन्निव।

(छ) विदूरम् अतिदूरं यथा तथा। अन्तरितेति अन्तरितः आच्छादितः हरिदाभोगः दिगन्तरं येन तादृशे।

(ज) विक्रान्तेति विक्रान्तानां विक्रमवतां हरीणां सिंहानां नखे नखरप्रहारैरित्यर्थः आक्रान्तानां क्षुण्णानां दन्तावलानां हस्तिनां विपुलेभ्यः विशालेभ्यः कुम्भस्थलेभ्यः मुक्तः विक्षिप्तः यः मुक्ताकलापः मौक्तिकावलिः तस्मिन्निव। वियति आकाशे।

(झ) विजृम्भमाणे स्फुरति।

(ञ) रणेति रणरभसेन युद्धवेगेन चलितानां रथानां गजानां तुरगाणां पदातीनाञ्च पादैः आहता दलिता या विश्वम्भरा भूमिः तस्या अन्तरालात् अवकाशात् जनुरुद्भवः यस्य तादृशे, जनुरुत्पत्तिरुद्भव इत्यमरः।

भुवनमाक्रान्दति तमसि तामसीचरेष्विव (ट) सशोकेषु चक्रवाकेषु दाशरथिबल इव (ठ) प्रमदाकरे कुमुदाकरे (ड)।

आसारधारां प्रकिरन् शराणा-
माश्वासयन्मानसमाशराणाम्।
वीरो हरीन् संयति मेघनादो
विव्याध हंसानिव मेघनादः ॥४२॥

रणे तदनु दारुणे रभसमङ्गदो रावणे-
र्द्रुमेण महता हतश्लथधुरीणयानव्रजम्।
शितेन शतकोटिना शिखरिकूटमिन्द्रो यथा
ममाथ च रथं मनोरथमपि क्षणाद्रक्षसाम् ॥४३॥

---

(ट) भुवनं जगत्। आक्रान्दति आच्छादयति। तमसि अन्धकारे। तामसीचरेष्विव राक्षसेष्विव।

(ठ) दाशरथिबले इव राघवसैन्ये इव।

(ड) प्रमदाकरे आनन्दनिर्भरे। कुमुदाकारे सरसि।

आसारेति। वीरः मेघनादः संयति सङ्ग्रामे मेघनादः हंसानिव शराणाम् आसारधारां धारासम्पातमित्यर्थः प्रकिरन् विक्षिपन् आशराणां राक्षसानां मानसम् आश्वासयन् आश्वस्तं कुर्वन् हरीन् वानरान् विव्याध। मेघनादश्च धारासम्पातं किरति, मानसं सरश्च हंसागमनेन समुल्लसतीति बोध्यम्। इन्द्रवज्राछन्दः ॥४२॥

रण इति। तदनु तदनन्तरम् अङ्गदः दारुणे भीषणे रणे शितेन तीक्ष्णेन शतकोटिना वज्रेणेत्यर्थः शिखरिकूटं पर्वतशृङ्गम् इन्द्रो यथा तद्वत् द्रुमेण वृक्षेण रावणेः रावणपुत्रस्य मेघनादस्येत्यर्थः हतेन आघातेन श्लथाः शिथिलाः गतरयाः इति भावः

वियत्तले तदनु विलीय मायया
स लक्षयन् रघुतनय सलक्ष्मणम् ।
अजिह्मगानधिगतजिह्मगाकृतीन्
अमर्षतः समिति ववर्ष रावणिः ॥४४॥

लक्ष्मणानुगत रामचन्द्रं राहुभयङ्कराः ।
बबन्धुर्दारुणतमा बन्धच्छिदममी शराः ॥४५॥

यावद्याति पुर पुरन्दरजयी यावद्दशास्याज्ञया
सीता पुष्पकवासिनी रघुसुतौ दृष्ट्वा पुरः शोचति ।
तावत्ते गालताः सुपर्णगरुतां वातेन वाताशना
दीप्तौ चन्द्रदिवाकराविव तमोमुक्तौ ततो राघवौ ॥४६॥

---

धुरीणा धुर्वहा यानव्रजाः अश्वसङ्घाः यस्य तथाभूत रथं रजन्या मनोरथमपि अभिलषितमपि शत्रुजयेच्छामपीत्यर्थः क्षणात् अल्पेनैव क्षणेन समाप्य चूर्णयामास । पृथ्वीवृत्तम् ॥४३॥

वियत्तले इति । तदनु यानभङ्गानन्तर स रावणिर्मेघनादः मायया वियत्तले अन्तरीक्षे विलीय अन्तर्धाय समिति युद्धे सलक्ष्मणं रघुतनय राम लक्षयन् अमर्षतः कोपात् अजिह्मगान् सरलगामिनः अधिगता प्राप्ता जिह्मगा वक्रगामिनी आकृतिः येषां तथाभूतान् कुटिलाकारानित्यर्थः शरानिति शेषः ववर्ष । रुचिरावृत्तम् ॥४४॥

लक्ष्मणेति । राहव इव भयङ्कराः दारुणतमाः अमी शराः बन्धच्छिदं भवबन्धनच्छेदिन लक्ष्मणानुगतं सलक्ष्मण रामचन्द्रमिव तं बबन्धुः । उपमालङ्कारः । अनुष्टुब्वृत्तम् ॥४५॥

यावदिति । पुरन्दरजयी इन्द्रजित् मेघनादः यावत् पुरं नगर याति विजयी सन् युद्धस्थलादिति शेष, दशास्यस्य रावणस्य आज्ञया आदेशेन पुष्पकवासिनी पुष्पकरथवर्त्तिनी सीता यावत् रघु-

दुर्वारे तदनु द्वयोश्च वलयोरुज्जृम्भमाणे रणे
धूम्राक्षं भुजतः प्रकम्पनमथ द्वेधा व्यधान्मारुतिः ।
तारेयोऽपि च वज्रदंष्ट्रमचलान्नीलः प्रहस्तं बलात्
तत्सर्वं दशकन्धराय चकितैरुक्तञ्च नक्तञ्चरैः ॥४७॥

अथ तदानीमनीकिनीनाथवधकोपोदयादायोधनोत्कण्ठो (ढ) दशकण्ठः सकलजगदण्डभरितजयानकभयान्

---

ततो रामलक्ष्मणौ पुरः पतितौ दृष्ट्वा बद्धाविति मत्वा शोचति दुःखात् विलपति, तावत् ते वाताशनाः वायुभोजिनः सर्पाः बन्धनपाशा इति भावः सुपर्णस्य गरुडस्य गरुता पक्षाणां वातेन गलिताः भ्रष्टाः । ततः अनन्तरं राघवौ रामलक्ष्मणौ चन्द्रदिवाकराविव तमोमुक्तौ अन्धकारविमुक्तौ तमसा राहुणेति भावः मुक्तौ वा सन्तौ दीप्तौ दिदीपाते । राघवौ मेघनादस्य नागपाशेन बद्धौ दृष्ट्वा रावणः सीतां पुष्पकमारोप्य तथाभूतौ तौ यावत् दर्शयति शोचयति च तावदेव तौ गरुडस्मरणेन तदागत्या नागपाशविमुक्तौ जाताविति निष्कर्षः । शार्दूलविक्रीडितं वृत्तम् ॥४६॥

दुर्वारे इति । तदनु तदनन्तरं द्वयोः बलयोः कपिराक्षससैन्ययोः दुर्वारे अप्रतिविधेये रणे उज्जृम्भमाणे प्रवर्द्धमाने सति मारुतिः हनूमान् भुजतः भुजाभ्यां धूम्राक्षम्, अथ तदनन्तरं प्रकम्पनं नाम राक्षसवीरं, तारेयोऽपि अङ्गदोऽपि अचलात् पर्वतनिक्षेपादित्यर्थः वज्रदंष्ट्रं, तथा नीलः बलात् निजबाहुबलेनेत्यर्थः प्रहस्तं द्वेधा व्यधात् चिच्छेद कृतवानित्यर्थः । चकितैः भीतैः नक्तञ्चरैः राक्षसैः तत् सर्वं धूम्राक्षादिनिधनमिति भावः दशकन्धराय रावणाय उक्तञ्च कथितञ्च । शार्दूलविक्रीडितं वृत्तम् ॥४७॥

(ढ) अनीकिनीति अनीकिनीनाथानां सेनापतीनां धूम्राक्षादीनां

कनिनदवधिरिताशेषशेषाहिलोचनो (ण) रोचिष्णुजिष्णु-कोदण्डधरः सलिलधर इव (त) सुमेरुशृङ्ग समुत्तुङ्ग (थ) रथमलङ्कुर्वन् सर्वतश्चलितसकलचतुरङ्गसङ्गतया (द) लङ्कयेव स्वय अनुगम्यमानः क्रमादतिक्रम्य पुरतोरणं पुरतो रणचलितमालोकयत (ध) निखिलमपि वलीमुखबलम् ।

जेतारमाहवमुखे दशदिक्पतीनां
दृष्ट्वा पुरी दशमुख रघुनन्दनस्य ।

---

वधेन यः कोपोदयः क्रोधावेगः तस्मात् । आयोधनोत्कण्ठः रणोत्सुकः ।

(ण) सकलेति सकलेषु जगदण्डेषु ब्रह्माण्डेषु भरितेन पूरितेन भयानकानां भयदक्कानां भयानकेन घोरेण निनदेन वधिरितानि श्रवणशक्तिरहितीकृतानि अशेषाणि समस्तानि शेषाहेरनन्तस्य लोचनानि नयनरूपाणि श्रवणेन्द्रियाणि येन तथोक्तः चक्षुःश्रवस्त्वादिति भावः ।

(त) रोचिष्णुरिति रोचिष्णु दीप्यमान जिष्णु जयशीलं जयसाधनमिति भावः यत् कोदण्डं धनुः तस्य धरतीति धरः, पचाद्यच् प्रत्ययः । सलिलधर इव जलधर इव ।

(थ) समुत्तुङ्ग समुन्नतम् ।

(द) चलितेति चलितेन प्रस्थितेन सकलेन चतुरङ्गेण हस्त्यश्वरथपादातेन सङ्गतया संयुक्तया ।

(ध) पुरतोरणं पुरद्वारम् । पुरतः अग्रतः । रणचलित रणार्थचपलम् । आलोकयत अपश्यत् ।

जेतारमिति । आहवमुखे युद्धे दशदिक्पतीनाम् इन्द्रादीनां जेतारं

श्लाघावशेन न चचाल शिरः परन्तु
सव्येतरं भुजशिरोऽपि समीक्ष्य लक्ष्यम् ॥४८॥
अथ मदगर्जितैरधिकतर्जितदिक्करिभि-
र्दशवदनस्तदा दशदिगन्तरमन्तरयन्।
समरमुखे सखेलपदचङ्क्रमतो विदधे
हरिकुलमाकुलं जलधिमादिवराह इव ॥४९॥

अनन्तरमनीकास्कन्दकन्दलितामर्षं (न) वर्षन्तं गिरीन् हरीणामधिपति(प)मतिनिष्ठुरेण मुष्टिना गाढमभिनि-

---

दशमुख रावणं पुरः अग्रतः दृष्ट्वा लक्ष्यं शरव्यं समीक्ष्य दृष्ट्वा च रघुनन्दनस्य रामस्य शिरः सव्येतरं वामं भुजशिरः भुजाग्रञ्च श्लाघावशेन न चचाल। बहुचर्यं तं राक्षसेश्वरं दृष्टवान् वामबाहुश्च नास्य पुस्फोर दानिमित्ताभावादिति भावः। वसन्ततिलक वृत्तम् ॥४८॥

अथेति। अथानन्तरं दशवदनः रावणः अधिकं यथा तथा तर्जिता निर्भर्त्सिताः दिक्करिणः ऐरावताः यैः तथाभूतैः मदगर्जितैः गवजनितसिंहनादैरित्यर्थः तदा तस्मिन् काले दशदिगन्तरम् अन्तरयन् तिरोदधत् समरमुखे रणशिरसि सखेलं सविलासं यत् पदचङ्क्रमणं पदविन्यासः तस्मात् तेन वा आदिवराहः जलधिं समुद्रमिव हरिकुलं वानरसैन्यम् आकुलं विदधे कृतवान्। उपमालङ्कारः। नर्दटकं वृत्तम् ॥४९॥

(न) अनीकेति अनीकानां सैन्यानाम् आस्कन्देन आक्रमणेन कन्दलितः प्रवृद्धः अमर्षः क्रोधः यस्य तथाभूतम्।

(प) गिरीन् पर्वतान्। हरीणां वानराणाम् अधिपतिं सुग्रीवम्।

घ्नन्तं हनूमन्तममन्दलाघवाक्रान्तध्वजकिरीटाञ्चल (फ) मीलमपि निखिलजगज्जिता (ब) महता बलेन वातूल इव (भ) तूलजालं कपिकुलमपसारय(म)न्नविरतशरासारवर्षिणमभ्यमिलीणं (य) सौमित्रिमपि शक्त्या गाढमुरसि विव्याध क्रव्यादाधिपतिः (र)।

अवकीर्य दाशरथिरश्रुभरै-
रनुजं पुलस्त्यतनुजञ्च शरैः।
युगपद् व्यधात् करुणवीररसौ
युधि शोकहर्षशबलञ्च बलम् ॥५०॥

---

(फ) अमन्देति अमन्देन महता लाघवेन द्रुतवेगितयेत्यर्थः आक्रान्त ध्वजकिरीटयोः अञ्चलं प्रान्तदेशः येन तादृशम्।

(ब) निखिलजगज्जिता सर्वभुवनजयिना।

(भ) वातूल इव वायुचक्रमिव।

(म) अपसारयन् निराकुर्वन्।

(य) अविरतशरासारवर्षिणम् अनवरतशरधारावर्षिणम्। अभ्यमिलीणम् अभिमुखीनं शत्रुम्।

(र) क्रव्यादाधिपतिः राक्षसराजः।

अवकीर्येति। दाशरथि रामः अश्रुभरैः नयनवारिभिः अनुजं लक्ष्मणं शरैः पुलस्त्यतनुजं रावणञ्च अवकीर्य आच्छाद्य युधि युगपत् करुणवीररसौ इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेदित्युक्तलक्षणः सामाजिकानां शोकसवलितानन्दविशेषः करुणः, उत्तमप्रकृतिर्वीर उत्साहस्थायिभावक इत्युक्तलक्षण, सामाजिकानामुत्साहसवलितानन्दविशेषः वीरः तौ रसौ आस्वादविशेषौ बलं सैन्यं शोकेन हर्षेण च शबलं सवलितञ्च व्यधात् चकार। प्रमिताक्षरावृत्तम्, प्रमिताक्षरा सजससैः कथितेति तल्लक्षणात् ॥५०॥

आधूय मोहमहितोन्मथनाय यावत्
सौमित्रिरेष समुदस्थति तावदेव ।
पौलस्त्यमेष परिभूय परं तदीयान्
प्राणान् मुमोच दयया न मुमोच बाणान् ॥५१॥
प्राप्य तत् प्रथम युद्धे पराजयमुदे जयन् ।
दशाननः पुरीं प्राप दिनदीपदशाननः ॥५२॥
प्राबोधयत्तदनु पङ्क्तिमुखः शयालुं
कालं विनापि च कथञ्चन कुम्भकर्णम् ।
आदेशत. स च विभोरपुनः प्रबोध-
सर्वेशधाम समराङ्गणमाजगाम ॥५३॥

---

आधूयेति । एष सौमित्रिः लक्ष्मणः मोहं मूर्च्छां शक्तिप्रहार-जनितमिति भावः आधूय परित्यज्य हनूमदानीतगन्धमादनपर्वतीय-विशल्यकरणीप्रभावेणेति भावः अहितानां शत्रूणाम् उन्मथनाय विध्वंसनाय यावत् समुदस्थति समुत्तिष्ठति, एष दाशरथिः तावदेव परं शत्रुं पौलस्त्यं रावणं परिभूय दयया तदीयान् प्राणान् मुमोच तत्याज प्राणान् नापहारीदिति भावः बाणान् शरान् न मुमोच न तत्याज शरान् सृष्टवानेवेत्यर्थः । वसन्ततिलकं वृत्तम् ॥५१॥

प्राप्येति । दशाननः रावणः युद्धे तत् प्रथमं तमेव प्रथम-मित्यर्थः न तु पूर्वं कदाचिदिति भावः पराजयं परिभवं प्राप्य उद्वे-जयन् उद्विग्नमनाः अतएव दिनस्य यो दीपः तस्य दशा इव दशा अवस्था येषां तादृशानि मलिनानीति भावः आननानि यस्य तथा-विधः सन् पुरीं नगरीं प्राप रणात् पलायाञ्चक्रे इति भावः । अनुष्टुव्वृत्तम् ॥५२॥

प्राबोधयदिति । तदनु तदनन्तरं पङ्क्तिमुखो दशाननः शयालुं निद्रालुं कुम्भकर्णं कालं समयं षण्मासान्तमिति भावः विनापि

आगतञ्च तमञ्जनाचलनिकाश(ल)माकाशतलस्थनित- त्रिशूलं शूलधरमिव जगत्त्रयोद्युक्तं नक्तञ्चर(व)मवलोक्य शाम्यत्सहजभुजतेजोविशेष(श)मशेषासु दिक्षु धावमान (ष) पवमानचलितजलदपारिप्लवत् प्लवगबल(स)मङ्गदो धीरम- वादीत् ।

कपयः कैकसेयानां कापि सेयं विभीषिका ।
अभूदभूतपूर्वं वः प्राकृत भयवैकृतम् ॥५४॥

---

कथञ्चन प्राबोधयत् जागरयामास । स च कुम्भकर्णः विभोः रावणस्य आदेशत आज्ञया नास्ति पुनः प्रबोधः यस्मात् तथोक्तं सवेशधाम निद्राद्रुहं समराङ्गणं युद्धस्थलम् आजगाम । वसन्ततिलकं वृत्तम् ॥५३॥

(ल) अञ्जनाचलनिकाशं कज्जलाद्रिनिभम् ।

(व) शूलधरमिव शूलिन हरमिव । जगत्त्रयोद्युक्तं जगत्- सहारोपक्रान्तम् । नक्तञ्चरं निशाचरम् ।

(श) शाम्यदिति शाम्यन् सहजः स्वाभाविकः भुजयोः तेजो- विशेषो यस्य तथोक्तं कुम्भकर्णप्रभावादिति भावः ।

(ष) धावमानं पलायमानमित्यर्थः कुम्भकर्णं दृष्ट्वा भयादिति भावः ।

(स) पवमानेति पवमानेन चलितः यो जलदः तद्वत् पारिप्लवत् चलत् प्लवगबलं वानरसैन्यम् ।

कपय इति । हे कपयः ! वानराः ! इयं सा कैकसेयानां निशाचराणां कापि विभीषिका भयस्य प्रदर्शनमात्रं न तु वास्तविकं भयकारणमस्तीति भावः । वः युष्माकम् अभूतपूर्वं पूर्वमभूतं प्राकृतं नीचजनोचितं भयवैकृतम् अभूत् किमिदानीमिति शेषः ॥५४॥

अथ हरयो(ङ)ऽपि सरयमनुनयसङ्गत(च)मङ्गदवचनम-वधारयन्तो धारयन्तः समरसन्नाहान् (क) दिग्भागा इव प्रतिनिवृत्ताः प्रयत्नाशय(ख)मिवैरावणं रावणानुज (ग) विन्ध्याचलमिव युगान्तानिलाः समन्तादाहृतैर्गिरिभि-स्तरुभिरप्यवाकिरन् (घ) ।

क्षिप्ताः संयति पुष्पिता क्षितिरुहास्तै रक्षसो वक्षसि
प्रस्विन्ने पटवासपांशव इवालीयन्त चूर्णीकृताः ।
मुक्ता ये धरणीधरा मुहुरमी तद्बाहुसङ्घट्टनात्
प्रत्यावृत्य परं प्रहर्त्तुरभवन् खेदाय भेदाय च ॥५५॥

ज्वलदनल त्रिशूलमुपरि भ्रमयन्नमयन्
नयमवनीमनीकमदखिलनदुर्ललितः ।

---

(ङ) हरयः कपयः ।

(च) सरयं सवेगम् । अनुनयसङ्गत विनयसम्पन्नम् ।

(क) समरसन्नाहान् युद्धोद्यमान् ।

(ख) प्रयत्नाशयमिव प्रयत्नातिशयवन्तमिव ।

(ग) ऐरावणम् ऐरावतम् । रावणानुजं कुम्भकर्णम् ।

(घ) अवाकिरन् आच्छादयामासुः ।

क्षिप्ता इति । तैः वानरैः संयति युद्धे रक्षसः कुम्भकर्णस्य प्रस्विन्ने स्वेदार्द्रे वक्षसि पुष्पिताः सञ्जातपुष्पाः क्षितिरुहाः वृक्षाः चूर्णीकृताः सन्तः पटवासपांशव इव पटवासरेणव इव आलीयन्त लय प्राप्ताः । ये च धरणीधराः पर्वताः मुक्ताः क्षिप्ताः, ते अमी धरणीधराः तस्य कुम्भकर्णस्य बाहुसङ्घट्टनात् भुजसङ्घर्षणात् प्रत्यावृत्य प्रतिनिवृत्य प्रहर्त्तुरेव पर केवल खेदाय पीड़नाय भेदाय गात्रचूर्णनाय अभवन् । शार्दूलविक्रीड़ितं वृत्तम् ॥५५॥

सपदि बभञ्ज नीलमृषभं शरभञ्च बला-
द्दहरत गन्धमादनमरुन्ध गवाक्षमपि ॥५६॥

ततश्च सहजबलचापलाधिगतलाघवं राघवं शरणमनु-
धावन् राघवानीकमाश्वासयन् (ङ) विश्वाधिकविपुलभुज-
वीर्यो विकीर्य द्विषति (च) सर्वतः पर्वतान् विधाय विचि-
त्रमतिचिरं युद्धं (छ) नक्तञ्चरविमुक्तधात्रीधरवशः (ज) कुलि-
शदारित इव कुलभूधरो धरायामचेतन (झ) इव पपात
हरिकुलपतिः (ञ)।

परिगृह्य तं झटिति बाहुपञ्जरे
चलिते पुरं तदनु रावणानुजे।

---

(ङ) सहजेति सहजेन स्वाभाविकेन बलानां सैन्यानां चापलेन चाञ्चल्येन अधिगतं लाघवं येन तथाभूतम्। राघवं रामं शरणं रक्षितारम् अनुधावन् प्राप्नुवन्। राघवस्य अनीकं कपिसैन्यम् आश्वासन् सान्त्वयन्।

(च) विश्वेति विश्वेभ्यः जगद्भ्यः अधिकं विपुलयोः महतोः भुजयोः वीर्यं यस्य तथाभूतः। विकीर्य विक्षिप्य। द्विषति कुम्भकर्णे।

(छ) अतिचिरं दीर्घकालं विचित्रं युद्धं विधाय कृत्वा।

(ज) नक्तञ्चरेति नक्तञ्चरेण राक्षसेन कुम्भकर्णेन विमुक्तस्य धात्रीधरस्य पर्वतस्य वशः तत्प्रहारात्त इति भावः।

(झ) कुलिशदारित इव वज्रभिन्न इव कुलभूधरः कुलपर्वतः। धरायां पृथिव्याम्।

(ञ) हरिकुलपतिः सुग्रीवः।

परिगृह्येति। तदनु तदनन्तरं सुग्रीवमूर्च्छागमनानन्तरमित्यर्थः

अविनीतवालिकृतमद्य नः प्रभो-

रयशः प्रमृष्टमिति हृष्टमाशरैः ॥५७॥

तत्र विचित्रकुसुमपरिमलशिशिरोपचारसचेतनोद्ग्रीव-सुग्रीवनखमुखाकलितशूर्पणखामुखानुकारः (ट) सचमत्कार(ठ)मुत्प्लुत्याक्षिगतमेनमनालक्ष्य वैलक्ष्यतः (ड) प्रतिनिवृत्तो विवृत्तोद्वृत्ततारकेक्षणः (ढ) क्षणदाचरः (ण) प्रतिक्षणमतिक्षीवतया (त) प्रतिपक्षबलमिव स्वपक्षबलमपि

---

तं सुग्रीवं कक्षपञ्जरे परिगृह्य रावणानुजे कुम्भकर्णे झटिति पुरं नगरं चलिते प्रस्थिते सति आशरैः राक्षसैः अद्य नः अस्माकं प्रभोः रावणस्य अविनीतेन दुर्वृत्तेन वालिना कृतम् अयशः बाहु-लेन च तत्सुहृदे निमज्जनकृतमिति भावः प्रमृष्टम् अपनीतमित्यर्थः इति हेतोः हृष्टम् आह्लादितम्। मञ्जुभाषिणीवृत्तं, सजसा जगौ च यदि मञ्जुभाषिणीति तल्लक्षणात् ॥५७॥

(ट) विचित्रेति विचित्राणां विविधानां कुसुमानां परिमलः सौरभं शिशिरोपचारः शैत्यक्रिया च ताभ्यां सचेतनः अपनीतमोहः इति यावत् उद्ग्रीवः उन्नमितग्रीवः यः सुग्रीवः तस्य नखमुखैः नखाग्रैः आकलितः कृतः शूर्पणखायाः मुखानुकारः नासाकर्णच्छेदनेन विकृतमुखावयव इति भावः यस्य तथाभूतः।

(ठ) सचमत्कारं सविस्मयम्।

(ड) अक्षिगतं द्वेष्यम् एनं सुग्रीवम्। अनालक्ष्य अदृष्ट्वा। वैलक्ष्यतः लज्जया सुग्रीवधारणे अक्षमताजनितयेति भावः।

(ढ) विवृत्तोद्वृत्ततारकेक्षणः विवृत्ता विकृतिं गता उद्वृत्ताः तारका ययोः तथाभूते अक्षिणी नयने यस्य तथोक्तः।

(ण) क्षणदाचरः राक्षसः कुम्भकर्ण इति शेषः।

(त) अतिक्षीवतया अतिमत्ततया।

मत्वयन्नलक्षयन् सौमित्रिमद्रिशिखरान् विमुञ्चन्नेवायमञ्जसा (थ) राममाजगाम।

भिन्दन् शूलमथार्द्धचन्द्रमुखतो वीरो रघूणां पतिर्बाणानत्र मुमोच बालिविपदो मारीचमर्मच्छिदः।
आलोक्याथ स तान्विदारितशिखानस्मिन् न किञ्चित्करान्वायव्यं पुनरैन्द्रमप्यरिवधूवैधव्यधुर्यं दधे। ५८॥

रामास्त्रोद्दलितेषु राक्षसपतेरङ्गेषु तुङ्गो भुजः
प्रागेको निपपात मन्दर इव प्रत्यर्थिसेनाम्बुधौ।
सिन्धौ निष्पतितः परोऽपि ददृशे सेतुर्द्वितीयो यथा
छिन्ने व्योम्नि शिरस्तुरीयमभवत् कूटं त्रिकूटस्य च॥५९॥

---

(थ) अञ्जसा झटिति।

भिन्दन्निति। अथानन्तर वीरः रघूणां पतिः रामः शूलं कुम्भकर्णप्रक्षिप्तमिति भावः भिन्दन् खण्डयन् अत्र कुम्भकर्णे बालिविपदः बालिध्वंसिन इत्यर्थः मारीचमर्मच्छिदः मायामृगमारीचघातिन इत्यर्थः बाणान् मुमोच तत्याज। अथ तादृशास्त्रक्षेपणानन्तर स रामः तान् बाणान् अस्मिन् कुम्भकर्णे विदारितशिखान् खण्डिताग्रान् अतएव अकिञ्चित्करान् विफलान् आलोक्य दृष्ट्वा वायव्यं पुनः किञ्च अरिवधूनां शत्रुकान्तानां वैधव्यधुर्यं वैधव्यकरणदक्षमित्यर्थः ऐन्द्रमपि अस्त्रमिति शेषः दधे धारयामास। शार्दूलविक्रीड़ित वृत्तम् ॥५८॥

रामेति। रामस्य अस्त्रैः उद्दलितेषु विक्षतेषु राक्षसपतेः कुम्भकर्णस्य अङ्गेषु मध्ये प्राक् पूर्वं मन्दर इव मन्दराद्रिरिव एकः तुङ्गो महान् भुजः बाहुः प्रत्यर्थिसेनाम्बुधौ प्रतिपक्षसैन्यसागरे निपपात। परोऽपि द्वितीयोऽपि भुज इति शेषः सिन्धौ समुद्रे

तदनु तदनुमोदभरितहरिबलकोलाहलाकर्णनविदि-
तकुम्भकर्णवधपरिम्लानमुखेन (द) दशमुखेन सहोदरमहो-
दरमहापार्श्वौ सहायौ विधाय समादिष्टाः कुमाराः नरा-
न्तकदेवान्तकातिकायत्रिशिरसः पितुर्निदेशान्निवेशमिव
पितृपतेः(ध) प्राविशन्नमी समीकभुवम् (न)।

अजनि पुनः समीकमनयोरुभयोर्बलयो-
रवदलिते मुखे च यदनुज्झितरोषभरम्।
अमरनगौकसामपि यदाशयपूर्त्तिकरं
समरसमुत्सुकेन मुनिना यदहृष्टचरम् ॥६०॥

---

निष्पतितः द्वितीयः शैलो यथा शैलरिव दृष्टो दृष्टः। व्योम्नि च काशे छिन्नं शिरः तुरीयं चतुर्थं त्रिकूटस्य त्रिशृङ्गस्य पर्वतस्य तत्त्रयस्येति शेषः कूटं शृङ्गम् अभवत्। कुम्भकर्णो निहत इति निष्कर्षः। उपमालङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥५९॥

(द) तदनुमोदेति तेन अनुमोदेन कुम्भकर्णनिधनोत्थितेनेति भावः भरितानां पूरितानां हरिबलानां कपिसैन्यानां कोलाहलस्य जयध्वनेरिति भावः आकर्णनेन श्रवणेन विदितः यः कुम्भकर्णवधः तेन परिम्लानानि मुखानि यस्य तथाभूतेन।

(ध) निवेशमिव स्थानमिव पितृपतेः यमस्य।

(न) समीकभुवं संग्रामक्षेत्रम्।

अजनीति। अनयोः उभयोः बलयोः कपिराक्षससैन्ययोः पुनः समीकं युद्धम् अजनि जातम्। यत् युद्धम् अवदलिते छिन्ने च मुखे अनुज्झितः अत्यक्तः रोषभरः कोपातिशयः यत्र तथाभूतं छिन्नमुखस्यापि क्रोधजनितभ्रूकुट्यादिरूपभङ्गिदर्शनादिति भावः। यत् युद्धम् अमरनगौकसां सुरलोकवासिनामपि आशयस्य अभिप्रेतदर्श-नरूपस्येति भावः पूर्त्तिकरं पोषकं युद्धहतानां स्वर्गप्राप्तेः सुर॰

ममाथ शैलैरथ वालिनन्दनो
नरान्तकं संयति वानरान्तकम् ।
हनूमता सोऽपि हतः सुरान्तकः
पुरान्तकेनेव रुषा पुरान्तकः ॥६१॥

अनन्तरमसमसमरशीलेन (प) नीलेन निहते महोदरे मारुतिमथितशिरसि (फ) त्रिशिरसि विशसितेषु (ब) महापार्श्वादिषु वाहिनीपतिषु (भ) निर्भरविषादरोषपरवशो निशाचरः साकार इव (म) तमोनिकायः (य) सरय

---

सुन्दरीसमागमस्य शास्त्रीयत्वादिति भावः । यत् समरसमुत्सुकेन युद्धवर्णनपरेण मुनिना वाल्मीकिना अदृष्टचरम् अदृष्टपूर्वं वर्णयितुमशक्यमिति भावः । नर्दटकं वृत्तम् ॥६०॥

ममाथेति । अथानन्तरं वालिनन्दनः अङ्गदः संयति युद्धे शैलैः पर्वतैः वानरान्तकं नरान्तकं ममाथ जघान । सोऽपि सुरान्तकः देवान्तकः हनूमता रुषा क्रोधेन पुरान्तकेन त्रिपुरारिणा पुरान्तक इव पुरेषु अन्तरीक्षगतेषु अन्तक इव अन्तकः अन्तकसदृश दैत्यविशेष इव हतः । वंशस्थविलं वृत्तम् । उपमालङ्कारः ॥६१॥

(प) असमेति असमः निरुपमः यः समरः संग्रामः तच्छीलेन तत्र दक्षेणेति यावत् ।

(फ) मारुतीति मारुतिना हनूमता मथितं शिरो यस्य तादृशे ।

(ब) विशसितेषु विनाशितेषु ।

(भ) वाहिनीपतिषु सेनापतिषु ।

(म) साकार इव मूर्तिमानिव ।

(य) तमोनिकायः अन्धकारराशिरित्यर्थः ।

मतिकाय. समागत्य वृत्रासुर इव सुत्राम्णा (र) सुमित्रा सुतेन सह विततं विचित्रमायोधनम (ल) ।

स च सुचिरं नियुध्य तमवध्य इतीव वरा-
दनिलगिरा विबुध्य पुनरस्त्रमधत्त विधेः ।
दलितमनेन तद्दिवि समुत्पतितं जगता-
मतनुत राहुभीतिमधिकामतिकायशिरः ।६१॥

अनुनीय रावणिरथो विधुरं
पितरं दधत् पृथुसमीकधुरम् ।
स रथी समेत्य सधनुः शरधि-
र्वलितश्चमूभिरधि दाशरथी ॥६२॥

---

(र) सुत्राम्णा इन्द्रेण ।

(ल) आयोधनं युद्धम् ।

स चेति । स सौमित्रिः सुचिरं नियुध्य युद्धं कृत्वा अनिलगिरा पवनवचसा वरात् वरप्रभावात् तम् अतिकायम् अवध्य इतीव विबुध्य विदित्वा पुनः विधेः ब्रह्मणः अस्त्रं ब्रह्मास्त्रम् अधत्त दधार । तत् अतिकायस्य शिरः अनेन ब्रह्मास्त्रेण दलितं निकृत्तं दिवि अन्तरीक्षे समुत्पतितं सत् जगताम् अधिकां राहुभीतिं राहुरयमुपतिष्ठतीति शङ्कामित्यर्थः अतनुत जनयामास । नर्दटकं वृत्तम् ॥६१॥

अनुनीयेति । अथो अनन्तरं स रावणिः इन्द्रजित् विधुरं कातरं तस्तत्सेनापतिनिधनादिति भावः पितरम् अनुनीय सान्त्वयित्वा पृथुसमीकधुरं महासंग्रामभारं दधत् दधानः रथी रथारूढः सधनुःशरधिः कार्मुकतूणीरवान् सन् चमूभिः सेनाभिः

अधिसमर(व)मरातिजयमनोरथाय रथाभिरक्षार्थं (श) रक्षांसि परितः (ष) प्रकल्प्य प्रतर्प्य (स) च हविषा प्रदक्षिणार्चिषमाशुशुक्षणिं (ह) मन्त्राधिगतानि विचित्राण्यस्त्राणि दधानस्तिरोधानगत (क) एव शितमुखैः (ख) शिलीमुखैर्निर्माय (ग) निखिलमर्माहतिं (घ) निरस्तशतुः (ङ) आव्यादौ व्याध इव हरीन् (च) विधुरीचकार (छ)।

सहलक्ष्मणमपि दाशरथिं

परुषो निदाघ इव पद्मसरः।

---

समेत्य सङ्गत्य दाशरथी रामलक्ष्मणौ अधि प्रति चलित. प्रसस्थे। मलिताम्बराहस, प्रक्षिताम्बरा सज्जलै. क्रीयतेति तद्वत्वात् ॥६१॥

(व) अधिसमर समरे।

(श) रथाभिरक्षार्थे रथगोपनार्थम्।

(ष) परितः समन्तात्।

(स) प्रतर्प्य प्रकर्षेण तर्पयित्वा।

(ह) प्रदक्षिणार्चिषम् प्रदक्षिणं स्फुरन्तम् अग्निम्।

(क) तिरोधानगतः अन्तर्हितः।

(ख) शितमुखैः तीक्ष्णाग्रैः।

(ग) निर्माय कृत्वा।

(घ) निखिलेति निखिलानां जगतां मर्माहृति मर्मपीडनम्।

(ङ) निरस्तशत्रुः निर्जितसुरराजः।

(च) हरीन् वानरान् मृगांश्च।

(छ) विधुरीचकार व्याकुलीकृतवान्।

सहलक्ष्मणमिति। अथम् इन्द्रजित् परुषः उग्रः निदाघ, ग्रीष्मः

विकलाशय विधुरसत्त्वमयं
विरचय्य धाम च जगाम शरैः ॥६४॥
व्रतार्कभवतेजसि व्रपितरामचन्द्रद्युतौ
विमुच्य सति निर्गते विशिखवृष्टिमस्मिन् घने ।
अदीप्तनलमस्फुरत्कुमुदमस्तनीलोत्पलं
समुत्तरलजीवन समभवत्तदा वाहिनी ॥६५॥

---

पद्मसर इव सङ्कुलद्माण त दाशरथिं राम शरैः विकलाशयं व्यथितचित्त विधुरसत्त्व व्याकुलप्राणञ्च विरचय्य कृत्वा धाम स्वं जगाम । प्रमिताक्षरावृत्तम् ॥६४॥

व्रतेति । व्रतम् अर्कभवं सौरमित्यर्थः सौमीवञ्च तेजो येन तथाभूते व्रपिता रामस्येव चन्द्रस्य द्युतिः दीप्तिः येन तादृशे अस्मिन् घने मेघे मेघनादे इति भावः विशिखवृष्टिं शरवृष्टिं विमुच्य कृत्वेत्यर्थः निर्गते स्वं प्रतिगते सति तदा वाहिनी सेना नदी च, अदीप्तः अशोभितः पराजयादिति भाव, नलः तदाख्यवानरसेनापतिरित्यर्थः. अन्यत्र अदीप्ता अशोभिताः इति भाव नला तटस्थतृणविशेषा यत्र तथाभूत वर्षागमादिति भावः । अस्फुरन् अराजन् पराजयादिति भाव, कुमुदः तदाख्यवानरसेनापतिः अन्यत्र अस्फुरन्ति अविकसन्ति कुमुदानि उत्पलानि यत्र तादृशं वर्षागमादिति भावः । अस्त विध्वस्तं नीलः तदाख्यवानरसेनापतिरेव नीलोत्पल यत्र तथाविधम् अत्रापि वर्षागमादिति भावः । समुत्तरलं समुत्कण्ठित जीवनं प्राणधारणम् अन्यत्र समुत्तरलं चञ्चल सवेगमिति भाव जीवन जल समभवत् सम्प्राप अत प्राप्त्यर्थो भूधातुरिति वर्षासु नलतृणकुमुदोत्पलादीनाम् अविकासस्य प्रसिद्ध इति बोध्यम् । पृथ्वीवृत्तम् । श्लेषमूलरूपकालङ्कारः, उपमा च ॥६५॥

अचलमथ सलीलमोषधीनां
हरति हनूमति जाम्बवन्नियोगात्।
विचलितमभवद् बलं विशल्यं
विबुधमनोऽपि धूतशोकशल्यम्॥ ६६

तेन पुनः सहजतेजोभरितेन दावानलेनेव वानरबलेन दह्यमाना दरीमिव (ज) पुरीं विहाय पञ्चाननाविव (झ) पङ्क्त्याननिदेशत(ञ)श्चलितमखिलरिपु-प्रकम्पन(ट)मकम्पन(ठ)माहतप्लवङ्गसङ्घ (ड) प्रजङ्घञ्च (ढ) अङ्गदभुजप्रता-

---

अचलमिति। अथानन्तरं जाम्बवतः ऋक्षराजस्य नियोगात् आदेशात् हनूमति सलीलं सावज्ञम् अवलीलयेति भावः ओषधीनाम् अचलं पर्वतं गन्धमादनमिति भावः हरति सति बलं राघवसैन्यं विशल्यं विगतास्त्रक्षतव्यथमित्यर्थः अतएव विशेषेण चलितं सव्यापारं उद्युक्तं विबुधानां देवानां मनोऽपि धूतम् अपनीतं शोक एव शल्यं यस्मात् यथाभूतम् अभवत्। पुष्पिताग्रावृत्तम्, अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रेति तल्लक्षणात्॥ ६६॥

(ज) दरीमिव गुहामिव।

(झ) पञ्चाननाविव सिंहाविव।

(ञ) पङ्क्तग्राननिदेशतः दशाननादेशात्।

(ट) अखिलरिपुप्रकम्पनं सर्वशत्रुदलनम्।

(ठ) अकम्पनं तदाख्यं राक्षसम्।

(ड) आहतेति आहताः प्लवङ्गानां वानराणां सङ्घा येन तथाभूतम्।

(ढ) प्रजङ्घं तदाख्यं राक्षसम्।

पानलशलभा(ण)वुभावपि निशम्य (त) निशम्य च द्विविद-मैन्दावदारितौ (थ) महारथौ शोणिताक्षयूपाक्षावपि (द) कोपाच्चान्तपरुषसरम्भौ (ध) कुम्भनिकुम्भौ (न) समुत्तम्भ्य(प) बाहू सुबाहुमारीचाविव राघवभुजाभ्यां सुग्रीव-हनूमद्ग्रामङ्कुत युद्धमतनिषाताम् (फ)।

भूमौ ततः प्लवगराजभुजेन विद्ध-
मालोक्य कुम्भमसहन् विरह तदीयम्।
शोकादगादनिलसूनुहतो निकुम्भ-
स्तन्नामयुक्तममरीकुचकुम्भमेव ॥६७॥

---

(ण) अङ्गदेति अङ्गदस्य भुजप्रताप एव अनलः तस्य शलभौ पतङ्गौ अङ्गदेन निहताविव्यर्थः।

(त) निशम्य श्रुत्वा।

(थ) द्विविदेति द्विविदमैन्दाभ्यां तदाख्यवानराभ्याम् अवदारितौ निहतौ।

(द) शोणिताक्षेति तदाख्यौ राक्षसौ।

(ध) कोपेति कोपेन अचान्तः अनिभृतः परुषः कठोरः संरम्भः समुद्यमः ययोः तथाभूतौ।

(न) कुम्भनिकुम्भौ तदाख्यौ कुम्भकर्णसुतौ।

(प) समुत्तम्भ्य समास्फाल्य।

(फ) अतनिषाताम् अतनिष्टाम् अकुरुताम्।

भूमाविति। ततः अनन्तरं प्लवगराजभुजेन सुग्रीवबाहुना विद्धं व्यथितं कुम्भं भूमौ आलोक्य दृष्ट्वा पतितमिति शेषः। तदीयं विरहम् असहन् सोढुमशक्नुवन् शोकात् अनिलसूनुना हनूमता हतः निकुम्भः तस्य कुम्भस्य नामयुक्तम् अमरीकुचकुम्भम् देवाङ्गनास्तनकलसम् अगात् प्राप, स्वर्गं गत इत्यर्थः। वसन्ततिलकं छन्दः ॥६७॥

ततः कौणपपतिनियुक्त (ब) युक्तमखिलवाहिनी-
भि(भ)राहवाटोपमुखर (म) खरात्मज मकराक्षमैक्ष्वाकुश-
रोऽपि विपक्षमपि सपक्ष इव (य) समक्षणयज्जनयितुः (र)।

कृत्वा मूर्द्धनि शासनं पितुरथो गत्वा रणं रावणि-
र्हुत्वा तत्र महाभुजो हुतभुजं धृत्वा महास्त्राणि च।
स्थित्वा व्योमनि मायया शरचयन्त्यक्त्वा च भित्त्वा चमूं
बुद्ध्वा राघवकोपमाप सहसा लङ्कामलं कातरः॥६८॥

ततः प्रतीचः प्रतिहारा(ल)दय सप्रातिहारिको (व)

---

(ब) कौणपपतीति कौणपपतिना राक्षसराजेन नियुक्तम्।

(भ) अखिलवाहिनीभिः सर्वसैनिकैः युक्तम्।

(म) आहवाटोपमुखरं सङ्ग्रामसम्भ्रमोद्यमम्।

(य) सपक्ष इव सुहृदिव अथच पतत्रवान्।

(र) समक्षणयत् सम्प्रेषयत्। जनयितुः पितुः खरस्येति
भावः, समीपमिति शेषः।

कृत्वेति। अथानन्तरं महाभुजः रावणिः मेघनादः पितुः
शासनं मूर्द्धनि शिरसि कृत्वा रणं गत्वा तत्र रणे हुतभुजम् अग्निं
हुत्वा महास्त्राणि धृत्वा च मायया व्योमनि आकाशे स्थित्वा शरचयं
बाणवृष्टिं त्यक्त्वा चमूं कपिसेनां भित्त्वा मथित्वा राघवस्य रामस्य
कोपं क्रोधं बुद्ध्वा अलम् अतिशयेन कातरः सन् रामभयादिति भावः
सहसा लङ्काम् आप प्रविवेश। अनेकक्रियासु एककारककीर्त्तनरूपं
दीपकमलङ्कारः। अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते। अथ कारक-
मेकं स्यादनेकासु क्रियासु चेदिति दर्पणे। शार्दूलविक्रीडितं वृत्तम्
॥६८॥

(ल) प्रतीचः पश्चिमात्। प्रतिहारात् द्वारात्।

(व) सप्रातिहारिकः द्वारपालसहितः।

ततः कौणपपतिनियुक्त (ब) युक्तमखिलवाहिनी-
भि(भ)राहवाटोपमुखर (म) खरात्मज मकराक्षमैक्ष्वाकुश-
रोऽपि विपक्षमपि सपक्ष इव (य) समक्षणयज्जनयितुः (र)।

कृत्वा मूर्द्धनि शासन पितुरथो गत्वा रण रावणि-
र्हुत्वा तत्र महाभुजो हुतभुजं धृत्वा महास्त्राणि च।
स्थित्वा व्योमनि मायया शरचयन्त्यक्त्वा च भित्त्वा चमूं
बुद्ध्वा राघवकोपमाप सहसा लङ्कामलं कातरः ॥ ६८॥

ततः प्रतीचः प्रतिहारा(ल)दय सप्रातिहारिको (व)

---

(ब) कौणपपतीति कौणपपतिना राक्षसराजेन नियुक्तम्।

(भ) अखिलवाहिनीभिः सर्वसैनिकैः युक्तम्।

(म) आहवाटोपमुखरं सग्रामसम्भ्रमोद्यम्।

(य) सपक्ष इव सुहृदिव अथच पतत्रवान्।

(र) समक्षणयत् समक्षपयत्। जनयितुः पितुः खरस्येति भावः, समीपमिति शेषः।

कृत्वेति। अथानन्तर महाभुजः रावणिः मेघनादः पितुः शासन मूर्ध्नि शिरसि कृत्वा रण गत्वा तत्र रणे हुतभुजम् अग्निं हुत्वा महास्त्राणि धृत्वा च मायया व्योमनि आकाशे स्थित्वा शरचय बाणवृष्टिं त्यक्त्वा चमूं कपिसेनां भित्त्वा मथित्वा राघवस्य रामस्य कोपं क्रोधं बुद्ध्वा अलम् अतिशयेन कातरः सन् रामभयादिति भावः सहसा लङ्काम् आप प्रविवेश। अनेकक्रियासु एककारककीर्त्तनरूपं दीपकमलङ्कारः। अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते। अथ कारक-मेकं स्यादनेकासु क्रियासु चेदिति दर्पणे। शार्दूलविक्रीडितं वृत्तम् ॥६८॥

(ल) प्रतीचः पश्चिमात्। प्रतिहारात् द्वारात्।

(व) सप्रातिहारिकः द्वारपालसहितः।

इत्यादि परिदेवमानमेनं विदिताशरमायाविशेषो (ट) विभीषणः समागत्य देव! भवतोऽपि किमिदमस्थाने दीन(ठ)मवस्थानम्। निरन्तरायमखनिर्वर्त्तनाय (ड) पुरन्दरारिणा (ढ) कृतं कृत्रिममेतदित्यवधार्य धारय मनसि धैर्य्यमित्यभिधाय तदनुबधाय लक्ष्मणं तत्क्षणमेव पुरस्कृत्य निकुम्भिलामुपरुरोध।

हरिकुलारवतश्चलितस्ततो
गिरिदरीकुहरादिव केशरी।
अपरिपूर्य्य रुषाहवमाहवं
स विदधे बलशासनशासनः ॥७१॥

---

शेषः अतएव यः दुरतिक्रमः अनतिक्रमणीय इत्यर्थः तत् तस्मात् अयं तव शोकजलधिः केन कथं लङ्घनीयः अतिक्रमणीयः? नैवातिक्रमितुं शक्य इत्यर्थः। वसन्ततिलक वृत्तम् ॥७०॥

(ट) विदितेति विदितः ज्ञातः आशराणां राक्षसानां माया-विशेषः येन तादृशः।

(ठ) दीनं कातरम्।

(ड) निरन्तरायेति निरन्तरायं निर्विघ्नं यथा तथा मखस्य यज्ञस्य निर्वर्त्तनाय सम्पादनाय।

(ढ) पुरन्दरारिणा इन्द्रजिता। भवतामीदृशे विषादे कोऽपि तस्य यज्ञध्वंसाय न यततामित्याशयेन मायाविना तेन तादृशी माया विरचितेति भावः।

हरीति। ततः निकुम्भिलावरोधानन्तरं हरिकुलानां वानर-सेनानाम् आरवतः जयनादात् गिरिदरीकुहरात् पर्वतगुहाभ्यन्तरात् केशरीव सिंह इव चलितः स बलशासनशासनः इन्द्रजित् रुषा

वातूल इव तूलानां वानराणां रणाजिरे।
विद्रावणस्ततो मायाविद्रावणसुतोऽभवत् ॥७२॥

अनुपदमनीकिनीनाथनिधनसंरब्धतर (ण) सवर्त्त-प्रवृत्त(त)मिव कृतान्तं समराङ्गणमापतन्तं स्यन्दनगत (थ) तं सक्रन्दनजितं(द) गन्धवाहनन्दनस्कन्धवर्त्ती(ध) सौमित्रि प्रवर्त्तितशिततरशरधाराभिः शतधारपाणिरिव (न) जम्भ(प)मस्तम्भयत् (फ)।

---

क्रोधेन आहव यज्ञस्य अपरिपूर्त्यं अपरिसमाप्य आहव युद्धं विदधे चकार। द्रुतविलम्बित वृत्तम् ॥७१॥

वातूल इति। ततः अनन्तर मायावित् रावणसुत इन्द्रजित् वातूल वायुसमूहः तूलानामिव रणाजिरे रणभूमौ वानराणां विद्रावण सन्तापजन अभवत् वानरान् द्रावयामासेत्यर्थः। उपमालङ्कार। अनुष्टुब्वृत्तम् ॥७२॥

(ण) अनुपद प्रतिपद प्रतिपादक्षेपमिति यावत् अनीकिनीनाथाना सेनापतीना निधने संहारे संरब्धतरम् अतिशयेन समुद्युतमित्यर्थ।

(त) सवर्त्त प्रवृत्त प्रलयोत्थितम्।

(थ) स्यन्दनगत रथस्थम्।

(द) सक्रन्दनजितम् इन्द्रजितम्।

(ध) गन्धवाहनन्दनस्कन्धवर्त्ती हनूमत्स्कन्धारूढ इत्यर्थः।

(न) शतधारपाणिरिव कुलिशधृदिव।

(प) जम्भं तदाख्यं दैत्यम्।

(फ) अस्तम्भयत् निश्चलीचकार।

परस्परमदोत्कटं प्रचुरवीरवादोद्भटं
पतत्त्रुटितकण्टक प्रतिहतास्त्रमस्त्रेण च ।
जगत्त्रयभयावह जयपराजयागोचरं
वितेनतुरुभाविभाविक तदा रणं दारुणम् ॥७३॥
शतधारकठोरशिखैर्विशिखैः
शतधा विरचय्य शरासगुणम् ।
विदधे विबुधेशजित समरे
हतसारथिमप्यथ दाशरथिः ॥७४॥

---

परस्परेति । तदा इभाविव हस्तिनाविव उभौ लक्ष्मणेन्द्रजितौ परस्परं मदेन अवलेपेन उत्कटम् उद्भट, प्रचुरैः बहुभिः वीरवादैः वीरोचितवचनैः उद्भटं कर्कश, पतन्तः त्रुटिताः छताः कण्टकाः क्षुद्रशत्रवः सामान्यसैनिका इति यावत् यत्र तथाभूतम्, अस्त्रेण अस्त्रप्रक्षेपेण प्रतिहतानि विध्वंसितानि अस्त्राणि प्रतिबलप्रयुक्तानीति भावः यत्र तादृशं, जगत्त्रयस्य त्रिभुवनस्य भयावहं भीतिजनकं, जयपराजययोः अगोचरम् अविषयं परस्परं परस्परेण निर्जेतुमशक्यत्वादिति भावः अतएव दारुणम् अतितीव्रं रण वितेनतुः कृतवन्तौ । पृथ्वीवृत्तम् ॥७३॥

शतेति । अथानन्तरं दाशरथिः लक्ष्मणः शतधारवत् कठोराः शिखाः अग्राणि येषां तादृशैः विशिखैः शरैः शरासगुण कार्मुकज्यां शतधा विरचय्य खण्डीकृत्य समरे संग्रामे विबुधेशजितम् इन्द्रजितं हतसारथिमपि निहतसूतमेव विदधे चकार । तूणकविलम्बितं वृत्तम् ॥७४॥

यद्दुर्वितमहो मायाशीलस्य यद्भुजशालिनः
सदृशमथवा युक्तं नक्तञ्चरेन्द्रसुतस्य यत् ।
शतमखजितः शौर्य्यं यद्वानुरूपमथात्मन-
स्तदकृत रुषा मन्दो मन्दोदरीतनयो रणे ॥७५॥

अनुपदमभिषिषेणयिषति (ब) विभीषणे तेन (भ) मुक्तां शक्तिमर्द्धचन्द्रेण दारयन् (म) अपारयन् सोढुमदसीयमविनयममर्षाकुलः (य) सौमित्रिरमोघं माघवतास्त्रम-मुञ्चत् (र) ।

---

यदिति । मन्दः दुराचारः मन्दोदरीतनयः इन्द्रजित् माया-शीलस्य मायाविनः यत् उचितं, भुजशालिनः बाहुशौर्य्यवतः यत् सदृशम् अनुरूपम्, अथवा नक्तञ्चरेन्द्रसुतस्य राक्षसराजतनयस्य यत् युक्तं, तद्वा शतमखजितः इन्द्रजयिनः यत् शौर्य्यम् अनुरूपमिति शेषः, अथ किंवा आत्मनः स्वस्वरूपस्य यत् अनुरूपं सदृशं, रणे रुषा क्रोधेन तत् सर्व्वम् अकृत कृतवान् । हरिणीवृत्तम्, नसमरसला गः षड्वेदैर्हयैर्हरिणी मतेति तल्लक्षणात् ॥७५॥

(ब) अनुपदं पदे पदे । अभिषिषेणयिषति सेनामभितः अभि-धावतीत्यर्थः ।

(भ) तेन इन्द्रजिता ।

(म) अर्द्धचन्द्रेण तदाख्यशरेण दारयन् खण्डयन् ।

(य) अदसीयम् ऐन्द्रजितम् । अविनयं दुराचारम् । अपारयन् अशक्नुवन् । अमर्षाकुलः क्रोधपरीतः ।

(र) माघवतास्त्रम् ऐन्द्रमस्त्रम् । अमुञ्चत् तत्याज ।

पतति स्म तत् प्रथममस्त्रमुज्ज्वलं
सशिरस्त्रमिन्द्रजयिनस्ततः शिरः ।
अनु पुष्पवृष्टिरवनौ दिवौकसा
मथ बाष्पवृष्टिरमरारियोषिताम् ॥७६॥

श्रुत्वा शक्रजितः सुतस्य निधनं शोकेन रक्षःपतेः
क्लान्त निःश्वसदश्रुपूरभरितं क्रन्दच्च फूत्कारि च ।
कोपेनाथ विपाटल कुटिलितभ्रूवल्लिवृत्तेक्षणं
जज्ञे दष्टघनोष्ठमट्टहसितोद्वृत्तं समस्तं मुखम् ॥७७॥

---

पततीति । तत् उज्ज्वलं दीप्यमानम् अस्त्र प्रथमं, ततः अस्त्र-पातानन्तरम् इन्द्रजयिनः सशिरस्त्रं सोष्णीषमित्यर्थः शिरः, अनु तदनन्तर दिवौकसा देवानां पुष्पवृष्टिः, अथ अनन्तरम् अमरारि-योषिताम् असुरनारीणा बाष्पवृष्टिः अश्रुधारा अवनौ पृथिव्यां पतति स्म । कलहंसवृत्तं, सजसाः सगौ च कथितः कलहंस इति तल्लक्षणात् ॥७६॥

श्रुत्वेति । सुतस्य पुत्रस्य शक्रजित. निधनं वधं श्रुत्वा शोकेन रक्षसां पतेः रावणस्य समस्तं मुख वदनमण्डलमित्यर्थः क्लान्तं विषण्ण, निःश्वसत्, अश्रूणां बाष्पाणां पूरैः प्रवाहैः भरितं, क्रन्दत् रुदत्, फूत्-कारि फूत्कारयुत्, अथ पश्चादनन्तरमेवेत्यर्थः कोपेन विपाटल विशेषरक्तं, कुटिलेति कुटिलिता वक्रीकृता भ्रूवल्लिः भ्रूलता यत्र तादृशं यथा तथा वृत्तानि जातानि ईक्षणानि नेत्राणि यस्मिन् तथोक्तम् । दष्टाः घनाः ओष्ठा यस्मिन् तथाविधं, तथा अट्टहसितेन हास्यविशेषेण उद्वृत्तम् उत्कटं जज्ञे जातम् । शार्दूलविक्रीडित वृत्तम् ॥७७॥

अनन्तरमपाक्रान्तेषु (ल) सुविक्रान्तेषु पुरन्दरारि-मुखेषु नन्दनेषु (व) निहतेषु कुम्भकर्णादिषु भ्रातृषु विध्वस्तेषु प्रहस्तपूर्वेषु सचिवेषु व्यतीतेषु (श) विरूपाक्षप्रभृतिषु सेनापतिषु कपिविमर्दनेन विशीर्णे (ष) भवति निखिले बले समन्ततः (स) पौरवधूजनपरिदेवनोत्तरङ्गायां (ह) लङ्कायामातङ्कातिशयरोषणो (च) रावणस्तत्क्षणमेव हर्य्यक्ष इव हरिणीं धरणीसुतां (क) जिघांसुरन्तिकगतेन (ख) मन्त्रिणा निवार्य्यमाणः सारथिना विधिना च सञ्चो-

---

(ल) अपक्रान्तेषु गतेषु मृतेष्वित्यर्थः।

(व) पुरन्दरारिमुखेषु इन्द्रजित्प्रमुखेषु। नन्दनेषु पुत्रेषु।

(श) प्रहस्तपूर्वेषु प्रहस्तादिषु सचिवेषु अमात्येषु व्यतीतेषु निधनं गतेषु।

(ष) कपीति कपीनां वानराणां विमर्दनेन दलनेन विशीर्णे विध्वस्ते।

(स) समन्ततः सर्वतः।

(ह) पौरेति पौरवधूजनानां नगरवासिनीनां कामिनीनां परिदेवनेन विलापेन उत्तरङ्गायाम् उद्गतोत्कण्ठायाम्।

(च) आतङ्कातिशयरोषण आतङ्कातिशयेन भयातिशयेन रोषणः कोपनः।

(क) हर्य्यक्ष इव सिंह इव, हर्य्यक्षः केशरी हरिरित्यमरः। हरिणीं मृगीम्। धरणीसुता सीताम्।

(ख) अन्तिकगतेन सन्निहितेन।

दिती (ग) दाशरथिविजयविहितसङ्गरः (घ) सङ्गरभुव(ङ)-मवततार ।

कोपादसौ परिघयष्टिकुठारकुन्त
चापाशुगद्रुहिणशक्तिकृपाणपाणिः ।
एकोऽप्यनेकमुखबाहुतया सबन्धु-
र्लोको यथा समिति लोचनगोचरोऽभूत् ॥७८॥

अलक्ष्यत स रक्षसामधिपतिः कृपाणं मुहुः
प्रहस्य विनिपातयन् प्लवगमण्डलीमौलिषु ।
अयं तव तवायमित्यधिसमीकमेकैकशो
वरानिव विनिर्दिशन्नमरवारवामभ्रुवाम् ॥७९॥

---

(ग) सञ्चोदितः सम्बोधितः ।

(घ) दाशरथीति दाशरथेः रामस्य विजये अद्य रामं जेष्यामीत्येवंरूपे विहितः कृतः सङ्गरः प्रतिज्ञा येन तथाभूतः ।

(ङ) सङ्गरभुवं रणभूमिम् ।

कोपादिति । असौ रावणः एकोऽपि असहायोऽपि कोपात् परिघादिविविधास्त्रधरः अनेकदशबाहुतया दशमुखविंशतिहस्ततयेत्यर्थः सबन्धुः ससहायः लोकः जनः यथा समिति सङ्ग्रामे लोचनगोचरः दृष्टिविषयः अभूत् । वसन्ततिलकं वृत्तम् ॥७८॥

अलक्ष्यतेति । सः रक्षसां अधिपतिः प्रहस्य प्लवगानां वानराणां या मण्डली समूहः तस्य मौलिषु शिरःसु मुहुः पुनः पुनः कृपाणम् असिं विनिपातयन् अधिसमीकम् अधियुद्धम् अयं तव अयं तव इति अमरवारवामभ्रुवां स्वर्गविलासिनीनाम् एकैकशः वरान् अभीष्टनायकरूपानिति भावः विनिर्दिशन्निव दातुमादिशन्निव अलक्ष्यत अदृश्यत । पृथ्वीवृत्तम् ॥७९॥

तदनन्तरमक्षौहिणीक्षोभकन्दलितरुष(च)मतिपरुषविशिख-दलितध्वज(छ)मर्द्धचन्द्र-निकृत्तधन्वान(ज)मस्त्रधाराव-दारितसारथि(झ)मतिविस्मयनीयकरलाघवं राघवानुजममर्षवेगमुक्तया शक्त्या (ञ) मुहूर्त्तमिव मुर्च्छानिमोलित-मुपराग इव (ट) कमलाकर(ठ)माततान यातुधान-पतिः (ड)।

आलोक्य दीनमनुजं हृदि शक्तिघाता-
च्छोकेन विद्धहृदयः सुतरां स रामः।
कोपेन चापमथ कुण्डलयाञ्चकार
लङ्कापतेरपि ललाटलिपिं विधाता ॥८०॥

---

(च) अक्षौहिणीति अक्षौहिणीनां संख्याविशेषयुक्तसेनानां क्षोभेन मथनेन कन्दलिता प्रवृद्धा रुट् रोषः यस्य तथोक्तम्।

(छ) अतीति अतिपरुषेण अतितीक्ष्णेन विशिखेन शरेण दलितः निकृत्तः ध्वजः येन तादृशम्।

(ज) अर्द्धेति अर्द्धचन्द्रेण निकृत्तं छिन्नं धनुर्येन तथाविधम्।

(झ) अस्त्रेति अस्त्रधारया अवदारितः निकृत्तः सारथिर्येन तथोक्तम्।

(ञ) अमर्षेति अमर्षस्य कोपस्य आवेगेन आतिशय्येन मुक्तया निक्षिप्तया शक्त्या शक्तिनामकेन अस्त्रेणेत्यर्थः।

(ट) उपराग इव ग्रास इव राहुणा सूर्य्यस्येति शेषः।

(ठ) कमलाकरं सरोवरम्।

(ड) यातुधानपतिः रावणः।

आलोक्येति। अयानन्तरं हृदि वक्षसि शक्तिघातात् शक्त्रास्त्रनिपातात् दीनं मुग्धमिति यावत् अनुजं लक्ष्मणम् आलोक्य सुर-

अवकीर्य्य दाशरथिरम्बुजलै-  
रनुजं पुलस्त्यतनुजञ्च शरैः ।  
युगपद् व्यधात् करुणवीररसौ  
युधि शोकहर्षशबलञ्च बलम् ॥८१॥

वलयितचित्रचापविनिवारितपङ्क्तिमुखे  
विसृजति राघवे विशिखवर्षममर्षवति ।  
अरिषु न कश्चिदप्यथ निवृत्य गतः समरा-  
दमरविलासिनीषु न च काचिदलब्धवरा ॥८२॥

---

राम् अतिशयेन शोकेन विद्धं हृदयं यस्य तथाभूतः स रामः कोपेन चाप धनुः विधाता अपि लङ्कापतेः रावणस्य ललाटलिपि भाललिखितसौभाग्यसूचकवर्णावलिमित्यर्थं कुण्डलयाञ्चकार एकत्र वर्तुलीचकार अन्यत्र अनावश्यकत्वात् आहतियुक्तं चकार । रामधनुर्मण्डलीकरणेन रावणविनाशस्य निश्चयात् तत्सौभाग्यं साम्प्रतं विनष्टमिति तत्सूचकलिपेरनावश्यकत्वमिति भावः । वसन्ततिलकं वृत्तम् ॥८०॥

अवकीर्य्येति । दाशरथिः रामः अम्बुजलैः वाष्पसलिलैः अनुजं लक्ष्मणं शरैः पुलस्त्यतनुजं रावणञ्च अवकीर्य्य आच्छाद्य युधि युद्धे करुणवीररसौ शोकोत्साहस्थायिभावौ सहृदयास्वादविशेषौ बलं सैन्यञ्च शोकहर्षशबलं शोकेन हर्षेण च समन्वितमित्यर्थः युगपत् समकालं व्यधात् चकार । प्रमिताक्षरावृत्तं, प्रमिताक्षरा सजससैः कथितेति तल्लक्षणात् ॥८१॥

वलयितेति । अथानन्तरं वलयितेन मण्डलितेन चित्रेण अद्भुतेन चापेन विनिवारितः निराकृतः पङ्क्तिमुखः दशाननः येन तादृशे अमर्षवति कुपिते राघवे रामे विशिखवर्षं शरवृष्टिं विसृजति उत्सृजति सति अरिषु शत्रुषु मध्ये कश्चिदपि समरात् युद्धात् निवृत्य

अयञ्च पुनरञ्जनीसुतसमानीतमहीधरमहौषधिजीवितानुजाश्लेषसुखलब्धमनोरथः (ढ) समेधमानमानसः (ण) समरकौतुकोपलम्भसरम्भोदञ्चित पुलककञ्चुकिताकृति(त)र्दाशरथिरधिसङ्गरममरसारथिना (थ) नीतमतिविशङ्कटङ्क(द)मपि रथं कङ्कटमप्य(ध)नुग्रहाय शतक्रतो(न)रग्रहीत्।

---

न गतः, अमरविलासिनीषु सुरनारीषु मध्ये च काचित् कापि अलब्धवरः अभिलषितकान्त इति यावत् यथा तादृशी न आसीदिति शेषः। नर्दटक वृत्तम्।८२॥

(ढ) अञ्जनीसुतेति अञ्जनीसुतेन हनूमता समानीतो यो महीधरः पर्वतः गन्धमादन इति भावः तस्य महौषध्या विशल्यकरणीसमाख्ययेति भावः जीवितस्य अनुजस्य लक्ष्मणस्य आश्लेषे आलिङ्गने यत् सुखं तेन लब्धमनोरथः प्राप्तमनस्काम इत्यर्थः।

(ण) समेधमानमानसः वर्धमानचित्तः।

(त) समरेति समरे सङ्ग्रामे यत् कौतुकम् औत्सुक्यं तस्य उपलम्भेन उदयेन य सरम्भः कोपः तेन उदञ्चितेन उद्गतेन पुलकेन कञ्चुकिता आवृता आकृतिर्यस्य तथाभूतः।

(थ) अधिसङ्गरम् अधियुद्धम्। अमरसारथिना मातलिना।

(द) अतिविशङ्केति अतिशयेन विशङ्कः टङ्कः अस्त्रं शत्रूणामिति भावः यस्मात् तदधिरूढेन शत्रूणामस्त्राणि निष्फलानि क्रियन्ते इति भावः।

(ध) कङ्कटमपि वर्मापि।

(न) शतक्रतोः इन्द्रस्य।

अन्योन्यस्य सदृक्षलक्ष्यमिलनादालक्ष्यशौण्डीर्ययोः
अस्त्राशस्त्रिसमुन्मिषत्पुलकयोः सश्लाघयोः साहसे ।
जाते जीवितसङ्कटेऽपि हसतोर्मूर्च्छासु विश्राम्यतो-
रश्रान्तं रघुवीरपङ्क्तिमुखयोरासीदसीमा रणः ॥८२॥

अथ तयोरश्रान्तमुक्तदिव्यास्त्रयोराखण्डलवृत्रनिभयो(प)-रालूनेषु मार्गणेषु (फ) अभङ्गुरपरस्परविजयमार्गणेषु वाग्बाणेषु विच्छिन्नेषु (ब) धनुर्गुणेषु अव्याहतसहजसाहसगुणनिकृत्तेषु धुरीणेषु यानेषु (भ) निरपायसमराभिहतिनि-

---

अन्योन्यस्येति । अन्योन्यस्य परस्परस्य सदृक्षः अनुरूपः यः लक्ष्यः शरव्यः प्रतिवीर इति यावत् तस्य मिलनात् सङ्गमात् आलक्ष्यं सम्यक् ज्ञातव्यं शौण्डीर्यं गर्वः ययोः तथाभूतयोः अस्त्राशस्त्रि अस्त्रैश्च शस्त्रैश्च प्रहृत्य यद् वृत्तं तत् अस्त्राशस्त्रि युद्धमित्यर्थः तस्मिन् समुन्मिषत् समुद्यत् पुलकं रोमहर्षः ययोः तयोस्तयोः साहसे सहसा बलेन क्रियमाणे व्यापारे युद्धे इति भावः सश्लाघयोः श्लाघावतोः, जीवितसङ्कटे प्राणसंशये जातेऽपि हसतोः, मूर्च्छासु मोहेषु विश्राम्यतोः अथ विश्राममनुभवमानयोः रघुवीरपङ्क्तिमुखयोः रामरावणयोः अश्रान्तम् अविरतम् असीमा अशेषः रणः आसीत् । शार्दूलविक्रीडितं वृत्तम् ॥८२॥

(प) आखण्डलवृत्रनिभयोः इन्द्रवृत्रासुरसदृशयोः ।

(फ) आलूनेषु निकृत्तेषु मार्गणेषु शरेषु ।

(ब) अभङ्गुरेति अभङ्गुरा अविनाशिनी अविरतेत्यर्थः परस्परविजयमार्गणा अन्योन्यविजयानुसन्धानं येषु तथाभूतेषु वाग्बाणेषु आलापनिवहेषु । विच्छिन्नेषु निकृत्तेषु ।

(भ) अव्याहतेति अव्याहतैः कदाप्यप्रतिहतैर्नित्यैः सहजैः स्वाभाविकैः साहसगुणैः निकृत्तेषु छिन्नेषु विरहितेष्विति भावः

र्भिन्ने सांयुगीने (म) च रथे परस्परगर्वकल्पविजयमनो-
रथ(य)मजायत भुजायतयोधनमायोधनम् (र)।

तूणीमुखात्त्वरितमुद्धरणे गुणेन
संयोजनेऽप्यथ शरस्य विमोचने वा।
यत्रावलोकितदशास्य इवातिवेगा-
ल्लोकेन राघवकरश्चिरमालुलुके ॥८४॥

अर्द्धोदीरितवीरवादमहरद्रामो यदस्त्रैः क्षणात्
तेनैवाङ्कुरता मुखेन जगदे शेषश्च लङ्कापतेः।

---

पुनः पुनः शरप्रहारजर्जरितत्वादिति भावः। धुरीणेषु धुर्वहेषु यानेषु अश्वेषु।

(म) निरपायेति निरपाये अविरते इत्यर्थः समरे वा अभिहतिः आघातः तया निर्भिन्ने चूर्णिते इत्यर्थः सांयुगीने सांग्रामिके। परस्परेति परस्परस्य गर्वकल्पः गर्वसदृशः विजयमनोरथः जयवासना यत्र तथाभूतम्।

(र) भुजेति भुजेन आयतम् आततं योधनं प्रतीकारः यत्र तादृशम्। आयोधनं युद्धम्।

तूणीमुखादिति। यत्र आयोधने लोकेन राघवस्य रामस्य करः भुजः तूणीमुखात् निषङ्गमुखात् त्वरितं सत्वरम् उद्धरणे, गुणेन मौर्व्या संयोजने, अथ मौर्वीयोजनानन्तरं शरस्य विमोचने निक्षेपणे वा, अतिवेगात् अवलोकितानि दृष्टानि दश आस्यानि मुखानि येन तथाविध इव चिरम् आलुलुके दृष्टः। वसन्ततिलकं वृत्तम्। उत्प्रेक्षालङ्कारः ॥८४॥

अर्द्धेति। रामः अस्त्रैः क्षणात् अर्द्धम् उदीरितः उच्चारितः वीरवादः वीरोचितवचनं साहङ्कारवाक्यमिति यावत् येन तथाविधम् यत् अहरत् चिच्छेद, अङ्कुरता पुनर्जातेन तेनैव लङ्कापतेः रावणस्य

साम्ये सत्यपि चातुरीभिरुभयोर्धानुष्कमायाविनो-
र्विच्छिन्नाननदर्शनेन समभूद् व्रीड़ा रणे रावणे ॥८५॥

दशाननशरक्षतिक्षरदसृग्भरीबुद्बुदै-
स्तरङ्गितमहेन्द्रकण्टकसहस्रचक्षुःपथः ।
रणे रघुकुलोद्वहः क्षणममानि वैमानिकै-
र्यथा दशशतेक्षणो बलरुषा कषायेक्षणः ॥८६॥

तदनु वारुणेन वैश्वानर (ल) वैनतेयेन वातन्धयं (व) वायव्येन वारिदं नैशाकरेण तामिस्रं (श) माहेन्द्रेण

---

मुखेन शेष· अवशिष्ट वचनमित्यर्थः जगदे ऊचे । उभयोः धानुष्कमायाविनो· धनुर्व्यापारे कौशलवतोरिति यावत् रामरावणयोः चातुरीभिः क्षिप्रकारितादिभिः साम्ये तौल्ये सत्यपि विद्यमानेऽपि विच्छिन्नस्य आननस्य मुखस्य दर्शनेन रणे रावणे व्रीड़ा लज्जा समभवत् अजायत । शार्दूलविक्रीडितं वृत्तम् ॥८५॥

दशाननेति । दशाननस्य रावणस्य शराणां क्षत्या प्रहारेण क्षरन्ती या असृग्भरी शोणितधारा तस्या· बुद्बुदैः स्फोटविशेषैः तरङ्गितः प्रतिफलित महेन्द्रकण्टकसहस्रस्य इन्द्रशत्रुसमूहस्य चक्षुःपथः दृष्टिमार्गः यत्र तथाभूत· रघुकुलोद्वहः राम· रणे युद्धे वैमानिकै· विमानचारिभिर्देवैरित्यर्थः क्षणं बलरुषा बल नाम असुरं प्रति कोपेन कषायेक्षणः रक्तलोचन इत्यर्थः दशशतेक्षणः सहस्राक्षः यथा अमानि बुध्यते स्म । पृथ्वीवृत्तम् ॥८६॥

(ल) वारुणेन वरुणास्त्रेण जलवर्षिणेति भावः । वैश्वानरम् आग्नेयम् ।

(व) वैनतेयेन गारुडेन वातन्धय भौजङ्गम् ।

(श) वायव्येन वायुदैवतेन अस्त्रेण । वारिदं मेघरूपम् । नैशाकरेण चान्द्रेण अस्त्रेणेति शेषः तामिस्रम् अन्धकारमयम् ।

दानवं(ष) वैष्णवीयेन माहेश्वरञ्च(स) परस्परमेवमस्त्रमस्त्रेण भिन्दानयो(ह)रनयोरनिशमाहवाग्रहादविदितान्यहानि(च) सप्त व्यतीयु.(क)।

अस्त्राग्रस्त्रि सकौतुकोऽपि दयितां सञ्चिन्त्य चिन्ताकुला-
मस्त्रेण ज्वलता विधेरपुनरुन्मेषं निमेषेण सः।
मूर्ध्नः कन्दलितान् मुहुर्मुहुरवच्छेदेऽपि लङ्कापते-
रातङ्केन समं समस्तजगतां चिच्छेद सीतापतिः॥८९॥

---

(ष) माहेन्द्रेण ऐन्द्रेण दानवं दानवसम्बन्धीत्यर्थः।

(स) वैष्णवीयेन विष्णुदैवेन। माहेश्वरं शैवम्।

(ह) भिन्दानयोः छिन्दतोः।

(च) आहवाग्रहात् सङ्ग्रामाभिनिवेशात्। अविदितानि अज्ञातानि। अहानि दिनानि।

(क) व्यतीयुः अतीतानि।

अस्त्राग्रस्त्रीति। चिन्ताकुला विरहशोकक्लिष्टता दयितां कान्तां सीतां सञ्चिन्त्य स्मृत्वा सकौतुकः समुत्सुकः यः सीतापतिः रामः अस्त्राग्रस्त्रि अस्त्रैश्च अस्त्रैश्च प्रहृत्य यद् युद्धं तत् तस्मिन् युद्धे इत्यर्थः. ज्वलता दीप्यमानेन अस्त्रेण निमेषेण अत्यल्पक्षणेन मुहुर्मुहुः पुनः पुनः अवच्छेदे कर्तनेऽपि कन्दलितान् पुनरुद्भूतान् मूर्ध्नः शिरांसि विधेः दैवात् अपुनरुन्मेषम् अपुनर्भवं यथा तथा समस्तजगताम् आतङ्केन भयेन समं सह चिच्छेद। रावणवधेन जगत् निरुपद्रवं चकारेति भावः। शार्दूलविक्रीडितं वृत्तम्। अत्र रावणवधरूपकारणस्य जगताभयरूपस्य कार्य्यस्य च समकालीनत्वात् कार्य्य-हेत्वोः पौर्वापर्य्यात्ययरूपातिशयोक्तिरलङ्कारः। तदुक्तं दर्पणे। सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते। भेदेऽप्यभेदः सम्बन्धेऽसम्बन्धस्तद्विपर्य्ययौ। पौर्वापर्य्यात्ययः कार्य्यहेत्वोः सा पञ्चधा ततः इति॥८७॥

रक्षःपतौ पतति लब्धमनोरथाना-
मातन्वतां दिविषदामथ पुष्पवर्षम् ।
श्लाघापदं समजनिष्ट परं न रामः
कामोऽपि चाकलितशूर्पणखाविकारः ॥८८॥

अनन्तरमालिङ्गितवसुन्धरं (ख) शरतल्प(ग)मधिशयान-मधिगतनिषङ्गोपधानं (घ) यातुधानपतिमधिगत्य (ङ) निपत्य च सोदर्य्याहार्य्यसौहार्दसुलभवैधुर्य्यः (च) कदर्य्यो(छ)ऽहमिति विहितनिजदूषणो (ज) विभीषणश्चिरतरं विललाप ।

---

रक्षःपताविति । रक्षसां पतौ रावणे पतति सति रामः परं केवलं लब्धमनोरथानां सिद्धकामानां पुष्पवर्षम् आतन्वतां कुर्वतां दिविषदां देवानां श्लाघापदं प्रशंसास्थानं न समजनिष्ट नासीत्, आकलितः सम्यक् कृतः शूर्पणखाया विकारो येन तथाभूतः कामोऽपि श्लाघापदं समजनिष्टेत्यर्थः । कामव्यथयैव शूर्पणखाया रामसमीपगमनात् तन्मूल एव राक्षसकुलध्वंस इति कामस्य श्लाघ्यतेति भावः । वसन्ततिलकं वृत्तम् ॥८८॥

(ख) आलिङ्गितवसुन्धरं भूपतितमित्यर्थः ।

(ग) शरतल्पं शरशय्याम् ।

(घ) अधिगतनिषङ्गोपधानम् उपधानीकृततूणम् ।

(ङ) अधिगत्य प्राप्य ।

(च) सोदर्य्येति [illegible] सहोदरस्य [illegible] आहार्य्यं यत् सौहार्दं सौभ्रात्रमित्यर्थः [illegible] सुलभं वैधुर्य्यं कातर्य्यं यस्य तथाभूतः ।

(छ) कदर्य्यः [illegible] ।

(ज) [illegible] दोषः ।

अयि समसुखदुःखैरन्वितं बन्धुवर्गैः
सहजमपि भवन्तं मुञ्चतः साहसेन ।
कुलविनशनहेतोः कूटधर्मानुवृत्ते-
र्दशमुख ! मम यावज्जीवमासीत्कलङ्कः ॥८९॥

आर्य्यस्य रक्षितुमसूननुजः स एकः
प्राणानमुञ्चत परं युधि कुम्भकर्णः ।
त्वज्जीवहृत् स्वयमहं मम जीवहेतो-
रद्यापि हन्त सहते हतको विधिर्माम् ॥९०॥

इत्येवमस्मिन् (झ) विलपति विदितवृत्तान्ता शुद्धा-न्तात्मकरुणारुदारटन्तीभि(ञ)रन्तरितयूथपाभिः (ट) करि-

---

अयीति । अयि दशमुख ! समसुखदुःखैः बन्धुवर्गैः अन्वितं युक्तं सहजमपि सोदरमपि भवन्तं साहसेन अविमृश्यकारितये-त्यर्थः मुञ्चतः त्यजतः कुलस्य वंशस्य विनशने विध्वंसने हेतुः कारणं तस्य कूटधर्मानुवृत्तेः कपटधार्मिकस्येत्यर्थः मम यावज्जीवं कलङ्कः अपवाद आसीत् । मालिनीवृत्तम् ॥८९॥

आर्य्यस्येति । स एकः अनुजः कनीयान् कुम्भकर्णः परं केवलं आर्य्यस्य ज्येष्ठस्य भ्रातुः असून प्राणान् रक्षितुं युधि युद्धे प्राणान् अमुञ्चत तत्याज । अहं स्वयं मम जीवहेतोः जीवनार्थं तव जीवहृत् प्राणहर्त्ता । हन्त खेदे । हतकः दुष्ट इति यावत् विधिः दैवं अद्यापि अधुनापि मां सहते क्षमते । मां प्रति विधेः क्षमा नोचितेति भावः । वसन्ततिलकं वृत्तम् ॥९०॥

(झ) अस्मिन् विभीषणे ।

(ञ) आरटन्तीभिः क्रोशन्तीभिः ।

(ट) अन्तरितः विनष्टः यूथपः गजपतिः याभ्यः ताभिः ।

णीभिरिव तरुणीभिः समं समापत्य (ठ) मध्ये समर(ड)मापतितमग्रनिहतमिव मन्दरं दशकन्धरं समीक्ष्य (ढ) निकृत्तोपन्नेव (ण) लता निपतन्ती विलपन्ती नाथ नाथेति विषादाहता दयितविधुरीकृतकुररीवामन्दं (त) चक्रन्द मन्दोदरी।

या वीक्षिताजनि पुरा यमराजधानी
वीर! त्वया निखिलदिग्विजयोत्सवेषु।
तामद्य दुर्विधिबलेन समस्तलोक-
साधारणः पुनरुपैष्यसि हा किमेकः ॥९१॥
जनकः स्वयं दनुजवंशनायको
दयितो जगत्त्रितयजैत्रशासनः।

---

(ठ) समापत्य समेत्य।

(ढ) मध्येसमर युद्धक्षेत्रमध्ये।

(ढ) समीक्ष्य दृष्ट्वा।

(ण) निकृत्ता छिन्ना। उपन्ना आश्रिता।

(त) दयितेति दयितेन कान्तेन कुररेणेति भावः विधुरीकृता विरहितेत्यर्थः कुररीव उत्क्रोशाख्यपक्षिणीव।

येति। हे वीर! पुरा पूर्वं निखिलदिग्विजयोत्सवेषु त्वया या यमराजधानी वीक्षिता दृष्टा अजनि, हा खेदे, अद्य दुर्विधिबलेन दुर्दैवप्रभावेण समस्तलोकसाधारणः सर्वजनसमानः एकः एकाकी सन् तां यमराजधानीं पुनः किम् उपैष्यसि? गमिष्यसि? वसन्ततिलकं वृत्तम् ॥९१॥

जनक इति। जनकः पिता ममेति शेषः स्वयं दनुजवंशनायकः दानवराजः मय इति भावः, दयितः कान्तः ममेति शेषः जग-

तनयः पुरन्दरजयीति गर्विता
विधिनाहमेवमधुना विडम्बिता ॥९२॥

राजन्यधर्मविदुषोऽपि रघूद्वहस्य
हत्वा यथाग्रजमथानुजपट्टबन्धः ।
आरभ्य बालिनमयं कथमाविरासी-
दिक्ष्वाकुवंशसहजः कथमेष धर्मः ॥९३॥

अहह निहता लङ्का बालानलेन हनूमतः
परमवनिजापातिव्रत्यानलेन भवानपि ।
सुखमहमिहासीना शोकानलेन यदीदृशे
प्रभवति न मां हन्तुं प्रायः स एव चितानलः ॥९४॥

---

त्रितये त्रिभुवने जैत्रं शासनं यस्य तादृशः त्रिलोकविजयीत्यर्थः, तनयः पुत्रः मेघनादः पुरन्दरजयी इन्द्रजित् इतीत्थं गर्विता अहं विधिना दैवेन इत्थम् इत्थम् अधुना विडम्बिता प्रतारिता अस्मीति शेषः । मञ्जुभाषिणीवृत्तम् ॥९२॥

राजन्येति । राजन्यधर्मविदुषः राजधर्मविदोऽपि बहुषु भ्रातृषु ज्येष्ठ एव राज्याधिकारीति राजधर्मः तं जानतोऽपीत्यर्थः रघूद्वहस्य रामस्य यथा अग्रजं हत्वा अथ अनन्तरम् अनुजपट्टबन्धः अनुजस्य राजाभिषेक इति भावः अयं धर्मः बालिनम् आरभ्य कथं किम् आविरासीत् प्रावर्त्तत किम् ? अथवा इक्ष्वाकुवंशीयानां सहजः स्वाभाविक एष धर्मः कथं किम् ? वसन्ततिलकं वृत्तम् ॥९३॥

अहहेति । अहहेति खेदे, हनूमतः बालानलेन लाङ्गूलाग्निना लङ्का निहता दग्धा, परम् अन्यत् अवनिजायाः सीतायाः पातिव्रत्यानलेन सतीत्वाग्निना भवानपि निहत इति शेषः । अहम् इह लङ्कायां शोकानलेन इत्थम् आसीना [illegible] । यत् यतः ईदृशे काले इति [illegible] [illegible] प्रायः बाहुल्येन

तदहमिदानीं सायन्तनसमय इव सवितुः (थ) प्रभा भगवति प्रविश्य जातवेदसि (द) चन्द्रिकेव चन्द्रमसं तडिदिव (ध) तडित्वन्त (न) भवन्तमनुसरन्ती निर्वापयामि निरन्तरविरहदहनदह्यमानमात्मानमित्यादिकरुणपरिदेवनवतीं प्रजावतीं (प) निवर्त्य निवर्त्य च निशिचरपतेर्यथाविधि निजाज्ञया पितृमेधसमेतं सविधमेधमानविषादं (फ) विभीषणमशेषराज्याधिपतिं विधातु(ब)मखिलतीर्थोपहृतैरम्भोभिरम्भोधर इव (भ) दावानलाकुलं वनस्पतिं (म) रघुपतिरभ्यषिञ्चत् ।

अथ दशरथनन्दनाभिषेका-
दधिगतराज्यपदो विभीषणोऽयम् ।

---

मा इन्तुं न प्रभवति न शक्नोति । हरिणीछन्दः, नसमरसला गः षड्वेदैर्हयैर्हरिणी मतेति तल्लक्षणात् ॥८४॥

(थ) सवितुः सूर्य्यस्य ।

(द) जातवेदसि अग्नौ ।

(ध) तडिदिव विद्युदिव ।

(न) तडित्वन्तं मेघम् ।

(प) प्रजावतीं भ्रातृजायां, प्रजावती भ्रातृजायेत्यमरः ।

(फ) पितृमेधसमेतम् अन्त्येष्टिक्रियासमन्वितम् । सविधं समीपम् । एधमानविषादं प्रवर्द्धमानशोकम् ।

(ब) विधातुं कर्त्तुम् ।

(भ) अम्भोधर इव मेघ इव ।

(म) वनस्पतिं महातरुम् ।

अथेति । अथानन्तरं दशरथनन्दनस्य रामस्य अभिषेकात् अधिगतं प्राप्तं राज्यपदं येन तथोक्तः अयं विभीषणः अनुदिनं प्रतिदिनम्

अनुदिनमभिवृद्धमण्डलोऽभू-
द्‌रुणकरामृतपूरणादिवेन्दुः ॥८५॥
नीतामुदीक्ष्य निभृतेन विभीषणेन
सीतामुदारगुणशीलवतीं सतीनाम् ।
देवस्य तत्क्षणमभूद्दशकन्धरारे-
रानन्दशोकरसबन्धुरमन्तरङ्गम् ॥८६॥

तदनन्तरमरुन्धतीव पवित्रचारित्रनिधिरधिदेवता पतिदेवतानामनादिपुंसो(य)ऽपि मर्त्यधर्मणः (र) प्रत्यायनाय (ल) नायकस्य (व) पुरन्दरमुखान् वहिर्मुखान् (श) पुरस्कृत्य भगवन्तमरविन्दासन(ष)मिन्दुकलेव पुनरुदे-

---

अभिवृद्धम् अभितो वृद्धिं प्राप्तं मण्डलं चक्रं राष्ट्रमित्यर्थः यस्य तथाभूतः सन् अरुणस्य सूर्यस्य कराः किरणा एव अमृतानि तैः पूरणात् पोषणात् इन्दुरिव चन्द्र इव अभूत् । पुष्पिताग्रावृत्तम् । उपमालङ्कारः ॥८५॥

नीतामिति । निभृतेन सयत्नेन विभीषणेन नीतां समीपमानीतां सतीनाम् उदाहरणगुणशीलवतीं दृष्टान्तभूतगुणशीलसम्पन्नां सीताम् उदीक्ष्य दृष्ट्वा देवस्य दशकन्धरारेः रामस्य तत्क्षणम् अन्तरङ्गम् अन्तःकरणम् आनन्दशोकरसाभ्यां हर्षविषादाभ्यामित्यर्थः बन्धुरं विमिश्रमित्यर्थः अभूत् । वसन्ततिलक वृत्तम् ।

(य) अनादिपुंसः आदिपुरुषस्य नारायणस्य ।

(र) मर्त्यधर्मणः मानवरूपिणः ।

(ल) प्रत्यायनाय विश्वासाय ।

(व) नायकस्य भर्त्तुः रामस्येत्यर्थः ।

(श) पुरन्दरमुखान् इन्द्रादीन् वहिर्मुखान् देवान् ।

(ष) अरविन्दासन ब्रह्माणम् ।

श्यन्ती (ग) तपनमिव (ङ) दहनमवजगाहे (च) ।

प्राविशदर्चिषि परं निजशुद्धिहेतो-
र्देवी पवित्रचरिता जनकेन्द्रपुत्री ।
अद्यश्चिरं हि यदपावनवस्तुसङ्गात्
युक्तं स्वयं तदमुना दमुना बभूव ॥९७॥

विशुद्धशीलामनलानुषङ्गाद्
विदेहजां तत्र विलोक्य सीताम् ।
प्रभां पुनः प्रत्युषसीव पूषा
प्रत्यग्रहीत् प्राग्रहरो रघूणाम् ॥९८॥

अथोदारधी(क)रधिगतनिजप्रशंसाविधिना (ख) वि-

---

(ग) उद्दिशन्ती उदय गमिष्यन्ती ।

(ङ) तपनमिव सूर्य्यमिव ।

(च) दहनम् अग्निम् । अवजगाहे प्रविवेश ।

प्राविशदिति । पवित्रं विशुद्धं चरितं यस्याः तथाभूता देवी जनकेन्द्रपुत्री सीता परं केवलं निजशुद्धिहेतो. आत्मशोधनाय अर्चिषि अग्निज्वालायां प्राविशत् प्रविवेश । अपावनानाम् अपवित्राणां वस्तूनां सङ्गात् संसर्गात् चिरं यत् अंह. पापं युक्तं अदेहे सङ्कत-मित्यर्थः दमुना अग्निं अमुना सीतायाः सङ्गेनेति भावः स्वयं तत् पवित्रं वस्तु इति यावत् बभूव । वसन्ततिलकं वृत्तम् ॥९७॥

विशुद्धशीलामिति । रघूणां प्राग्रहरः रामः तत्र लङ्कायां विदेहजां वैदेहीं सीताम् अनलानुषङ्गात् अग्निसङ्गात् विशुद्धशीलां पवित्रचरितां विलोक्य दृष्ट्वा पूषा सूर्य्यः प्रत्युषसि प्रभाते पुनः प्रभामिव प्रत्यग्रहीत प्रतिग्रहीतवान् । उपजातिवृत्तम् ॥९८॥

(क) उदारधी. महामति. ।

(ख) अधिगतेति अधिगतः प्राप्तः निजप्रशंसाविधिः येन तादृ-शेन ।

धिना (ग) पुरः प्रदृश्यमानं विमानाधिगतमहारथं (घ) दशरथं प्रणिपत्य प्रतिपाल्य च शिरसि तदनुशासनं (ङ) पाकशासनवरप्रत्युज्जीवितैर्हरिभि(च)रनुगम्यमानः प्रमोदमानमना. (छ) सुग्रीवेण सह सम्भाषयमाणो विभीषणं सकरुणमवलोकयन्ननुजेन च सीतया सममयोध्यामधिगन्तुकामो रामः खेचरं विमानमारुरोह किमपि कौवेरम् (ज)।

आरुह्य पुष्पकमथ विदितानि तानि
लङ्कोपकण्ठदशकण्ठरणाङ्गणानि।
सिन्धुं गभीरमपि सेतुनिबन्धनञ्च
सन्दर्शयन् मृगदृशं स जगाम रामः ॥९९॥

---

(ग) विधिना ब्रह्मणा।

(घ) विमानेति विमानं देवयानम् अधिगतः प्राप्तः महारथश्च तम्।

(ङ) तदनुशासनं तस्य पितुः अनुशासनम् आदेशम्।

(च) पाकशासनेति पाकशासनस्य इन्द्रस्य वरेण प्रत्युज्जीवितैः जीवनं प्राप्तैः। हरिभिः वानरैः युद्धहतैरिति भावः।

(छ) प्रमोदमानं प्रहृष्यत् मनो मानसं यस्य तथाभूतः।

(ज) खेचरम् अन्तरीक्षचरं किमपि अनिर्वचनीयं कौवेरं विमानं पुष्पकमित्यर्थः।

आरुह्येति। सः अथ रामः पुष्पकम् आरुह्य विदितानि तानि लङ्कोपकण्ठे लङ्कासन्निधौ दशकण्ठस्य रावणस्य रणाङ्गणानि रणक्षेत्राणि गभीरं सिन्धुं समुद्रं सेतुनिबन्धनं सेतुबन्धनञ्च मृगदृशं जनकात्मजां सीतां सन्दर्शयन् जगाम। वसन्ततिलकं वृत्तम् ॥९९॥

उपरि यथा यथा मणिविमानमुदञ्चति न-
स्तरुणि ! तथा तथा विपुलतामुपयाति नभः ।
मही॑वलये तु पल्वलमवेक्ष्य महाम्बुनिधिं
पवनभुवे निवेद्य च हसन्ति परे हरयः ॥१००॥

प्रिये विदेहराजनन्दिनि ! विनतानन्दनमत्यति-
शेते (झ) विमानवेग ।

यद् यद् दूरे पुरः पश्यन्निच्छामि तव शंसितुम् ।
तत् तदन्वगपि द्रष्टुं तत्क्षणेनापवार्य्यते ॥१०१॥

तरुणि धरणीसुते ! (ञ) पश्य ऋष्यमूकोऽयं विम्बाधरे ! (ट) पम्पासर इदं कम्बुकण्ठि ! (ठ) कबन्धनिबन्धनभू(ड)रियं

---

उपरीति । उपरि अन्तरीक्षे मणिविमानं रत्नभूतं पुष्पकं यथा यथा उदञ्चति उत्तिष्ठति, हे तरुणि ! नभः आकाशं तथा तथा विपुलतां विशालत्वम् उपयाति गच्छति । परे अन्ये हरयः वानराः महीवलये भूमण्डले महाम्बुनिधिं महासमुद्रम् अवेक्ष्य दृष्ट्वा पवनभुवे हनूमते पल्वलं क्षुद्रं सरः निवेद्य कथयित्वा हसन्ति च । नर्द्दटकं वृत्तम् ॥१००॥

(झ) विनतानन्दनं गरुड़म् । अतिशेते अतिक्रामति ।

यदिति । पुरः अग्रतः दूरे यत् यत् पश्यन् तव शंसितुं वक्तुम् इच्छामि, तत् तत् तत्क्षणेनापि अन्वगपि पश्चादपि द्रष्टुम् अपवार्य्यते तिरोधीयते, तत्क्षणमेव दृष्टिपथात् अपगच्छतीति भावः । वेगातिशयद्योतनमिदम् ॥१०१॥

(ञ) धरणीसुते ! पृथिवीकन्ये !

(ट) विम्बाधरे ! विम्बफलसदृशाधरशालिनि !

(ठ) कम्बुकण्ठि ! शङ्खनिभकण्ठशालिनि !

(ड) कबन्धनिबन्धनभूः कबन्धाख्ययोजनबाहुबद्धस्थानम् ।

करभोरु! खरादिकलहस्थल(ढ)मिदं मधुरालापिनि! मम पर्णशालेयं (ण) मत्तेभगामिनि! (त) मायामृगमृगयावनमिदं कुटिलायतकबरि! (थ) गोदावरीयं कुम्भिकुम्भस्तनि! (द) कुम्भसम्भवायतन(ध)मिदं विधुमुखि! विराधविध्वसनवनमहीयं (न) विपुलविलोचने! (प) महामुनेरत्रेराश्रमपदमिदं विदेहराजपुत्रि! चित्रकूटोऽयमिति विविधाः कथाः कथयन्नेव भागीरथीपरिसरगत (फ) भरद्वाजमुनेः प्रशान्त पावन तपोवनमयासीत्। अभाषत च मैथिलीम्।

प्रसुप्तबर्हिनिःश्वासपारणासुखितः फणी।
कण्डूविनोदनोत्कण्ठो कण्ठोरवनखैर्मृगः ॥१०२॥

---

(ढ) खरादिकलहस्थल खरादिराक्षसयुद्धक्षेत्रम्।

(ण) पर्णशाला पत्रकुटीरम्।

(त) मत्तेभगामिनि! मत्तगजगामिनि!

(थ) कुटिलायतेति! कुटिला भङ्गिमती आयता दीर्घा कबरी केशपाशः यस्याः तत्सम्बुद्धौ।

(द) कुम्भिकुम्भस्तनि गजकुम्भनिभपयोधरे!

(ध) कुम्भसम्भवेति कुम्भसम्भवस्य अगस्त्यस्य आयतनम् आश्रमः, अगस्त्यः कुम्भसम्भव इत्यमरः।

(न) विराधेति विराधस्य राक्षसविशेषस्य विध्वसनवनमही विनाशनकाननक्षेत्रम्।

(प) विपुलविलोचने! विशालनेत्रे!

(फ) भागीरथीपरिसरगत गङ्गासमीपस्थितम्।

प्रसुप्तेति! फणी भुजगः प्रसुप्तस्य निद्रितस्य बर्हिणः मयूरस्य निःश्वासस्य निःश्वासमारुतस्य पारणया भोजनेन सुखितः आन-

तत्र भरद्वाजविहितविविधातिथेय' (ब) तथैव पदवीं (भ) दवीयसीमतीत्य (म) पुनरयोध्यासविधमासीद(य)न्नग्रत एव हनूमदावेदितोदन्तं समागच्छन्त अरुन्धतीजानिपुरःसर(र)मजस्रमानन्दाम्बुजलविलुलितालोकै(ल)रमात्यलोकैः परिगत(व)मतिपावनतपोधनव्रतमाजानभक्तिभरितं (श) भरतमवलोकयन्नतिवत्सलमना विमानावरोहणाय (ष) दशकण्ठरिपु(स)रुदकण्ठत (ह)।

---

न्दितः। मृगः हरिणः कण्ठीरवस्य सिंहस्य नखैः कण्डूविनोदनाय उत्कण्ठते अभिलषतीति तथोक्ता, अत्र तपोवने इति शेषः। तपःप्रभावात् प्राणिनः स्वभाववैरमपि परित्यज्य अस्मिन् वसन्तीति भावः। अनुष्टुव्वृत्तम् ॥१०२॥

(ब) भरद्वाजेति भरद्वाजेन विहितं कृतं विविधम् आतिथेयम् अतिथिसत्कारः यस्य तथाभूतः।

(भ) पदवीं पन्थानम्।

(म) दवीयसीं दूरवर्त्तिनीम्। अतीत्य अतिक्रम्य।

(य) आसीदन् उपगच्छन्।

(र) अरुन्धतीजानिपुरःसरं वशिष्ठाग्रगम्।

(ल) आनन्देति आनन्दाम्बुजलैः विलुलितः आलोकः दर्शनं येषां तथाभूतैः।

(व) परिगतं समन्तात् परिवृतम्।

(श) आजानभक्तिभरितं स्वाभाविकभक्तिसम्पन्नम्।

(ष) विमानावरोहणाय विमानात् अवरोहणाय अवतरणाय।

(स) दशकण्ठरिपुः रामः।

(ह) उदकण्ठत उत्कण्ठितवान्।

यान मदाशयमवेत्य यथा यथैतत्
तारापथादवतरत्यवनीकुमारि ।
आसेदुषी सविधमद्य तथा तथा भूः
रत्यादरेण भवतीमभिगच्छतीव ॥१०३॥

इत्थं वदन्निन्दुमुखीं सलीलं
देवः प्लवङ्गाधिपदत्तहस्तः ।
विभीषणावेदितया पदव्या
विमानतो मन्दमवारुरोह ॥१०४॥

प्रणीतमणिपादुकं प्रणतमग्रतः पादयो-
रुदस्य भरतं जवादुपनयन् भुजाभ्यन्तरम् ।
अवेक्ष्य च तपःकृशं वपुरतीववात्सल्यतो
नवं नवमिव स्पृशन् न विरराम रामश्चिरम् ॥१०५॥

---

यानमिति । हे अवनीकुमारि ! पृथिवीकन्ये ! मम आशयम् अभिप्रायम् अवेत्य विदित्वा एतत् यानं पुष्पकं विमानं यथा यथा तारापथात् अन्तरीक्षात् अवतरति, अद्य भूः पृथिवी तथा तथा सविधं समीपम् आसेदुषी आगतवती सती अत्यादरेण भवतीम् अभिगच्छतीव । वसन्ततिलकं वृत्तम् ॥१०३॥

इत्थमिति । देवः रामः इन्दुमुखीं सीताम् इत्थं वदन् प्लवङ्गाधिपाय दत्तः हस्तः येन तथाभूतः सन् विभीषणावेदितया पदव्या मार्गेण विमानतः पुष्पकात् सलीलं सविलासं मन्दं यथा तथा अवारुरोह अवततार । उपजातिवृत्तम् ॥१०४॥

प्रणीतेति । रामः प्रणीता गृहीता मणिपादुका रत्नपादुका येन तथोक्तम् अग्रतः पादयोः प्रणतं भरतं जवात् वेगात् उदस्य उत्तोल्य भुजाभ्यन्तरं भुजयोरभ्यन्तरं वक्षःस्थलम् उपनयन् प्रापयन् तपसा कृशं वपुः शरीरं भरतस्येति शेषः अवेक्ष्य दृष्ट्वा च अतीववात्-

पश्यन् ननन्द भरतः परिरभ्य दोर्भ्यां
सौमित्रिमार्य्यसमदुःखसुखं वनेऽपि।
सोऽथ सुखोपनतराज्यपराङ्मुखाय
तस्मै पुनः सहजभक्तिपराङ्मुखाय ॥१०६॥

अथ भरतोऽपि पुरतोऽभिवादितपूर्वजोपलालननिघ्नेन (च) शत्रुघ्नेन समं सविनयं प्रणिपत्य जनकेन्द्रपुत्रीमुन्मनीकृत्य (क) सुग्रीवदशग्रीवानुजादीन् (ख) सावरोधवधूकान् (ग) यथोचिताभिरुपचर्य्याभि(घ)रभ्यर्च्याभ्यर्चित-

---

अत्यन्तस्नेहात् चिरं नवं नवमिव स्पृशन् न विरराम पुनः पुनः स्पृष्टवानित्यर्थः। पृथ्वीवृत्तम् ॥१०५॥

पश्यन्निति। भरतः वनेऽपि आर्य्यस्य रामस्य समदुःखसुखं सौमित्रिं लक्ष्मणं पश्यन् दोर्भ्यां भुजाभ्यां परिरभ्य आलिङ्ग्य ननन्द। सोऽथ सौमित्रिः पुनः सुखोपनतम् अनायासलब्धं यत् राज्यं तस्मात् पराङ्मुखाय विमुखाय ज्येष्ठभक्त्यतिशयेनेति भावः सहजा स्वाभाविकी या भक्तिः ज्येष्ठानुरागः तया परम् अत्यर्थम् अञ्चति स्फुरतीति तथोक्तं सुखं यस्य तादृशाय तस्मै भरताय भरतसुहृदस्येति भावः क्रियया यमभिप्रैतीति सूत्रेण सम्प्रदानत्वम्। ननन्देति पूर्वेणान्वयः। वसन्ततिलकं वृत्तम् ॥१०६॥

(च) पुरतः अग्रतः। अभिवादितः अभिवन्दितः यः पूर्वजः ज्येष्ठः तस्य उपलालनेन स्नेहाङ्गस्पर्शनादिनेति भावः निघ्नः विवशः तेन।

(क) उन्मनीकृत्य प्रफुल्लमनीकृत्य अभिनन्द्येत्यर्थः।

(ख) सुग्रीवेति सुग्रीवविभीषणादीन्।

(ग) सावरोधवधूकान् अन्तःपुरस्त्रीसमेतान्।

(घ) उपचर्य्याभिः सत्कारैः।

पुरोहितमामन्त्रितमखिलोकमालोकानुगृहीतपौरवर्गमग्र-जन्मानं (ङ) विमानत एव सबहुमानमनयदपनीतजन-परिश्रम (च) निजाश्रमम्। तत्र च सौमित्रिसीतासखो दाशरथिरतिलोभनीयवात्सल्या (छ) कौशल्यामयशःशल्य-जनितशोकातिरेकां (ज) कैकेयीमकृत्रिमस्नेहपरिष्वक्तां (झ) सुमित्रामपि क्रमादभिवादयन्निजालोकरसानितान्तकन्द-लितान्तरङ्गाभिरेताभि(ञ)श्चन्द्र इव पयोधिवीचिकाभि (ट) प्रतिक्षणं परिरभमाणाभिः (ठ) सलक्ष्मणः केवलमानन्द-धुरमविन्दत (ड)।

---

(ङ) अग्रजन्मान ज्येष्ठं रामभित्यर्थः।

(च) अपनीतेति अपनीत अपगतः जनाना परिश्रमः यस्मात् तथोक्तम्।

(छ) अतिलोभनीयेति अतिशयेन लोभनीयं स्पृहणीयं वात्सल्यं स्नेह यस्याः तथाभूताम्।

(ज) अयश इति अयशः शल्यमिव तेन जनितः शोकातिरेकः यस्याः तथोक्ताम्।

(झ) अकृत्रिमेति अकृत्रिमेण सहजेन स्नेहेन परिष्वक्ताम् आलिङ्गितां नैसर्गिकस्नेहवतीमित्यर्थः।

(ञ) निजेति निजालोकरसेन स्वस्य दर्शनास्वादेन नितान्तम् अत्यन्तं कन्दलितं परिपुष्टम् अन्तरङ्गं अन्तःकरणं यासां तथोक्ताभिः। एताभि. कौशल्यादिभिः।

(ट) पयोधिवीचिकाभिः समुद्रलहरीभिः।

(ठ) परिरभमाणाभिः आलिङ्गन्तीभि।

(ड) आनन्दधुरम् आनन्दभारम्। अविन्दत अलभत।

अथ।खिलजगत्पतेरपि रघूद्वहस्यादरा-
द्विधातुमभिषेचन विचलता गुरोराज्ञया ।
अनीयत समन्ततो हरिगणेन तीर्थं पुनः
विशङ्क्य हृदि मन्थरां न भजता गतिं मन्थराम् ॥१०७॥

अलङ्कृत कृतमभिषेकमादरात्
अमात्यसहतिभिरवाप्य राघवः ।
पुरोन्मुखः पुनरयमानशे रथ
मनोरथ स च भरतो महारथ ॥१०८॥

तत्र च सेवाविचक्षणाभ्या (ढ) लक्ष्मणशत्रुघ्नाभ्याम-भितो विधयमानधवलवालव्यजनः (ण) परिजनाचारनि-

---

अर्थेति । अथानन्तरम् अखिलजगता पतेरपि रघूद्वहस्य रामस्य आदरात् अभिषेचनं विधातुं गुरोर्वशिष्ठस्य आज्ञया कर्त्र्या समन्ततः चतुर्दिक्षु विचलता गच्छता हरिगणेन वानरवृन्देन हृदि मनसि मन्थरा कुब्जा प्राक् रामाभिषेकविघ्नकर्त्रीमिति भावः विशङ्क्य यदि पुनरन्तराये वर्त्तते इति धियेति भावः मन्थरा मन्दा गतिं न भजता सत्वरगामिनेत्यर्थः सता पुनः तीर्थम् अनीयत प्रापितम् । पृथ्वीवृत्तम् ॥१०७॥

अलङ्कृत इति । अयं राघवः अमात्यसंहतिभिः मन्त्रिवृन्दैः आदरात् कृतम् अभिषेकम् अवाप्य प्राप्य अलङ्कृतः विभूषितः पुरोन्मुखः नगराभिमुखः सन् पुनः रथं, स च महारथो भरतस्य मनोरथ मनस्कामम् आनशे प्राप । रुचिरावृत्त, जभौ जसौ गिति-रुचिरा चतुर्ग्रहैरिति तल्लक्षणात् ॥१०८॥

(ढ) सेवाविचक्षणाभ्यां सेवानिपुणाभ्याम् ।

(ण) विधूयमानेति विधूयमानं सञ्चाल्यमानं धवलं श्वेतं वाल-व्यजनं चामरं यस्य तथाभूतः ।

रतभरतोदस्तमणिविमलमुक्तातपत्रो (त) विचित्रोपजात-मनुज-वेषचारुभि(थ)रारूढशताङ्ग-मातङ्गै(द)रलङ्कृतैराशर-प्लवङ्गपतिभि(ध)रनुगम्यमानः प्रवर्त्यमानशेषाक्षतकुसुमला-जोपचारपौरपुरन्ध्रीकदम्बसौरभ (न) चलितमञ्जुमञ्जीर-मणिकाञ्चीवलयवाचाटितदशदिगन्तरां (प) वाद्यमानमा-ङ्गलिकभेरीमृदङ्गशङ्खादिकविविधारवश्रवणसमयोच्चलित-सामोदपौरसम्बाधा (फ) सौधान्तरगवाक्षचलिततरुणीकटा-

---

(त) पारजनेति परिजनाचारे भृत्यकृत्ये निरतेन भरतेन उद-स्तम् उद्धृतं मणिविमलं मुक्तातपत्रं मौक्तिकखचितशोभितम् आतपत्रं छत्रं यस्य तादृशः ।

(थ) विचित्रेति विचित्रेण उपजातेन कल्पितेन मनुजवेषेण मनुष्यनेपथ्येन चारवः मनोहराः तैः ।

(द) आरूढेति आरूढाः शताङ्गाः रथाः मातङ्गा हस्तिनश्च यैः तथोक्तैः ।

(ध) आशरप्लवङ्गपतिभिः राक्षसवानरपतिभिः ।

(न) प्रवर्त्यमानेति प्रवर्त्यमानः शेषाक्षतकुसुमलाजोपचारः शेषा निर्माल्यानि अक्षतानि आतपतण्डुलाः कुसुमानि पुष्पाणि लाजाः माङ्गलिकद्रव्यभेदा एव उपचाराः आचाराः याभिः तथोक्तानां पौर-पुरन्ध्रीणां पुरनारीणां कदम्बस्य समूहस्य सौरभम् आनन्दो यस्याः तथोक्ताम् ।

(प) चलितेति चलितेन चञ्चलेन मञ्जुना मनोहरेण मञ्जीरेण नूपुरेण मणिकाञ्चीवलयेन रत्नमयरशनामण्डलेन वाचाटितं मुखरं दशानां दिशाम् अन्तरम् अभ्यन्तरं यस्याः तथोक्ताम् ।

(फ) वाद्यमानेति वाद्यमानानां ताड्यमानानां माङ्गलिकानां भेरी-मृदङ्गशङ्खादिकानां विविधस्य आरवस्य शब्दस्य श्रवणसमये उच्चलि-

च्चलेखानीलोत्पलस्रग्दामतोरणाभिराममरथ्यां (ब) तथाविधा-
मयोध्यामाजगाम रामचन्द्रः।
राज्यं स्वं समुपेयिवान् सविनयैरासेवितो भ्रातृभिः
सुग्रीवप्रमुखानपि प्रियसखान् स्वे स्वे पदे स्थापयन्।
स्वच्छन्दः सुचिरं सुखान्यनुभवन् देव्या तया सीतया
रामः पालयति स्म कीर्त्तिविभवैरामोदिनीं मेदिनीम्। १०९
कीलालाख्यमहाग्रहारमहिताकल्पेन सख्यावतां
मूर्द्धन्येन विशारदेन विधुना श्रीसोमनाथोद्ध्ये।

---

तानां समन्ततः प्रचलितानां सामोदानां समुल्लसितानां पौराणां सम्बाधः सङ्घर्षः यस्यां तथाविधाम्।

(ब) सौधेति सौधानां अन्तरगवाक्षेभ्यः हर्म्याभ्यन्तरवातायनेभ्यः चलितानि तरुणीनां युवतीनां कटाक्षलेखाः कटाक्षराजयः एव नीलोत्पलानि तेषां दाम माला एव तोरणानि तैः अभिरामा मनोहारिणी रथ्या राजमार्गः यस्याः तथोक्ताम्।

राज्यमिति। रामः स्वं राज्यं समुपेयिवान् सम्प्राप्तः सविनयैः भ्रातृभिः आसेवितः सम्यक् परिचरितः सुग्रीवप्रमुखान् प्रियसखान् प्रियान् सुहृदः स्वे स्वे पदे राज्ये स्थापयन् स्वच्छन्दः सकामः तया देव्या सीतया सह सुखानि अनुभवन् तथा कीर्त्तिविभवैः यशोराशिभिः आमोदिनीं सौरभवतीं मेदिनीं पृथ्वीं सुचिरं पालयति स्म। शार्दूलविक्रीडितं वृत्तम्॥१०९॥

कीलालेति। कीलालम् आख्या नाम यस्य तथाभूतः यः महान् अग्रहारः ब्रह्मचारिणे समावर्त्तनानन्तरं राज्ञा तद्वृत्त्य-

प्रभोजोदितपञ्चकाण्डसहितानन्दे प्रबन्धे
काण्डो निर्मित एकचूतपतिना षष्ठोऽपि जीय

इति श्रीलक्ष्मणकविविरचिते चम्पूरामाय

युद्धकाण्डं समाप्तम् ।

---

र्थम् अर्थो दीयमानवस्तुविशेषः तेन सहितः प्रशमितः आकल्पः शासनेन तादृशेन ब्रह्मोत्तरभूमिजीविकेनेति भावः, सङ्ख्यावता कवीनां, संख्यावान् पण्डितः कविरित्यमरः । मूर्द्धन्येन शिरोमणिना विशारदेन कविना एकचूतपतिना एकचूताख्यग्रामाधिपेन विधुना लक्ष्मणापराख्येनेति भावः श्रीसोमनाथोदये तदाख्ये प्रदेशे इत्यर्थः प्राक् पूर्वं भोजेन उदितं विरचितं यत् पञ्चकाण्डं बालादिसुन्दरान्तमित्यर्थः तेन सहितः जनितः आनन्दो यत्र तादृशे प्रबन्धे रामायणचरितरूपे इति भावः पुनः निर्मितः षष्ठः षष्ठा पूरणः काण्डोऽपि युद्धकाण्डोऽपीत्यर्थः चिरं जीयात् सर्वोत्कर्षेण वर्त्तताम् । शार्दूलविक्रीडितं वृत्तम् ॥११०॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्यविरचिता
चम्पूरामायणयुद्धकाण्डव्याख्या समाप्ता ।

---

समाप्तोऽयं ग्रन्थः ।

क्षलेखानीलोत्पलदामतोरणाभिरामरथ्यां (ब) तथाविधा-
मयोध्यामाजगाम रामचन्द्रः ।
राज्यं स्वं समुपेयिवान् सविनयैरासेवितो भ्रातृभिः
सुग्रीवप्रमुखानपि प्रियसखान् स्वे स्वे पदे स्थापयन् ।
सच्छन्दः सुचिरं सुखान्यनुभवन् देव्या तया सीतया
रामः पालयति स्म कीर्त्तिविभवैरामोदिनीं मेदिनीम् ।१०६
कोलालाख्यमहाग्रहारमहिताकल्पेन सख्यावतां
मूर्द्धन्येन विशारदेन विधुना श्रीसोमनाथोदये ।

---

तानां समन्ततः प्रचलितानां सामोदानां समुल्लसितानां पौराणां सम्बाधः सङ्घर्षः यस्यां तथाविधाम् ।

(ब) सौधेति सौधान्तरगवाक्षेभ्यः हर्म्याभ्यन्तरवातयनेभ्यः चलितानि तरुणीनां युवतीनां कटाक्षलेखाः कटाक्षराजय एव नीलोत्पलानि तेषां दाम माला एव तोरणानि तैः अभिरामा मनोहारिणी रथ्या राजमार्गः यस्याः तथोक्ताम् ।

राज्यमिति । रामः स्वं राज्यं समुपेयिवान् सम्प्राप्तः सविनयैः भ्रातृभिः आसेवितः सम्यक् परिचरितः सुग्रीवप्रमुखान् प्रियसखान् प्रियान् सुहृदः स्वे स्वे पदे राज्ये स्थापयन् सच्छन्दः सकामः तया देव्या सीतया सह सुखानि अनुभवन् तथा कीर्त्तिविभवैः यशोराशिभिः आमोदिनीं सौरभवतीं मेदिनीं पृथ्वीं सुचिरं पालयति स्म । शार्दूलविक्रीडितं वृत्तम् ॥१०६॥

कोलालेति । कोलालम् आख्या नाम यस्य महान् अग्रहारः ब्रह्मचारिणे समावर्त्तनानन्तर

प्रभोजोदितपञ्चकाण्डमहितानन्दे प्रबन्धे पुनः
काण्डो निर्मित एकचूतपतिना षष्ठोऽपि जीयाच्चिरम् ॥११०॥

इति श्रीलक्ष्मणकविविरचिते चम्पूरामायणे
युद्धकाण्डं समाप्तम्।

---

डम् अर्घ्ये दीयमानवस्तुविशेषः तेन मण्डितः प्रथमितः व्याकल्प-शास्त्रस्य ऊहेन अष्टोत्तरभूमिजोविकेनेति भावः, सख्यावता कवीना, सख्यावान् पण्डितः कविरित्यमरः। मूर्द्धन्येन शिरोमणिना विद्यारदेन कविना एकचूतपतिना एकचूताख्यग्रामाधिपेन विभुना लक्ष्मणापराख्येनेति भावः श्रीसोमनाथोदये तदाख्ये प्रदेशे इत्यर्थः प्राक् पूर्वं भोजेन उदितं विरचितं यत् पञ्चकाण्डं बालादिसुन्दरान्तमित्यर्थः तेन मण्डितः जनितः आनन्दो यत्र तादृशे प्रबन्धे रामायणचरितरूपे इति भावः पुनः निर्मितः षष्ठ षष्ठ्या पूरणः काण्डोऽपि युद्धकाण्डोऽपीत्यर्थः चिरं जीयात् सर्वोत्कर्षेण वर्त्तताम्। शार्दूलविक्रीडितं वृत्तम् ॥११०॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता
चम्पूरामायणयुद्धकाण्डव्याख्या समाप्ता।

---

समाप्तोऽयं ग्रन्थः।